THE

# KĀSHI SANSKRIT SERIES

## 91.

( Vyākaraṇa Section, No. 11 )

THE

# VAIYĀKARAṆA SIDDHĀNTA CHANDRIKĀ

*By*

**RĀMĀS'RAMA**

*With*

*The Subodhinī Commentary by Sadānanda*

*&*

*The Tattvadīpikā Commentary, by Lokes'akara*

EDITED WITH

THE AVYAYĀRTHAMĀLĀ & NOTES

By

KĀVYA-VYĀKARAṆA TĪRTHA

*Pandit S'rī Navakishora Kara*

*Kāvya Sâhitya S'âstrâchârya Nyâya Vais'es'ika Vedânta S'astri.*

**( PART I )**

PRINTED PUBLISHED & SOLD BY

JAYA KRISHNA DAS HARIDAS GUPTA

*The Chowkhamba Sanskrit Series Office,*

*Vidya Vilas Press, Benares City.*

Second Editon ] [ 1945.

काशी–संस्कृत–सीरिज़ग्रन्थमाला

९१

व्याकरणविभागे (११) एकादशपुष्पम् ।

पदवाक्यप्रमाणपण्डितश्रीरामाश्रमप्रणीता पाणिनिप्रणीतसूत्राणां वृत्तिर्नाम

# वैयाकरण-सिद्धान्तचन्द्रिका

श्रीमत्पण्डितसदानन्दकृतसुबोधिन्या श्रीमद्रामकरपौत्र-
श्रीक्षेमकरसूनु–श्रीलोकेशकरकृततत्त्वदीपिकया
व्याख्यया च सहिता ।

सा च

पण्डितप्रवरश्रीविम्बाधरकरव्याकरणसांख्यवेदान्ततीर्थचरणसेवकेन करशर्मो-
पाधिकेन कवितार्किकवैयाकरणश्रीनवकिशोरशास्त्रिणा निर्मितया
चक्रधराख्यटिप्पण्या अन्वयार्थमालया चालङ्कृता ।

[ पूर्वार्द्धम् ]

प्रकाशकः

जयकृष्णदास–हरिदास गुप्तः,

चौखम्बा संस्कृत सीरिज़ आफिस,

बनारस सिटी ।

द्वितीयसंस्करणम् ] [ वि० संवत् २००२

# भूमिका

यदम्बुसङ्गात्त्रिजगत्पवित्रितं विशेषजन्मार्जितकल्मषाकुलम् ।
स्वयंभुवः शीर्षनिवासिनी चिरं पुनातु मे विष्णुपदी सदा गिरम् ॥१॥

जगत्पारावारे जननमरणग्राहनिकरैः कुकर्मव्यूहानां परिणतिवशादन्तिकगतैः ।
धृतानां जीवानामथ विधिनिषेधात्मगहना परेशोक्तिः पुण्या भवति खलु निःश्रेयसकरी ॥२॥

तदर्थव्याख्यायै धृतपरिकरो वैदिकगणस्त्रिलोक्याः कल्याणं व्यतत निगमादेः प्रणयनात् ।
क्रियासौकर्य्यं हि स्वपरजनसाधारणकृते सतामात्मज्ञानां प्रभवति विधिः प्राकृत इति ॥३॥

ननु तदर्थव्याख्यार्थं केन केन वा किं किं प्रोक्तमित्युच्यते—

श्रीनारदादिमुनिभिः स्वरवर्णभेदो दात्तानुदात्तसमवृत्ततिप्रयुक्ता ।
पाठप्रकारकथनेन समं प्रणीता शिक्षा धरातलमलङ्कुरुतेऽनवद्या ॥४॥

बौधायनेन विदुषा मुनिपुङ्गवेनाऽऽपस्तम्बनामयतिनाऽऽत्मविदां वरेण ।
वेदोक्तमन्त्रविनियोगपथप्रदर्शी ग्रन्थः कृतोऽस्ति नितरां भुवि कल्पनामा ॥५॥

यास्केन वैदिकवरेण निरुक्तमुक्तं वेदस्थशब्दनिवहार्थविनिर्णयाय ।
श्रीपिङ्गलेन विबुधेन महर्षिणा च छन्दःस्वरूपमखिलं व्यरचि स्वतन्त्रम् ॥६॥

अर्केन्दुभादिमहसामवलम्बनेन स्वाध्याययागविधिकालविनिश्चयाय ।
प्रोवाच नातिविततं लगधो विधिज्ञस्तन्त्रं हिताय जगतां किल गाणितं तत् ॥७॥

वेदस्याङ्गं प्रधानं मुखमिव निखिलज्ञानराशेर्निदानं
वाचां व्युत्पादकं व्याकरणमतिशयं क्षेमदं पण्डितानाम् ।
शास्त्रारण्येऽप्यगम्ये कथमपि चलितुं तद्विहीनस्य पुंसः
सामर्थ्यं नैव कस्यापि भवति नितरां पाठ्यमेतत्सदैव ॥८॥

प्रथमं के प्रसिद्धा व्याकरणकर्त्तारो बभूवुरित्युच्यते—

"इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः । पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः ॥"

कतिविधानि तानि प्रसिद्धानि च ? इत्युच्यते—

"ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम् । सारस्वतं चापिशलं शाकलं पाणिनीयकम् ।"

इति तत्त्वनिधावुक्तेनैवविधं तत्प्रसिद्धम् ।

तेषु मध्ये केयं सिद्धान्तचन्द्रिकेत्युच्यते—

सारस्वतीयसूत्राणामपरा वृत्तिरस्ति या । रामाश्रमकृता रम्या सा हि सिद्धान्तचन्द्रिका ॥९॥

सिद्धान्तचन्द्रिकाग्रन्थे द्वे टीके स्तो मनोहरे ।
एका सुबोधिनी नाम्ना तदन्या तत्त्वदीपिका ॥१०॥
प्राच्यपुस्तकमतान्तरगर्भा पाठभेदसहिता सुगमात्र ।
टिप्पणी कथितचक्रवराख्या योजिता सकलबालहिताय ॥११॥
यदत्र विकलं चासीत् प्रक्रियायां विशेषतः ।
पाणिनीयादिपद्धत्या पूरितं तत् विभाव्यते ॥१२॥
काशीसंस्कृतसीरिजादिसकलग्रन्थप्रकाशेन यः प्राप्तो भूसुरसेवयात्र विमलां कीर्तिं विदेशे तथा ।
श्रीलक्ष्मीहरिदासगुप्ततनयो धीमानिदं पुस्तकं धीरः श्रीजयकृष्णदास इति नामासावमुद्रापयत् ॥१३॥
हे माननीयविबुधाः ! कृतशास्त्रवर्षाः ! यद्यत्र लेखनगता मम दोषसंधाः ।
जाता भवद्भिरनिशं परिमार्जनीयाः दोषान्हरन्ति महतामपि ये हि दुष्टाः ॥१४॥

विदुषामनुचरः—

क्रशर्मोपाधिकः--श्रीनवकिशोरशास्त्री ।

---

## सिद्धान्तचन्द्रिकापूर्वार्द्धगतप्रकरणानां सूची ।



# वैयाकरण-
# सिद्धान्तचन्द्रिका

## सटिप्पण-सुबोधिनी-तत्त्वदीपिकाव्याख्यासंवलिता ।

## [ पूर्वार्द्धम् ]

श्रीगणेशाय नमः ।

नमस्कृत्य महेशानं मतं बुद्ध्वा पतञ्जलेः ।
वाणीप्रणीतसूत्राणां कुर्वे सिद्धान्तचन्द्रिकाम् ॥ १ ॥(क)

### सुबोधिनी-

पुराणपुरुषं ध्यात्वा नत्वा चार्हन्तनायकम् ।
सिद्धान्तचन्द्रिकावृत्तिं चर्करीमितरामहम् ॥ १ ॥
विद्यारत्नपयोनिधौ स्वरतराम्नाये जगत्पूज्यके
श्रीभट्टारकसंपदं गुणगणैः स्तुत्यां धरन्पुण्यवान् ।
पूज्यश्रीजिनभक्तिसूरिरधिपो वर्वर्ति विद्यानिधिः
सोऽयं शीतकरायते च यशसा सूरायते तेजसा ॥ २ ॥
श्रीकीर्तिरत्नः सूर्याह्वो यतीन्द्रोऽभूत्तरां ततः ।
श्रीमत्सुमतिरङ्गाख्यः पाठकप्रवरस्ततः ॥ ३ ॥

---

(क) यं चिन्तयन्ति यतयो भवलङ्घनाय, भुक्त्यैकगम्यमनघं विगताभिलाषाः ।
भक्तेष्टसाधनजनुस्तनुधीषणस्य भ्रान्तिं ममापनुदतां त्रिपुरान्तकोऽसौ ॥ १ ॥
जननीं जनकं ध्यात्वा दुर्गां विम्बाधरं तथा ।
विद्वासं विदुषीं काश्यां कुर्वे टिप्पणकं मुदा ॥ २ ॥

अथ श्रीमद्रामाश्रमाचार्य्योऽधिकारिविषयसम्बन्धप्रयोजनानि सूचयन्मङ्गलाचरणमुखेन पद्यं निबध्नाति-**नमस्कृत्येति** ।

तथाहि-वाणीप्रणीतसूत्राणां सिद्धान्त इति सूत्रार्थबलाद्वैयाकरणसिद्धान्ताः प्रतिपाद्यत्वेन विषयाः । अनायासेन तदवगमः प्रयोजनम् । तस्य ग्रन्थस्य च जन्यजनकभावः सम्बन्धः सिद्धान्तजिज्ञासुरधिकारी ।

**मतं बुद्ध्वा पतञ्जलेरिति** । एतेनास्य व्याकरणस्य प्रयोगसाधनपद्धतयो महाभाष्यसरण्येति ध्वन्यते, अपि च भाष्यविरुद्धा ये प्रयोगास्ते चात्र न निवेशिताः । यथा वत्सार्णमित्यादय इति ॥

श्रीपाठकाः श्रीसुखलाभसंज्ञा जगत्प्रभावा विलसत्प्रतिज्ञाः ।
तच्छिष्यवर्याः कृतिराजिधुर्याः श्रीपाठकाः पाठकवारणेन्द्राः ॥ ४ ॥
श्रीभागचन्द्रा गणिसंप्रवर्हाः संवेगरङ्गाङ्गनिमग्नगात्राः ।
श्रीभक्तिपूर्वं विनयं हि येषां तन्नामधेयं गुरवो वदन्ति ॥ ५ ॥
तेषां हितेषां विनयप्रधानोऽनवद्यविद्याभ्यसनैकतानः ।
प्राज्ञः सदानन्दगणिः सुशिष्यः सुबोधिनीं संविदधाति वृत्तिम् ॥ ६ ॥

ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते च मङ्गलमाचरणीयमिति शिष्टाचारः। तत्र मङ्गलं त्रिविधम् । आशीर्वादात्मकं नमस्कारात्मकं वस्तुनिर्देशात्मकं चेति (क) अथ ग्रन्थादौ ग्रन्थकर्ता रामाश्रमो नमस्कारात्मकं मङ्गलं शिष्यशिक्षार्थं निबध्नाति ॥ नमस्कृत्येति। अहं सिद्धान्तचन्द्रिकां कुर्वे । प्रमाणेन प्राप्तोऽर्थः सिद्धान्तः (ख) 'षिधू शास्त्रादौ' अस्माद्गत्यर्थादिति क्तः । सिद्धो निष्पन्नोऽन्तो निश्चयोऽत्रेति सिद्धान्तः । सिद्धान्ते चन्द्रिकेव चन्द्रिका, शाकपार्थिवादित्वान्मध्यमपदलोपः, सिद्धान्तचन्द्रिका ताम् । चन्द्र-ज्योतिरिव प्रकाशिकामित्यर्थः। सकलजनाह्लादकत्वसाम्येन चन्द्रिकाशब्दप्रयोगः। चन्द्रोऽ-स्त्यस्यामिति चन्द्रिका । 'अहकौ च मत्वर्थे' इति इकः । चन्द्रं कायति प्रतिपादयतीति वा चन्द्रिका । आतो डः । चन्द्रमाचष्टे इति वा चन्द्रिका । ण्यन्ताद्वुञ् । "चन्द्रिका कौमुदी ज्योत्स्ना" इत्यमरः ॥ कुर्वे इति लट् उत्तमपुरुषस्यैकवचनम्। आख्यातप्रत्ययस्तु कर्तर्यस्ति । कर्तुराख्यातेनोक्तत्वादाख्यातवाच्यकारकवाचकः प्रथमान्तोऽहमिति कर्ता संगृ-ह्यते । कुर्वे इत्यत्र 'य्वोर्विहसे' इति दीर्घस्तु न भवति कुरुच्छुरोर्नेति निषेधात् ॥ ननु करि-ष्यमाणायाश्चन्द्रिकायाः कथं कुर्वे इति वर्तमाननिर्देशः । उच्यते । वर्तमानसमीपे भूते भविष्यति चेति भविष्यदर्थे लट् । केषां सिद्धान्त इत्यत आह । वाणीप्रणीतसूत्रा-णामिति । वाण्याप्रणीतानि वाणीप्रणीतानि वाणीप्रणीतानि सूत्राणि वाणीप्रणीतसूत्राणि तेषाम् । 'वण शब्दे' पचाद्यः । वणो ब्रह्मा 'देवतेदमर्थे' इत्यण् । ततो नृञ् ईबितीप् । वाणी । 'वाणयति प्रेरयति जीवानिति ण्यन्तात्पचाद्यः । नद्यादेरितीब्वा । 'गीर्वाग्वाणी

(क) ननु 'मङ्गलमाचरणीयमिति, शिष्टाचारेऽपि किं तस्य फलमिति चेदुच्यते, विघ्नध्वंस इति। न च समाप्तिरेव फलं किमिति नोपेयते,मङ्गलं विनापि नास्तिकादिग्रन्थपरिसमाप्तिप्रदर्शनात्, कृतमङ्गलाच-रणस्यापि ग्रन्थस्य कचित् समाप्त्यदर्शनात् व्यभिचारात् समाप्तिं प्रति तस्य हेतुत्वासम्भव इति चेन्न, यत्र हि कृतेऽपि मङ्गले न समाप्तिस्तत्रागत्या विघ्नप्राचुर्यं कल्प्यते, यत्र च मङ्गलं विनापि समाप्तिस्तत्र जन्मान्तरी-यमेव मङ्गलं कल्प्यते इति वाच्यम्, विघ्नध्वंसद्वारा मङ्गलस्य समाप्तिं प्रति हेतुत्वकल्पनामपेक्ष्य विजातीय-विघ्नध्वंसं प्रत्येव तस्य हेतुत्वकल्पनाया लाघवादावश्यकत्वात् न्याय्यत्वाच्च । यत्र दुरदृष्टमेव नास्ति तत्र मङ्गलस्यादृष्टजनकस्यैव स्वीकारात् । भवन्मतेऽपि विघ्नध्वंसद्वारा तत्र तस्य हेतुत्वसम्भवाच्च। आशु विना-शिनो मङ्गलस्य समाप्तिं प्रति साक्षाद्धेतुत्वासम्भवेन विनिगमनाविरहस्यासम्भवाच्च। कृतमङ्गलस्य ग्रन्थस्य क्वचिदसमाप्तिश्च बुद्धिप्रतिभादिकारणान्तरविरहादेव। नास्तिकादीनां च समाप्तिप्रतिबन्धकीभूतदुरदृष्टमेव न कल्पते इति सर्वं सुस्थमधिकमन्यत्रानुसन्धेयम् ।

(ख) प्रमाणपदेन केषां मते चतुर्विधं केषांचिन्मते तदधिकं प्रत्यक्षानुमानोपमानशब्दादीति। किन्त्वत्र व्याकरणतन्त्रे भाष्यं वार्तिकं सूत्रं चेति प्रमाणमागमप्रमाणान्तर्गतमेव तेन प्राप्तोऽर्थः सिद्धान्तः। शा-स्त्रितार्थनिश्चय इत्यर्थः ।

सरस्वती" इत्यमरः। नियः कर्मणि क्तः। 'सूत्र वेष्टने' चुरादिः। सूत्रयन्ति बहूनर्थानल्पाक्षरैरिति सूत्राणि (क)। पचाद्यच्। किं कृत्वा। महेशानं नमस्कृत्य। महांश्चासावीशानश्चेति महेशानः शम्भुस्तम्। सहादित्वान्महच्छब्दस्य महादेशः। ईष्टे इतीशानः। कर्तरि शानः॥ नमस्कृत्येति॥ पूर्वकाले क्त्वेति क्त्वास्थाने समासे क्यबिति भावे क्यप्। वाचस्पत्यादित्वाद्विसर्गस्य सः। महेशानमिति। अनुक्तत्वात्कर्मणि द्वितीया। एककर्तृकयोर्द्वयोः कृत्ययोः कर्तरि प्रथमाऽस्ति। विशेष्यया आख्यातक्रियया कर्तुरुक्तत्वात्। 'गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः' इति न्यायादाख्यातक्रियया कर्तुरभिसंबन्धः॥ ननु महेशानमित्यत्र 'नमआदियोगे' इति चतुर्थी स्यात्। मैवं वद। नमस्करोति देवानित्यत्रेव द्वितीयैव युक्ता। 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इत्युक्तत्वात्। स्वयंभुवे नमस्कृत्येत्यत्र तु स्वयंभुवमनुकूलयितुमित्यर्थविवक्षायां 'तुमोऽप्रयुक्तस्य कर्मणि' इत्यनेन चतुर्थी। किं च जहत्स्वार्थावृत्तिपक्षे नमःशब्दस्यात्र निरर्थकत्वान्नमोयोगे चतुर्थी न भवति 'अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्' इत्युक्तत्वात् (ख)। पुनः किं कृत्वा। पतञ्जलेर्मतं बुद्ध्वा ज्ञात्वा। पतञ्जलिना मन्यते यत्तन्मतम्। 'मतिबुद्धि' इति वर्तमाने कर्मणि क्तः। वर्तमानाधारार्थस्य क्तस्य इत्यनेन पतञ्जलेरिति कर्तरि षष्ठी। 'बुध अवगमने' भावे क्त्वाप्रत्ययः। पतन्तोऽञ्जलयो यस्मिन् स पतञ्जलिः शेषनागः। तस्य पतञ्जलेः। 'हलादेरीषादौ' इति टिलोपः। किंच "आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः॥ प्रथमं छन्दसामङ्गमाहुर्व्याकरणं बुधाः॥ १॥अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम्॥ तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते"॥२॥ इत्युक्तत्वात्सर्वत उत्तमं व्याकरणम्। तद्व्याकरणं सूत्रम्, सूत्रव्याख्यानम्, वाक्याध्याहारः, उदाहरणम्, प्रत्युदाहरणं चेति समुदितं भवति। तस्यैकदेशः सूत्रम्। तद्व्याख्यानं पञ्चधा। यथा—'पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना। आक्षेपस्य समाधानं व्याख्यानं पञ्चधा स्मृतम्' इति॥

## तत्त्वदीपिका।

प्रणम्य जगतां नाथं महेशं साम्बमव्ययम्॥
सिद्धान्तचन्द्रिकाव्याख्या क्रियते तत्त्वदीपिका॥ १॥

प्रारिप्सितनिरन्तरायपरिसमाप्तये विहितं मङ्गलं शिष्यशिक्षायै निबध्नन् चिकीर्षितं प्रतिजानीते। नमस्कृत्येत्यादिना॥ अहं रामचन्द्राश्रमः वाणीप्रणीतसूत्राणां सिद्धान्तचन्द्रिकां कुर्वे। किं कृत्वा। महेशानं नमस्कृत्य। पुनः पतञ्जलेर्मतं बुद्ध्वेत्यन्वयः। नमो नतिं कृत्वा इति नमस्कृत्य। कृञः 'समासे क्यप्' इति पूर्वकाले क्यप्। ह्रस्वस्येति तुक्। वाचस्पत्यादित्वाद्विसर्गस्य सः। नतिजन्यप्रीत्याश्रयत्वेन महेशानस्य कर्मत्वम्। ईष्टे इति ईशानः। ईश ऐश्वर्ये। शतृशानाविति शानप्रत्ययः। शिति चतुर्वदिति चतुर्वत्त्वादप् कर्तरीत्यप्। तस्यादादेरिति लुक्। ईशानाः सातिशयाः बहवः सन्ति तद्व्यावृत्त्यर्थं विशेषणं महांश्चासावीशानश्चेति महेशानः। सहादित्वान्महत आत्वम्। सर्वापेक्षयोत्तमो यः

(क) तदुक्तम्–'लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च, सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः।
'अल्पाक्षरमसन्दिग्धं सारवद्विश्वतो मुखं। अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः' इति च।
(ख) शक्यावृत्तिधर्मावच्छिन्नलक्षणा जहत्स्वार्था।

परमेश्वरस्तम् । अनेन व्याकरणस्य सिद्धान्तः सूचितः । ध्वनिविशेषावच्छिन्नं ब्रह्मैव प्रतिपाद्यमिति । मन्यते इति मतम् । मतिबुद्धिपूजार्थेभ्यश्चेति वर्तमाने मन्यतेः कर्मणि तक् । इच्छाविषयभूतं ज्ञानविषयभूतं वा बुद्ध्वा ज्ञात्वेत्यर्थः । बुध अवगमने । पूर्वकाले क्त्वा । पूर्वकालत्वञ्च क्त्वाल्यपोः कुर्वेक्रियापेक्षया । खले कपोतन्यायेन द्वयोस्तत्र सम्बन्धः (क)। विशेषणानां परस्परं संबन्धानभ्युपगमात्, आख्यातान्तवाच्यायाः क्रियाया विशेष्यत्वस्वीकारात् । पतन्नञ्जलिर्यस्मिन् सर्वेषां नमस्कार्यत्वात् पतञ्जलिः तस्य पतञ्जलेरिति । मननक्रियाऽपेक्षया कर्तृकार्ययोरिति कर्तरि षष्ठी । न क्तादाविति निषेधः क्तस्य स निषेधो न तु तकः । अनेन प्रक्रियामात्रं दृष्ट्वाऽयं ग्रन्थो न द्रष्टव्यः, किन्तु भाष्यपर्यन्तं ज्ञात्वेति सूचितम् । वणति वेदशब्दमुच्चारयति इति वणो ब्रह्मा । 'वण शब्दे' पचाद्यः । तस्येयं शक्तिर्वाणी सरस्वती । 'देवतेदमर्थे' इत्यण् । ङ्ण ईप् । यद्वा वाणयति सर्वान् जीवान् शब्दोच्चारणे प्रेरयतीति ण्यन्तात्पचाद्यः । नद्यादेरितीप् । प्रणीयन्ते इति प्रणीतानि । णीञः कर्मणि क्तः । वाण्या प्रणीतानि वाणीप्रणीतानि । अमादाविति तत्पुरुषः । सोव्यन्तेऽन्तर्भाव्यन्ते अस्मिन्नर्था यैस्तानि सूत्राणि । षिवु तन्तुसन्ताने । सिवेरुच्चेत्यौणादिकष्ट्रप्रत्ययः । यद्वा सूत्रयन्ति वेष्टयन्ति अल्पाक्षरैर्बहूनर्थानिति सूत्राणि । 'सूत्र वेष्टने' चुरादिः । पचाद्यः । अल्पाक्षरैर्बह्वर्थसूचकानि । वाणीप्रणीतानि च तानि सूत्राणि चेति कर्मधारयस्तेषाम् । संबन्धसामान्ये षष्ठी । कुर्वे इति कृञो वर्तमाने ञित्वादात्मनेपदम् । उत्तमपुरुषस्यैकवचनम् । तनादेरुप् । गुणः । ङित्यदुरित्युत्वम् । य्वोर्विहस इति दीर्घस्तु न संभवति संज्ञापूर्वकत्वात् । संज्ञापूर्वको विधिरनित्यः । द्विमात्रो दीर्घ इति संज्ञा । असेधीदिति सिद्धः । षिधू शास्त्रादौ । गत्यर्थेति क्तः । सिद्धो निष्पन्नोऽन्तो निश्चयोऽत्रेति सिद्धान्तः । अन्यार्थे बहुव्रीहिः । चन्द्रोऽस्त्याश्रयत्वेनास्या इति चन्द्रिका । अद्दकाविती कः । सिद्धान्तानां चन्द्रिका सिद्धान्तचन्द्रिका । सा यथा कुमुदानां प्रकाशिका तथेयं सरस्वतीसूत्रार्थप्रकाशिकेति सादृश्याद्गौणप्रयोगः । सिद्धान्तशब्दः सम्बन्धित्वात्सूत्राणामिति विशेषणसापेक्षोऽपि चन्द्रिकाशब्देन समस्यते । देवदत्तस्य गुरुकुलमित्यत्र गुरुशब्दो यथा । एतेन पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति नियमात्सूत्रशब्दस्य कथं सिद्धान्तशब्देनान्वय इत्युक्तिः परास्ता । वस्तुतस्तु साकाङ्क्षत्वनिराकाङ्क्षत्वे एवान्वयानन्वयप्रयोजके न तु पदार्थत्वतदेकदेशत्वे । ननु नमस्कृत्य महेशानमित्यत्र नमःआदियोगे चतुर्थीति सूत्रेण चतुर्थ्या भवितव्यमिति चेन्न, उपपदविभक्तेः कारकविभक्तिर्बलीयसीति वचनात् द्वितीयैव । अथ कथं स्वयंभुवे नमस्कृत्येति चतुर्थीति चेत्स्वयंभुवमनुकूलयितुमित्यर्थे तुमोऽप्रयुक्तस्य कर्मणीति कर्मणि चतुर्थीदर्शनादित्यवेहि । यत्तु कुर्वे इत्यत्र आत्मगामिफलाभावात्कथमात्मनेपदमित्याशङ्क्य ग्रन्थकरणोत्पन्नपुण्यस्य दानफलवदात्मगामित्वात्मनेपदमिति समाहितं तन्न, आत्मगामि चेत्फलमात्मनेपदं परगामि चेत्फलं परस्मैपदमित्यस्या सार्वत्रिकत्वात् । तथा च मयूरभट्टः 'कमलवनोद्घाटनं कुर्वते ये ।' मयूखा इति शेषः । कमलवनोद्घाटनरूपफलस्य कर्तृभूतमयूखगामित्वेपि कुर्वत इत्यात्मनेपदमुदाजहार ॥ १ ॥

(क) न्यायो यथा—वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत्पतन्ति।
तथैव सर्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्तीति ॥

# अथ संज्ञाप्रकरणम् ॥ १ ॥

( **अइउऋऌ समानाः** ) अनेन क्रमेणैते वर्णा ज्ञेयाः । ते च समानसंज्ञाः स्युः ॥ नैतेषु सूत्रेषु संधिरनुसंधेयोऽविवक्षितत्वात् । विवक्षितस्तु संधिर्भवतीति नियमात् ॥ १ ॥

( सु० ) अइउऋऌ समानाः । संज्ञासूत्रमिदम् । आद्यन्ताभ्यामित्यनेन संज्ञाविधायकसूत्रेण सहैकवाक्यत्वात् । तेनावेल इत्यादिप्रत्याहारसंज्ञा सिध्यति । अत्राकारादिष्वर्थवत्सु सत्स्वपि स्वरूपग्रहणस्येष्टत्वेनार्थवत्त्वस्याविवक्षितत्वमस्ति । अर्थवत्त्वाभावान्न प्रातिपदिकसंज्ञा (क) । प्रातिपदिकत्वाभावान्न स्यादिविभक्त्युत्पत्तिः । अविभक्तिकानां समासो न भवति पदानामेव समास इत्युक्तत्वात् । समासाभावाद्वाक्यमात्रतः साङ्केतिकं षट्पदमिदं सूत्रम् (ख) ॥ ननु संधिः कथं न कृतः । उच्यते । वर्णानामसंदिग्धत्वेन बोधनायाविवक्षितत्वादेतेष्वसंधिः । उक्तं च—"संहितैकपदे नित्या नित्या धातूपसर्गयोः ॥ नित्या समासे वाक्ये तु सा विवक्षामपेक्षते" ॥ १ ॥ इति ॥ संहिताऽत्र संधिः । एकमेव पदमित्येकपदम् , तत्र संहिता नित्या । यथा । देवौ ॥ धातूपसर्गयोरुभयोः संहिता नित्या । प्रेक्ष्यते ॥ समासे संहिता नित्या अवान्तरपदविभागाभावात् समासे ह्येकपदत्वात् । यथा देवेन्द्रः ॥ सा संहिता वाक्ये विवक्षां वक्तुमिच्छामपेक्षते । यथा 'हे रोहिणि त्वमसि शीलवतीषु धन्या एनं निवारय पतिं सखि दुर्विनीतम् ।' इत्यादिषु विवक्षाधिना संहिता ज्ञेया (ग) । तेन वाक्ये विवक्षितः संधिर्भवति न त्वविवक्षित इति ॥ स्वराणां चादिषु पाठान्निपातसंज्ञा । औ निपात इति प्रकृतिभावान्न संधिरित्यन्ये वदन्ति ॥ ननु वर्णात्कारः इत्यनेनैभ्यः कारप्रत्ययः कथं न स्यात् । उच्यते । वार्तिकं दृष्ट्वा सूत्रकृतः प्रवृत्त्यसंभवान्न कारप्रत्ययः । ननु अकाराद्युपदेशेन यथा तत्सवर्णानामाकारादीनां लाभात्पृथगाकारादयो नोपदिष्टास्तथा ऋऌवर्णयोरपि सावर्ण्यात् ऋकारोपदेशेनैवोभयग्रहणसिद्धेः किं पृथगुपदेशः । उच्यते । ऋऌवर्णयोः सावर्ण्यस्यानित्यतां ज्ञापयितुमुभयोरुद्देशः । तत्फलं तु क्लृप्ता शिखा यस्य स क्लृप्तशिखस्तस्य दूरात्संबोधने क्लृप्तशिखेत्यत्र प्लुतभवनम् । ऋऌवर्णयोः सावर्ण्यस्य नित्यत्वे तु गुरोरनृतोऽनन्त्यस्यापीत्यत्रानृत इति निषेधादृकारस्येव ऌकारस्यापि प्लुतो न स्यादित्यर्थः । इदं सूत्रं कार्यद्वयं वक्ति । तत्किम् । अकारादिक्रमं तेषां समानसंज्ञां च । समानं मानं परिमाणं येषां ते समानाः । समानशब्दः संज्ञा । अकारादयः संज्ञिन इति । इह प्रत्येकमकारादीनां संज्ञा न समुदायस्य तस्य युगपल्लक्ष्ये

---

(क) अर्थवत्सु । वासुदेवादिरूपार्थयुक्तेष्वित्यर्थः । न प्रातिपदिकसंज्ञा । न नामसंज्ञा प्रातिपदिकत्वाभावान्न स्यादिविभक्तिरित्यत्र मानं तु 'तस्मात्सि औ जस्' इत्यादि ।

(ख) 'सूत्रे विभक्तिर्नैवास्ति वृत्तौ सा यत्र दृश्यते, एकद्विबहुवाक्येषु तत्साङ्केतिकमुच्यते' । वस्तुतस्तु अनुभूतार्थयोगित्वं साङ्केतिकत्वम् ।

(ग) सम्पूर्णश्लोको यथा—

हे रोहिणि त्वमसि शीलवतीषु धन्या एनं निवारय पतिं सखि दुर्विनीतम् ।
जालान्तरेण मम वासगृहं प्रविश्य श्रोणीतटं स्पृशति किं कुलधर्म एषः ॥ इति ॥

प्रयोगाभावात् । समानसंज्ञाप्रदेशाः समानाद्धेर्लोपो धातोरित्यादयः । किंच एतेषूक्तवक्ष्यमाणेषु सूत्रेषु संधिः संहिता नानुसंधेयो न कर्तव्यः । कस्मात् वक्तुमिच्छा विवक्षा विवक्षा जाताऽस्येति विवक्षितः । वक्तुमिष्टो विवक्षित इति वा । विवक्षितस्य भावो विवक्षितत्वं न विवक्षितत्वमविवक्षितत्वं तस्मादविवक्षितत्वात् वक्तुरनिष्टत्वात् । तथा हि 'वाक्ये तु सा विवक्षामपेक्षते' इति ॥ १ ॥

( त० ) प्रकृतोपयुक्तमाह ॥ **अइउऋऌसमानाः** ॥ अत्र प्राञ्चः । षट्पदमिदम्, *न तु द्विपदम् । द्विपदत्वे हि पूर्वपदं पञ्चवर्णात्मकम् । तथा च समाहारद्वन्द्वः । स च अश्च इश्च उश्च आ च अइउऋऌ । एवं समासे संहिता स्यादिति ।* तथा चोक्तम्—"संहितैकपदे नित्या नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥" इति ॥ समासे वाक्यत्वाभावेन विवक्षाया असम्भवादविवक्षितत्वादित्यादिकमनर्थकं संपद्येत । अतो न द्विपदमित्याहुः । वस्तुतस्तु नैतेषु संधिः सूत्रत्वादित्येव वक्तुमुचितम् । तथा च द्विपदत्वेऽपि न दोषः । उक्तं च–भोभगोअघोअपूर्वस्य योऽशीति पाणिनिसूत्रे असंधिः सौत्रः इति भट्टोजिदीक्षितैः । औ निपात इति सूत्रेण संधिविरहात् । अत्राहुः । अत्राकारादीनां स्वरूपेणानुकार्येण वाऽर्थस्य सतोऽप्यविवक्षणान्नामत्वाभावाद्विभक्त्यनुत्पादादसमासेनैकपदत्वाभावात्पञ्च पदानीति । तत्रेदमवधेयम् । पञ्च पदानीति तावद्व्याहतम् । विभक्तेरनुत्पादेन पदत्वासम्भवात् । विभक्त्यन्तं पदमिति पदसंज्ञाविधानात् । किंतु सूत्रत्वादेव विभक्तेर्लुक् । वर्णपरिगणनस्य संज्ञोपयोगित्वेन तत्पूर्वकं संज्ञाविधानमिति दर्शयति । अनेनेति । अमि पूर्वं इत्यादाविवार्थद्वयकथनेन विभागः ॥ १ ॥

( **ह्रस्वदीर्घप्लुतभेदाः सवर्णाः** ) एतेषां ह्रस्वदीर्घप्लुताः सजातीयाः परस्परं सवर्णा भण्यन्ते (क) ॥ २ ॥

( सु० ) **ह्रस्वदीर्घप्लुतभेदाः सवर्णाः** ॥ एतेषाम् अइउऋऌवर्णानां ये भेदा विशेषव्यक्तयो ह्रस्वदीर्घप्लुतरूपाः सजातीयाः समाना चासौ जातिश्च सजातिः सहादित्वात्समानस्य सादेशः सजातौ भवाः सजातीयास्ते मिथः सवर्णसंज्ञका आचार्येण कथ्यन्ते ॥ ह्रस्वश्च दीर्घश्च प्लुतश्च ते ह्रस्वदीर्घप्लुताः ह्रस्वदीर्घप्लुताश्च ते भेदाश्च ह्रस्वदीर्घप्लुतभेदाः जातिस्थानाभ्यां समानाः वर्णाः सहादित्वात्समानस्य सः ॥ २ ॥

( त० ) **ह्रस्वदीर्घप्लुतभेदा इति** ॥ ह्रस्वश्च दीर्घश्च प्लुतश्च तेषां ये भेदा उदात्तादयस्तेषां सवर्णसंज्ञा इत्यर्थः ॥ ह्रस्वादिभिर्भेदशब्दस्य कर्मधारयो वा । यत्तु वासुदेवेन ह्रस्वादिभेदान्तस्य द्वन्द्वं कृत्वा व्याख्यातं तदसत् । अनन्तरग्रहणस्य वैयर्थ्यप्रसङ्गात् ॥ **एतेषामिति** ॥ अनन्तरोक्तानाम् । अइउऋऌवर्णानामेवाङ्गुल्या निर्देशः । समानो वर्णो येषां ते सवर्णा इत्यन्वर्थसंज्ञाश्रयणात्सजातीया इति । तथा चाकारस्याकारेणैव सावर्ण्यं न तु विजातीयैरीकारादिभिरिति बोध्यम् ॥ ननु अन्वर्थसंज्ञाबलादेवात्र सवर्णसंज्ञासिद्धौ तद्वि-

(क) ननु परिगणितानां पञ्चानामेव समानत्वे गङ्गानामित्यादौ दीर्घवर्णादीनां समानकार्यं न स्यादित्यतः सूत्रान्तरमवतारयति—**ह्रस्वदीर्घप्लुतभेदा इति** । एवञ्च हरये इत्यादौ दीर्घत्वाप्रसङ्गः । समानो वर्णो धर्मो येषां ते सवर्णा इति अन्वर्थसंज्ञातः सजातीया इति लब्धम् । वृद्धकुमारीवरन्यायाद्ध्रस्वादिसंज्ञालाभः ।

धायकं सूत्रं किमर्थमिति चेन्न । सन्ध्यक्षराणामप्यन्वर्थसंज्ञया सवर्णसंज्ञा स्यादिति तन्निरासार्थमिदं सूत्रम् । यदि त्वैऔ इति पृथग्निर्देशो ज्ञापकस्तदेदं मन्दप्रयोजनम् ॥ २ ॥

**( ऋऌवर्णौ च ) एकमात्रो ह्रस्वः । द्विमात्रो दीर्घः । त्रिमात्रः प्लुतः (क) ॥ ३ ॥**

( सुबो० ) **ऋऌवर्णौ च** ॥ जातिस्थानाभ्यां भिन्नत्वेन सावर्ण्याप्राप्तौ विध्यर्थवचनम् । *पदान्तानां समानानामिति प्रकृतिभावः । एतावपि सवर्णसंज्ञकावाचार्येण कथ्येते* । सवर्णसंज्ञाप्रदेशाः सवर्णे दीर्घः सहेत्यादयः ॥ तेषां भेदानाह ॥ **एकमात्रो ह्रस्व इति** ॥ मात्राशब्देनाक्षिस्पन्दनप्रमाणः काल उच्यते । "मात्रं त्ववधृतौ स्वार्थे कात्स्न्र्ये मात्रा परिच्छदे । अक्षरावयवे द्रव्ये मानेऽल्पे कर्णभूषणे ॥ काले वृत्ते च" इति हेमचन्द्रः । एका मात्रोच्चारणकालो यस्य स एकमात्रो ह्रस्वसंज्ञः कथ्यते । ह्रसति ह्रसते वा दीर्घापेक्षयेति ह्रस्वः ॥ द्विमात्रो दीर्घः । द्वे मात्रे उच्चारणकालो यस्य स द्विमात्रो दीर्घसंज्ञः कथ्यते । दृणाति दीर्यते वा मुखमिति दीर्घः । **त्रिमात्रः प्लुतः** ॥ तिस्रो मात्रा उच्चारणकालो यस्य स त्रिमात्रः प्लुतसंज्ञः कथ्यते । प्लवते लङ्घते ह्रस्वदीर्घाविति प्लुतः ॥ ३ ॥

( त० ) **ऋऌवर्णाविति** ॥ ऋ च ऋ च ऋलौ तौ च तौ वर्णाविति । यद्वा ऋ च ऌवर्णश्च तौ ॥ ननु ऋऌवर्णावित्यनेनैव ऋवर्णऌवर्णयोः सावर्ण्यादेव ऋकारोपदेशेनैव ऌकारोपदेशे सिद्धे 'अइउऋऌ समानाः' इति सूत्रे ऌकारग्रहणं व्यर्थमिति चेत्सत्यम् । ऋवर्णऌवर्णयोः सावर्ण्यस्यानित्यत्वज्ञापनाय पृथक् ऌकारग्रहणम् इत्यवधेयम् । तत्फलं तु 'हे क्लृप्तशिख' इत्यत्र 'गुरोरनृतः' इत्यनेन प्लुतत्वे कर्तव्ये ऋकारपर्युदासेन ऌकारस्य न पर्युदासः । ह्रस्वादिसंज्ञाश्च लोकप्रसिद्धा इत्याह ॥ **एकमात्र इति** ॥ मीयते इति मात्रा उच्चारणकालः । एका मात्रा यस्येति विग्रहः । एवमन्यदपि ॥ ३ ॥

**( एऐओऔ संध्यक्षराणि (ख) ॥ ४ ॥**

( सुबो० ) **एऐ ओऔ संध्यक्षराणि** ॥ पूर्ववद्वाक्यत्वात्पञ्चपदमिदं सूत्रम् ॥ अत्रापि संध्यभावोऽविवक्षितत्वात् । इदमपि कार्यद्वयं वक्ति । तत्किम् ॥ एकारादिक्रमं संध्यक्षरसंज्ञां च । संधौ जातान्यक्षराणि संध्यक्षराणि । संध्यक्षरसंज्ञाप्रदेशाः संध्यक्षराणामित्यादयः ॥ ४ ॥

( त० ) **एऐओऔ संध्यक्षराणीति** ॥ ननु सन्धेर्जातान्यक्षराणि सन्ध्यक्षराणीत्यन्वर्थसंज्ञाबलादेव सन्ध्यक्षरसंज्ञासिद्धौ तत्संज्ञाविधायकं सूत्रं व्यर्थमिति चेन्न । यकारादीनामपि सन्धिजत्वाविशेषेण सन्ध्यक्षरसंज्ञा स्यादिति तन्निरासार्थमिदं सूत्रम् । एषु च

---

( क ) तदुक्तम्—"एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते, त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्द्धमात्रकम्" इति ॥ अपि च—' चाषस्तु वदते मात्रां द्वितीयां वायसोऽब्रवीत्। तृतीयान्तु शिखी ब्रूयान्नकुलश्चार्धमात्रकम्" इति ॥ **पाणिनिनाप्युक्तम्**—ऊकालोऽज्झ्रस्वदीर्घप्लुत इति ॥ अयमर्थः—उश्च ऊश्च ऊ ३श्च वः वां काल इव कालो यस्य सोऽच् क्रमाद्ध्रस्वदीर्घप्लुतसंज्ञः स्यादिति । ऊशब्दोऽत्र कुक्कुटरुतानुकरणम्॥

(ख) सन्धेर्जातानीवाक्षराणि सन्ध्यक्षराणीति योगरूढ्या पङ्कजादिवदवयवव्युत्पत्तिसद्भावादन्वर्थता। अतो नाकारादिसंकरः। द्विमात्रत्वेनैषां संध्यक्षराणांह्रस्वाः न सन्ति । किन्तु दीर्घप्लुतोदात्तादयो भेदाः सन्ति ॥

भागद्वयसत्त्वेऽपि नरसिंहवत् जात्यन्तराक्रान्तत्वेन न भागकार्यम् (क) तेनाग्ने इदं 'वायो उदकमित्यत्र सवर्णदीर्घत्वं न । अत्र वर्णपरिगणनसंज्ञाविधानरूपकार्यद्वयस्य वृद्धकुमारीवरन्यायेन सिद्धेर्न वाक्यद्वयम् । एवं पूर्वसूत्रेऽपि बोध्यम् ॥ ४ ॥

**( उभये स्वराः )** अकारादय एकारादयश्च स्वरा उच्यन्ते ॥५॥

**( सु० ) उभये स्वराः ।** *उभाववयवौ येषां ते उभये तयडयटौ सङ्ख्याया अवयवे* इत्ययट् । ''स्वरो नासासमीरे स्यान्मध्यमादित्रिकस्वरे । उदात्तादावकारादौ षड्जादौ च ध्वनौ पुमान् ॥''इत्याद्यकारादिभिन्नार्थान्तरवारणायेदम् (ख) । ह्रस्वदीर्घप्लुता भेदा विशेषव्यक्तयो येषां ते ह्रस्वदीर्घप्लुतभेदाः एतादृशा अकारादय एकारादयश्चाचार्येण स्वरसंज्ञकाः कथ्यन्ते । स्वयं राजन्ते शोभन्ते इति स्वराः । 'राजृ दीप्तौ' अस्मान्नाम्नीति डप्रत्ययः । एकाकिनोऽपि प्रायोऽर्थप्रतिपादने समर्था इत्यर्थः ॥ स्वरा इति बहुवचनं तु प्रत्येकं संज्ञाविधानार्थं ज्ञेयम् । ननु 'उभये' इति ग्रहणं व्यर्थम् । अकारादीनामेकारादीनां चानुवृत्त्यैव लब्धत्वात् । उच्यते । 'अनन्तरस्य विधिर्वा प्रतिषेधो वा' इति न्यायोऽनेन ज्ञाप्यते । अनन्तरत्वादेकारादीनामेवानुवृत्तिः स्यात् न त्वकारादीनामन्तरितत्वादिति । स्वरसंज्ञाप्रदेशाः 'इ यं स्वरे' इत्यादयः ॥ ६ ॥

**(त०) उभय इति ॥** ननु ते स्वरा इत्येव किमिति न सूत्रितम् , तच्छब्दस्य पूर्वपरामर्शित्वेनाकारादीनामेव लाभादिति चेन्न अनन्तरोक्तसन्ध्यक्षराणामेव तच्छब्देन परामर्शः स्यादिति शङ्काया निवृत्तये उभयग्रहणस्यावश्यकत्वात् । यद्वा स्वरा इत्येवास्तु अकारादीनामनुवृत्त्यैव लाभादिति चेन्न उक्तयुक्तेः । यदि तूत्तरसूत्रेऽवर्णपर्युदासेनाकाराद्यनुवृत्तिस्तदोभयग्रहणे सर्वादिप्रयोजनार्थमेवेति ध्येयम् । बहुवचनं प्रत्येकसंज्ञार्थमपि त्यक्तुमुचितं समुदायस्य युगपल्लक्ष्ये प्रयोगाभावादेव तल्लाभात् । एवं पूर्वोत्तरसूत्रेष्वपि बोध्यम् । यत्तु अकारादयः पञ्च चत्वार एकारादय इति तन्न अकारादिषु न्यूनाधिकसंख्याया असम्भवेन तद्ग्रहणस्यानर्थकत्वात् ॥ ५ ॥

**(अवर्जा नामिनः)** अवर्णवर्जाः स्वरा नामिन उच्यन्ते (ग) ॥६॥

---

( क ) एषु संध्यक्षरस्वरेष्वित्यर्थः । भागद्वयसत्त्वेऽपीति । एकारे एकोऽकारभाग एक इकारभागश्च तथैवैकारौकारादिषु । नरसिंहवदिति । कल्पभेदेन नृसिंहशरीरस्य नानात्वेन नरसिंहजातिसिद्धिः । संध्यक्षराणां प्रत्येकं भिन्नतया तथैव जात्यन्तरत्वम् ॥

(ख) अयमत्राशयः—'स्वरो नासासमीरे स्यादिति' कोषप्रमाणेन स्वरशब्दार्थबोधेऽपि बह्वर्थवाचकतया 'उभये स्वराः' इति विशेषं निर्दिश्योक्तम् । तथा चात्र स्वरपदेनाकारादीनां ग्रहणम् । न तु नासासमीरादिरूपस्यार्थस्य ।

( ग ) नन्वत्र किमर्थमवर्जा इत्युक्तम् । उच्यते । अवर्णस्य नामिसंज्ञावारणायेति । अवर्णस्य नामिसंज्ञायां सत्यां को दोष इति चेत् । देव इहेत्यादौ 'नामिनो रः' इति रः स्यात् । अनवकाशेन 'आदवे लोपश्' इति लोपशासौ रत्वविधिर्बाध्यते इति चेत् । कुले इत्यत्र 'नामिनः स्वरे' इति नुम् प्रसङ्गादवर्जा इत्युक्तम् ।

अत्र केचित्-चतुर्दशस्वराः, दश समानाः, द्वादशनामिन इत्याहुः । तदयुक्तम् । उभयशब्दस्य सर्वनामत्वात् तेषां च बुद्धिस्थप्रकारवाचित्वात् पूर्वोक्तसमानसंज्ञकपञ्चवर्णसंध्यक्षरसंज्ञकचतुर्वर्णपरामर्शकत्वेन वृत्तिकृद्व्याख्यानात्, तदभेदनामुपादानाच्चतुर्दशत्वे द्वादशत्वेऽपरभेदपरित्यागे मानाभावात् । तस्मात् पञ्चसमाना नव स्वरा अष्टौ नामिन तत्तद्भेदाश्च तत्तत्संज्ञका । इति प्रसादकृत् ॥

( सु० ) अवर्जा नामिनः ॥ अश्च आश्च तयोः समाहारः अमिति केचित्तन्म-न्दम् । अ इत्यनेनात्वजातेरेवाभिमतत्वात् । अं वर्जयन्तीत्यवर्जाः "वृजी वर्जने" चुरा-दिः । अस्मात् कार्येऽणित्यण्प्रत्ययः । पूर्वसूत्रादुभये इत्यनुवर्तनीयम् । अवर्णवर्जा उभये इकारादय एकारादयश्च स्वरा नामिसंज्ञका आचार्येण कथ्यन्ते ॥ नमनं नामः। भावे घञ् । नामोऽस्यास्तीति नामी । नामिसंज्ञाप्रदेशा 'नामिनो रः' इत्यादयः । किं च स ह्रस्वदी-र्घप्लुतरूपस्वरः प्रत्येकमुदात्तादिभेदेन त्रिधाऽस्ति । ह्रस्वस्वर उदात्तः १ ह्रस्वस्वरोऽनुदात्तः २ ह्रस्वस्वरः स्वरितः ३ । दीर्घस्वर उदात्तः १ दीर्घस्वरोऽनुदात्तः २ दीर्घस्वरः स्वरितः३। प्लुतस्वर उदात्तः १ प्लुतस्वरोऽनुदात्तः २ प्लुतस्वरः स्वरितः ३ । एवं नवविधोऽपि प्रत्ये-कमनुनासिकाननुनासिकभेदाभ्यां पुनः स द्विधाऽस्ति । तदित्थम् । अ इ उ ऋ एषां च-तुर्णां वर्णानां प्रत्येकमष्टादश भेदाः सन्ति । ऌवर्णस्य द्वादश भेदास्तस्य दीर्घाभावात् । सं-ध्यक्षराणामपि प्रत्येकं द्वादश भेदास्तेषां ह्रस्वाभावात् । अ इत्यष्टादशानां संज्ञा । तथैवे-कारोकारौ । ऋकारस्त्रिंशतः संज्ञा ऋऌवर्णयोः सावर्ण्यात् । एवम् ऌकारोऽपि । ए इति द्वा-दशानां संज्ञा । तथैकारोकारौकाराः । एदैतोरोदौतोश्च न मिथः सावर्ण्यं भिन्नजातित्वात् ६

( त० ) अवर्जा नामिन इति ॥ अं वर्जयतीत्यवर्जा । कार्येऽण् ॥ ननु यौ नामिन इत्येव किमिति नोक्तमौ निपात इतिवत् इकारमारभ्य औकारान्तस्य प्रत्याहारेण ग्रहणादवर्णवर्जानां लाभात् । न च इकरौकारयोः संज्ञाशङ्कानिरासाय तदिति चेन्न। पूर्वसू-त्रोक्तस्वरानुवृत्त्या तन्निरासात् इति चेत्सत्यम् । नामिसंज्ञायाः पूर्वं प्रत्याहारसंज्ञाया अनुक्तत्वेन यावित्यनेनेकाराद्यौकारान्तस्वरबोधस्यानुदयात् । यदि तु व्याकरणस्यानादिता-माश्रित्य प्रत्याहारादिसिद्धिस्तदैवमेव न्याय्यमित्यलं पल्लवितेन ( क ) ॥ ६ ॥

## ( हयवरल ॥ ञणनङम ॥ झढधघभ ॥ जडदगब ॥ ख-फछठथ ॥ चटतकप ॥ शषस ॥ ) (ख) ॥ ७ ॥

( सु० ) हयवरल १ ञणनङम २ झढधघभ ३ जडदगब ४ खफछठथ ५ चटतकप ६ शषस ७ एतेऽपि वर्णा उक्तक्रमेणैव ज्ञेयाः । अन्यथा प्रत्याहारासिद्धेः ॥ एतानि नव संज्ञासूत्राणि सन्ति । आद्यन्ताभ्यामित्यनेनैकवाक्यत्वात् । एषां वर्णानामर्थस्याविव-क्षितत्वादेभ्यो विभक्तेरनुत्पत्तिर्ज्ञेया । किं च सवर्णा इत्यनुवर्त्य वाक्यभेदेन व्याख्यातव्यम् ।

---

(क) वस्तुतस्तु यौ नामिन इत्युक्तौ सन्देहो भवति किं 'य' इत्यस्य, अकारादारभ्यौकारान्तरस्य प्रत्या-हारस्य च नामिसंज्ञास्ति, अथवा यथाविहितस्येति भ्रान्तिनिरासाय 'अवर्जा नामिन' इत्युक्तम् ॥

( ख ) हयवरल इत्यादीति । अयं व्यञ्जनानामनुक्रमः । एष्वकार उच्चारणार्थः । अनेन क्रमेणैव, ते वर्णा ज्ञेयाः इहापि पूर्ववद्विभक्त्यनुपपत्तिः॥ माधवस्तु।-इहाप्यर्थस्याविवक्षितत्वाद्विभक्तेरनुत्पत्तिर्लिङ्ग्वा छान्दसः । एवं सर्वत्राप्यविभक्तिको निर्देशो ज्ञेयः,इत्याह-संज्ञासूत्राण्येतानि।आद्यन्ताभ्याम्' इत्यनेनैक-वाक्यत्वात् अवावहवेलेषु ग्रहणमादौ हकारोपदेशस्य फलम् ॥

सारस्वतव्याकरणे उक्तम्-"प्रत्याहाराणां संख्यानियमो नास्तीति ॥ प्रतिकार्यमाहरणात्कार्याणामान न्त्याच्च नियमाभाव इत्यर्थः ॥ केचिदिदमेवं व्याख्यानं चक्रुः—अनियमः आनन्त्यं नास्ति विंशतित्वेन नियमात् । तदुक्तम्-"अवतल एकैकस्माद्द्वाभ्यां मः स्यात्पबौ चतुर्भ्यस्तः ॥ स षड्भ्यः स्यादित्थं प्रत्या-हाराश्च विंशतिर्ज्ञेयाः ॥" इति॥ तथाहि-अस् अव्, छव् , हल् , यम् , अम् , झप् , चप् , खप् , यप् , अव्, हव् , झव् , जव् , झस् , हस् , वस् , रस् , जस् , खस् , इति ॥

तद्यथा । भिन्नजातीया अप्येते वर्णास्तुल्यस्थानप्रयत्नाः सन्तः सवर्णा आचार्येण कथ्यन्ते इत्यर्थः ॥ हकारादिष्वकार उच्चारणार्थः ॥ न तु प्रयोजनार्थः ॥ ननु रेफस्य यप्प्रत्याहारान्तर्भावात् कुण्डं रथेनेत्यादौ वा पदान्तस्येति पक्षे रेफः स्यात् । भद्रहृद इत्यत्र रहाद्यपो द्विरित्यनेन रस्य द्वित्वे कृते रि लोपो दीर्घश्चेति रलोपे च पूर्वस्य हकारस्य स्वरत्वाभावान्न दीर्घ इति । कुण्डं रथेनेत्यत्र त्वनुनासिकस्यानुस्वारस्य स्थानेऽनुनासिका एव यमा भवन्ति इत्यर्थकथनात् रेफस्याननुनासिकत्वादनुनासिकस्यानुस्वारस्य रकारो न भवतीत्यर्थः (क)।७।

( त० ) हयवरलेत्यादि ॥ हकारादिष्वकार उच्चारणार्थः ॥ ७ ॥

**( आद्यन्ताभ्याम् )** आद्यन्तौ वर्णौ मध्यगानामाभ्यां सहितानां संज्ञाः स्युः ॥ अव इल जब झभ चप । एवमन्येऽपि ॥ ८ ॥

( सु० ) **आद्यन्ताभ्याम्** ॥ संज्ञासूत्रमेतत् । आदिश्च अन्तश्च आद्यन्तौ ताभ्याम् आद्यन्ताभ्यां कृत्वा मध्यस्था अक्षरा ग्राह्या इत्युक्तेः आद्यन्तवर्णरूपा मध्यगानां संज्ञा भवतीत्याद्यन्तयोरप्राप्तायां तत्र वृत्त्यन्तरस्य ग्रहणमाश्रित्य व्याख्येयम् । तद्यथा । आद्यन्ताभ्यां सहितानामिति । किंच आद्यन्तौ तावदवयवौ ताभ्यामवयवी समुदाय आक्षिप्यते । तस्य च युगपल्लक्ष्ये प्रयोगाभावात्तदवयवेष्ववतरन्ती संज्ञा मध्यगेषु विश्राम्यति न त्वाद्यन्तयोः । संज्ञास्वरूपान्तर्भावेन तयोः पारार्थ्यनिर्णयादित्याशयेनाह ॥ **आभ्यां सहितानामिति** ॥ आद्यन्ताभ्यां वर्णाभ्यां सहितानां मध्यगानामाद्यन्तवर्णरूपाः संज्ञा भवन्तीत्यर्थः ॥ एतत्सूत्रेण कृताः संज्ञाः प्रत्याहारशब्देन व्यवह्रियन्ते । प्रत्याह्रीयन्ते संक्षिप्यन्ते वर्णा यत्र स प्रत्याहारः । साधनाधारयोर्युडिति युटि प्राप्ते संज्ञायामकर्तरि चेति अधिकरणे घञ् प्रत्ययः ॥ ८ ॥

( त० ) **आद्यन्ताभ्यामिति** ॥ आदिश्च अन्तश्च आद्यन्तौ । आवादेशे वकारस्य 'व्वोर्लोपश्' इति सूत्रस्य छान्दसत्वात्पुनः संधिरित्यभिप्रेत्याह ॥ **आद्यंतो वर्णाविति** ॥ साङ्केतिकं वा पदम् ॥ ८ ॥

**( कार्यायेत् )** कार्यं विधातुमुच्चार्यमाणो वर्ण इत्संज्ञो भवति ॥ या या संज्ञा सा सा फलवती । यस्येत्संज्ञा तस्य लोपः ॥ ९ ॥

( सु० ) **कार्यायेत्** ॥ वर्णानामाद्योच्चारणं द्विधा । कार्यार्थं श्रवणार्थं चेति । कार्यं विधातुं कर्तुमुच्चार्यमाण आचार्येण कथ्यमानो वर्ण इत्संज्ञकोऽस्ति ॥ क्रियते संपाद्यते तत्कार्यं प्रयोजनमित्यर्थः । कार्यार्थो यथा । ङेर्ङसिङस्ङीनां ङकारो ङिति ङितां यडित्या-

( क ) अत्रायमाशयः ।—रेफस्य यपप्रत्याहारान्तर्वर्तित्वात् कुण्डं रथेनेत्यादौ 'वापदान्तस्य' इति सूत्रे णानुनासिकस्यानुस्वारस्य स्थाने 'अस्य यपस्य सवर्णः' इति प्रमाणेन रकारस्य परसवर्णत्वाभावेऽपिरकार एव स्यात्, इत्याशङ्का ॥ अस्योत्तरमिदम्—अनुनासिकस्यानुस्वारस्य स्थाने अनुनासिका एव यमा भवन्तीत्यर्थकथनात् रेफस्यानुनासिकत्वाभावान्नानुस्वारस्थाने रकारः । अतो रेफस्य यपप्रत्याहारान्तर्भावेऽपि न काचित् क्षतिरिति ॥ पुनराशङ्कते—भद्रहृद इत्यत्र 'रहाद्यपोद्विरि'ति सूत्रेण स्वरपूर्वाद्धकारात्परस्य रेफस्य द्वित्वं स्यात् तस्य यपप्रत्याहारान्तर्वर्तित्वमस्तीति ॥ अस्योत्तरमिदम्—रेफस्यद्वित्वे कृतेऽपि "रि लोपो दीर्घश्च" इति सूत्रेण पूर्वरफस्य लोपे कृते हकारस्य स्वरत्वाभावान्न दीर्घत्वप्रसङ्गः । अतोऽवैकृत्येन भद्रहृद इति यथाप्रकृत्येव भवतीति । एवञ्च रेफस्य यपप्रत्याहारान्तवर्तित्वविषये आशङ्कयालम् ॥

दिकार्यार्थः । श्रवणार्थो यथा । इकारादिष्वकार इति । एति गच्छतीति इत् । आशुवि-नाशीत्यर्थः । तुमोऽप्रयुक्तस्य कर्मणीत्यनेन कार्यायेति चतुर्थी ॥ ९ ॥

( त० ) **कार्यायेदिति** ॥ "तुमोऽप्रयुक्तस्य कर्मणि" इति कर्मणि चतुर्थीत्याशयेना-ह (क) ॥ **कार्यं विधातुमिति** ॥ यत्तु प्रत्ययाद्यतिरिक्त इति प्रत्ययादयः प्रत्ययागमादे-शास्तदतिरिक्त इति तद्विवरणं च तत्सर्वमापाततः । यत्तु प्रत्ययः परस्य बोधस्तदादिकार-णमुत्तमवृद्धवाक्यप्रयोगस्तदतिरिक्त इति तदपि प्रकृतानुपयुक्तत्वादुपेक्षितम् । यथाग्रहस्त-देत्थं योज्यः । प्रत्यादिषु अतिरिक्तः लौकिकः सिद्धप्रयोगोच्चारणादधिक इति कथं चि-त्प्राचो ग्रन्थः ॥ **यस्येदिति** ॥ एति गच्छति प्रयोगेण समवैति 'इण् गतौ' अस्मा-त्क्विपि 'ह्रस्वस्य पिति कृति' इति तुक् । इत् । आशुविनाशीत्यर्थः । इदिति महासंज्ञा-करणादितो लोपः ॥ ९ ॥

## ( प्रसक्तादर्शनं लोपः ) (ख) ॥ १० ॥

( सु० ) **प्रसक्तादर्शनं लोपः** ॥ अदर्शनं सामान्यं लोप इत्यस्यार्थः । प्रसक्तानु-च्चारणरूपविशेषस्तु लक्षणया ज्ञातव्यः । प्रसक्तस्य प्रसङ्गप्राप्तस्य वर्णस्यादर्शनमश्रवणमनु-च्चारणं लोपसंज्ञं भवति ॥ लोपसंज्ञाप्रदेशाः 'हसेपः सेर्लोपः' इत्यादयः। लोपसंज्ञा फ-लं तु प्रत्ययलोपे प्रत्ययलक्षणमिति ॥ प्रसक्तस्येति किम् । दधि मधित्यादौ ह्रस्वस्य पि-ति कृति तुगिति तुक् मा भूत् । अस्ति हि तत्र क्विपोऽदर्शनम् । तच्च लोप इति प्रसक्त-विशेषणाभावे प्रत्ययलक्षणेन तुक् स्यादेवेति ॥ १० ॥

( त० ) लोपस्वरूपमाह ॥ **प्रसक्तेति** ॥ प्रसक्तस्य प्राप्तस्यादर्शनमनुच्चारणं लोप इत्यर्थः ॥ प्रसक्तेति किम् । दधि अत्रापि क्विपोऽनुच्चारणस्य सत्त्वात्तस्य लोपत्वे प्रत्यय-लक्षणेन तुक् प्रसज्येत ॥ १० ॥

## ( प्रत्ययादर्शनं लुक् ) ॥ ११ ॥

( सु० ) **प्रत्ययादर्शनं लुक्** ॥ प्रत्ययस्यादर्शनमश्रवणमनुच्चारणं लुक्संज्ञं भव-ति । लुगिति पूर्वाचार्यसंज्ञा । लुक्संज्ञाप्रदेशाः 'नपुंसकात्स्यमो लुक्' इत्यादयः । लुक्-संज्ञाफलं तु लुकि न तन्निमित्तमिति ॥ ११ ॥

## ( वर्णविरोधो लोपश् ) ॥ १२ ॥

( सु० ) **वर्णविरोधो लोपश्** ॥ स्वानुच्चारणप्रवृत्त्यनन्तरं कार्यान्तरप्रवृत्तिप्रतिब-न्धको वर्णविरोधो लोपश्संज्ञो भवति ॥ वर्णं विरुणद्धीति वर्णविरोधः । लोपश्संज्ञा-प्रदेशाः 'य्वोर्लोपश् वा पदान्ते' इत्यादयः । लोपश्संज्ञाफलं तु लोपशि पुनर्न संधिरि-ति । नस्य लोपशि न विभक्तिकार्यमिति च ॥ १२ ॥

( त० ) लोपश्स्वरूपमाह ॥ **वर्णेति** ॥ वर्णं विरुणद्धीति स तथा। स्वप्रवृत्त्यन-

---

( क ) केचित्तु कार्य्यायेति तादर्थ्ये चतुर्थीमामनन्ति ॥ तदयुक्तम् । वृत्तौ 'कार्य्यं विधातुमिति' दर्श-नात् "तुमोऽप्रयुक्तस्य कर्मणी" ति कर्मणि चतुर्थ्येव भाव्या ॥

(ख) **प्रसक्तादर्शनमिति** । शब्दानुशासनप्रस्तावाच्छब्दविषयकं श्रवणमिह दर्शनं विवक्षितं दर्शन-स्याभावोऽदर्शनम् । शास्त्रतः शब्दस्य कस्यचिच्छ्रवणप्रसक्ते सति यदश्रवणम् , तल्लोपसंज्ञं स्यादित्यर्थः तदाह, **प्रसक्तेति** ॥

न्वरं कार्यान्तरप्रवृत्तिप्रतिबन्धकरूपमुच्चारणमित्यर्थः ॥ १२ ॥

**( स्वरानन्तरिता हसाः संयोगः ) ॥ १३ ॥**

( सु० ) **स्वरानन्तरिता हसाः संयोगः** ॥ अन्तर्मध्यमगुरित्यन्तरिताः, नान्तरिता अनन्तरिताः स्वरा अनन्तरिता येषां ते स्वरानन्तरिताः ॥ अथवा अन्तरमवकाशो जातो येषां तेऽन्तरिताः तद्भिन्ना अनन्तरिताः स्वरैरनन्तरिताः अव्यवहिताः स्वरानन्तरिताः । स्वररहितानां हसानां संयोगसंज्ञा भवतीत्यर्थः ॥ संयुज्यन्तेऽस्मिन् समुदाये हसा इति संयोगः । तेनात्र समुदाये वाक्यपरिसमाप्तिर्न तु गुणवृद्ध्यादिसंज्ञावत् प्रत्येकम् । यदि प्रत्येकं स्यात्तर्हि दृषद्विभर्तीत्यत्र बकारसन्निधौ दकारस्य संयोगत्वात् संयोगान्तस्य लोपः स्यात् । स्वरानन्तरिता इति किम् । पनसमित्यत्राकारेण व्यवधानेऽपि सकारमकारयोः संयोगसंज्ञा स्यात्तदा स्कोराद्योश्चेत्यनेन सस्य लोपः स्यादिति । हसा इति बहुवचनमविवक्षितं तेन द्वयोरपि संयोगसंज्ञाऽस्ति । अतः 'शिक्ष शिक्षणे' अस्माद् गुरोर्हसादित्यङ्प्रत्यये शिक्षेति सिद्ध्यति ॥ १३ ॥

( त० ) **स्वरानन्तरिता** इति ॥ अन्तरम् इतः अन्तरितः न अन्तरितः अनन्तरितः स्वरोऽनन्तरितो येषां ते । अत्र स्वरशब्दः इतशब्दश्च व्यर्थः अनन्तरा इत्यनेनैव तद्बोधात् । तथा हि । न अन्तरं छिद्रं येषां ते हसाः संयोगः । छिद्रं तु विजातीयस्वरस्य प्रवेशेन भवति । संयोग इत्येकवचनं तु वृक्षा वनमितिवत्समुदायस्य संज्ञालाभार्थम् (क) ॥१३॥

**( कुचुटुतुपु वर्गाः ) (ख) ॥ १४ ॥**

( सु० ) **कुचुटुतुपुवर्गाः** ॥ पूकारः 'उदित् सवर्णं गृह्णाति न तु वर्णमात्रम्' इति परिभाषाज्ञापनार्थः । अस्यार्थस्त्वयम् । उत् उकार इत् यस्य स उदित् स्वसवर्णस्य ग्राहको भवति । तेन चोः कुरित्युक्ते पञ्चानां ग्रहणमस्ति ॥ ननु कादीनां पञ्चानां सवर्णसंज्ञा केनेति चेच्छृणु अस्मादेवोदित्करणात् ज्ञापकाज्जानीहि । त एते वर्गसंज्ञा स्युः । वर्गसंज्ञाप्रयोजनं तु वर्ग्यो वर्ग्येण सवर्ण इति ॥ ४ ॥

( त० ) **कुचुटुतुपु** इति ॥ 'अकारात्पञ्चमो वर्णस्तमाहुः पञ्चकग्रहे । उकारस्तत्र विख्यातो नान्यो भवितुमर्हति ॥'' १४ ॥

**( अरेदो नामिनो गुणः )** अर् ए ओ गुणसंज्ञकाः ते च नामिस्थाने भवन्ति (ग) ॥ १५ ॥

---

( क ) वृक्षाः वनमित्यत्र सर्वेषां वृक्षाणां यथा वनमिति संज्ञा तथैव स्वरानन्तरितहसानां संयोग इति संज्ञा । अत्र तु उद्देश्यविधेयभावः । उद्देश्यविधेयभावेषु न समानलिङ्गता तन्त्रं नवा समानवचनता तन्त्रमिति॥

( ख ) वर्ज्यते सुखग्रहणार्थं विजातीया एषु प्रसारवर्जनाद्वा वर्गाः सजातीयवर्णसमूहाः, तद्ग्राहक इत्यर्थः । उकारः पञ्चवर्णपरिग्रहणार्थः । तदुक्तम्—अकारात्पञ्चमो वर्णस्तमाहुः पञ्चकग्रहे । उकारस्तत्र विख्यातो नान्यो भवितुमर्हति इति ॥

( ग ) **अरेदो इति** ॥ तपरत्वं त्रिमात्रनिवृत्तये । तेन चेता स्तोतेत्यादौ द्विमात्र एव । 'गुणः' इत्यस्य स्थाने 'अरेदो नामिनः' इति वक्तव्ये यत्संज्ञाप्रणयनं तद्गुणविधेरनित्यत्वज्ञापनार्थम् । तेन क्षिणोतीत्यादौ पक्षे गुणाभावः सिद्ध्यति । यद्वा–अनेकप्रयोजनमुद्दिश्य संज्ञाविधानमुचितं तेन 'मिदेर्गुणः' 'उच्छेर्गुणः' इत्यादीनि प्रयोजनान्तराण्यनुमीयन्ते । लघुभाष्यकृत्त–वाक्यद्वयरीत्या व्याख्यां चकार । अरेदो गुणः' ।

( सु० ) **अरेदो नामिनो गुणः** ॥ अर् च एश्च ओश्च एषां समाहारः अरेदो । समाहारस्यैकत्वादेकत्वे द्विगुद्वन्दाविति नपुंसकत्वेऽपि ह्रस्वो न भवत्यत्र 'संज्ञापूर्वको विधिरनित्यः' इत्युक्तत्वात् ॥ **अर् ए ओ इति** ॥ नामिन इति षष्ठ्यन्तमस्ति । नामिनः स्थाने गुणो भवतीत्यर्थः ॥ ननु गायति ग्लायतीत्यादौ संध्यक्षराणां गुणः स्यात् ॥ उच्यते । एकारोपदेशसामर्थ्यान्न भवति । अन्यथा एकारमेवोपदिशेत् । एकारस्यैकारस्य च सत्यसति वा गुणे विशेषो नास्ति औकारान्तस्तु धातुर्नास्ति अस्तु वा औकारोपदेशसामर्थ्यान्न भविष्यतीति । न चैवमायादेशोऽपि न स्यादिति वाच्यम् । 'यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते' इति न्यायात् । गुणं प्रति हि ऐकारोपदेशोऽनर्थकः ग्लै इत्यस्यापि सुपठत्वात् । आयादेशस्य तु निमित्तमेवास्ति । अतः परिशेषात् ऋवर्णेवर्णोवर्णानां स्थाने अर् ए ओ यथाक्रमं गुणसंज्ञका भवन्ति (क) । तपरत्वं तु स्पष्टार्थमिति । गुणसंज्ञाप्रदेशाः गुणः, नृपः, इत्याशयः ॥ १५ ॥

( त० ) **अरेदो नामिनो गुण इति** ॥ विपरीतनिर्देशादकारावधिकास्त्रय एव नामिनो गृह्यन्ते । अत्र प्राञ्चः । नामिषु इउऋ इति त्रयाणामेव ग्रहणं लृकारस्य तु सावर्ण्यात् र अन्यथा गायतीत्यत्र गुणः स्यादित्याहुः । वस्तुतस्तु 'गै शब्दे' इत्यैकारोच्चारणसामर्थ्यादेव गुणो न । न च भवतीत्यादावपि गुणो न भवेदिति भ्रमितव्यं तस्य बभूवेत्यादिषु चरितार्थत्वात् ॥ १५ ॥

**( आरैऔ वृद्धिः )** आ आर् ए औ वृद्धिसंज्ञाः स्युः (ख) ॥१६॥

( सु० ) **आरैऔ वृद्धिः** ॥ आश्च आर् च ऐश्च औश्च एषां समाहारः आरैऔ समाहारस्यैकत्वादेकत्वे द्विगुद्वन्दाविति नपुंसकत्वेऽपि ह्रस्वो न संज्ञापूर्वकत्वेन तस्यानित्यत्वात् । समासेऽपि संहिताभावोत्र 'अइकौ च मत्वर्थे' इति लिङ्गात् । अथवा असमासेऽविभक्तिकोऽयं निर्देशः । तद्भिन्नत्वे सति तत्सदृशकरणमनुकरणम् । अनुकरणात् विभक्तिर्नास्तीति समासाभावाच्चत्वारि पदानि । एवमरेदो इत्यत्रापि त्रीणि पदानि । अकारस्य आ वृद्धिः । ऋवर्णस्य आर् वृद्धिः । इवर्णस्य एकारस्य चैकारो वृद्धिः । उवर्णस्य ओकारस्य च औ वृद्धिः । एते वृद्धिसंज्ञकाः । वृद्धिसंज्ञायाः प्रदेशाः 'धातोर्नामिनः' इत्यादयः॥

( त० ) **आरैऔ वृद्धिरिति** ॥ ननु माऽस्तु वृद्धिसंज्ञा आदिस्वरस्य ञ्णित्यारैऔ इति सूत्र्यताम् । तदेवोत्तरत्राप्यनुवर्त्यतामिति चेन्न संज्ञापूर्वको विधिरनित्यो यथा स्यादित्येतदर्थं संज्ञाविधानम् । तत्फलं तु अभवीदित्यादौ पाक्षिको वृद्ध्यभाव इति ॥१६॥

**( अन्त्यस्वरादिष्टिः )** अन्त्यो यः स्वरस्तदादिर्वर्णाष्टिसंज्ञको भवति॥

---

अर् एत ओ एते गुणसंज्ञाः स्युः । **नामिनः** । यत्र ब्रूयाद्गुणो भवतीति तत्र नामिन इति षष्ठ्यन्तमुपस्थितं बोध्यम् ।

( क ) अयमाशयः—गायति ग्लायतीत्यादौ ऐकारोपदेशसामार्थ्यात् सन्ध्यक्षराणां गुणो न भवति । यदि गुणकरणं स्यात्तर्हि एकारमेवोपदिष्टं स्यात् । यतो गुणविषये एकारस्यैकारस्य च सत्यसति वा विशेषो नास्ति । ननु गुणे कर्त्तव्ये आयादेशो न स्यात् । अयेव तत्र भाव्यः । उच्यते—**यं विधिं प्रतीति**॥

( ख ) **आरैऔ इति** । आ इति द्विमात्रग्रहणसामार्थ्यात् न ह्रस्वस्य वृद्धिसंज्ञा ॥

( छ० ) अन्त्यस्वरादिष्टिः ॥ अन्ते भवोऽन्त्यः । यः । अन्त्यश्चासौ स्वरश्चेत्यन्त्यस्वरः अन्त्यस्वर आदिर्यस्य सः अन्त्यस्वरादिः । स्वराणां मध्येऽन्त्यस्वर आदिर्यस्य समुदायस्य स टिसंज्ञो भवति ॥ यत्र तु तदादिरन्यो वर्णो नास्ति तत्र स्वरस्यैवान्त्यादित्वं व्यपदेशिवद्भावेन भवति । यत्र चैक एव स्वरस्तत्रापि व्यपदेशिवद्भावादन्त्यत्वमस्ति । यथा त्यदादिषु(क) । व्यपदेशिवद्भावस्तु लौकिको न्यायः । तथा यस्य बहवः पुत्रास्तस्य तस्मिंस्तस्मिन् ज्येष्ठमध्यमकनिष्ठव्यपदेशोऽस्ति यस्य त्वेकः पुत्रस्तस्य ज्येष्ठादिव्यपदेशस्तस्मिन्नेवेति । टिसंज्ञाप्रदेशा यथा 'पथां टेः' इत्यादयः । सोऽन्त्यस्वर आदिवर्णो यस्य स तदादिवर्ण इति ॥ १७ ॥

( त० ) अन्त्यस्वरादिरिति ॥ अन्त्यस्वर आदिर्यस्य स तथा । नन्वेवं हलीषेत्यादौ कथं टिसंज्ञाऽन्त्यस्वरस्यादित्वाभावादिति चेत्सत्यम् । व्यपदेशिवद्भावेनेति गृहाण१७

## ( अन्त्यात्पूर्वं उपधा ) अन्त्याद्वर्णमात्रात्पूर्वो यो वर्णः स उपधासंज्ञो भवति ॥ १८ ॥

( सु० ) अन्त्यात्पूर्वं उपधा ॥ अन्ते भवोऽन्त्यस्तस्मात् अन्त्याद्वर्णात्पूर्वो वर्ण उपधासंज्ञोऽस्ति । वर्ण इति कस्मात् लब्धं, न्यायात् । तद्यथा अवध्यवधिमद्भावः सजातीयानामेव भवतीत्युत्सर्गः । लोके हि अमीषां ब्राह्मणानामन्त्यात्पूर्वमानयेत्युक्ते एक एवान्त्यादव्यवहितपूर्व आनीयते न तु समुदायः तथेहापि वर्णादव्यवहितः पूर्वो वर्ण एव संज्ञी न तु समुदाय इति । उपधासंज्ञाप्रदेशाः 'नोपधायाः' इत्यादयः ॥ १८ ॥

( त० ) अन्त्यात्पूर्वं उपधेति ॥ ननु वर्णादिति सूत्रे अनुक्तं कस्माल्लब्धमिति चेन्न पराण्यादिति ज्ञापकात् गृहाण । अन्त्यादुपधेत्युक्तेऽपि पूर्वशब्दस्याक्षेपः सम्भवति । न च परशब्दस्याक्षेपः सम्भवति इति वाच्यम् अन्त्यत्वभङ्गप्रसङ्गात् । नहि परस्मिन्वर्णे सति पूर्वस्य अन्त्यत्वं सम्भवति । एवं सिद्धे यत्पूर्वग्रहणं तदव्यवहितपूर्वस्यैव ग्रहणार्थम्१८

## ( ह्रस्वो लघुः ॥ १९ ॥

( सु० ) ह्रस्वो लघुः । ह्रस्वस्वरो लघुसंज्ञो भवति ॥ लघुसंज्ञाप्रदेशाः उपधाया लघोरित्यादयः ॥ १९ ॥

## ( विसर्गानुस्वारसंयोगपरो गुरुर्दीर्घश्च )(ख) ॥२०॥

( सु० ) विसर्गानुस्वारसंयोगपरो गुरुर्दीर्घश्च ॥ विसर्गश्चानुस्वारश्च संयोगश्च ते विसर्गानुस्वारसंयोगाः विसर्गानुस्वारसंयोगाः परे यस्माद्ध्रस्वात्स विसर्गानुस्वारसंयोगपरो ह्रस्वो गुरुसंज्ञः दीर्घश्च गुरुसंज्ञः ॥ २० ॥

(क) त्यदादिष्विति । त्यदादिगणे 'त्यदादेष्टेरः' इति सूत्रेण व्यपदेशिवद्भावमाश्रित्य टेरत्वं क्रियते न्यायं दर्शयति—तथेति । सूत्रव्याख्यानं यथा—अन्त्यस्वर आदिः आदिभूतोऽवयवो यस्य स इति तद्गुणसंविज्ञानेन तत्सहितो वर्णष्टिसंज्ञः । "सामीप्ये च व्यवस्थायां प्रकारेऽवयवेऽपि च । आदिशब्दं तु मेधावी चतुर्ष्वर्थेषु लक्षयेत्" ॥

( ख ) तदुक्तम्—"संयुक्ताद्यं दीर्घं सानुस्वारं विसर्गसंमिश्रम् । विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन" इति ॥

( त० ) विसर्गेति ॥ विसर्गश्च अनुस्वारश्च संयोगश्च ते परे यस्य स तथा । वस्तुतस्तु विसर्गानुस्वारयोरत्रानुपयोगात्संयोगपर इत्येव वक्तुमुचितम् ॥ २० ॥

**( मुखनासिकावचनोऽनुनासिकः ) ॥ २१ ॥**

( मु० ) मुखनासिकावचनोऽनुनासिकः ॥ मुखेन सहिता नासिका मुखनासिका (क) । शाकपार्थिवादित्वान्मध्यमपदलोपः । उच्यतेऽसाविति वचनः । युट् । मुखनासिकया वचनः(ख) मुखनासिकावचनो वर्णोऽनुनासिकसंज्ञो भवति ॥ २१ ॥

( त० ) मुखनासिकेति ॥ मुखसहिता नासिका मुखनासिका । अन्यथा मुखं च नासिका चेति विग्रहे प्राण्यङ्गत्वादेकवद्भावे मुखनासिकमिति स्यात् । वस्तुतस्तु एकवद्भावेऽपि न क्षतिः आङः प्रश्लेषेण तथा सिद्धेः । मुखनासिकावचनमस्यास्तीति सः तथा । 'अर्शआदिभ्योऽच्' इति अप्रत्ययः ॥ २१ ॥

**( विभक्त्यन्तं पदम् ) ॥ २२ ॥**

( मु० ) विभक्त्यन्तं पदम् ॥ विभक्तिरन्ते यस्य तद्विभक्त्यन्तं पदसंज्ञमस्ति ॥ पद्यतेऽनेनेति पदम् (ग) । विभक्त्यन्तमित्यन्तग्रहणात् 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति ज्ञाप्यते ॥ २२ ॥

( त० ) विभक्त्यन्तमिति । विभक्तिरन्ते यस्य तत् ॥ २२ ॥

**( तपरः ) स्वसमानकालस्य सवर्णस्य ग्राहकः ॥ २३ ॥**

( मु० ) तपरः ॥ स्वसमानकालस्य सवर्णस्य ग्राहकः । तकारः परो यस्मात्स तपरः । तकारात्परो यः स तपरश्चेति ॥ तन्त्रादिनोभयं विवक्षितम् । अत्र उच्चार्यमाणस्तपरः स्वसमानकालस्य सवर्णस्यैव संज्ञा भवति । स्वेनात्मना सह समानस्तुल्यकाल उच्चारणकालो यस्य स स्वसमानकालस्तस्येति । तेनादित्यादयः षण्णां षण्णां संज्ञाः(घ) । ऌदिति द्वादशानां संज्ञा । ह्रस्वतपरस्तु ह्रस्वभेदानेव गृह्णाति । दीर्घतपरस्तु दीर्घभेदानेव गृह्णाति नान्यानित्यर्थः (ङ) ॥ २३ ॥

( त०) तपर इति ॥ तः परो यस्मात्तात्परश्च तपरः । यत्तु संध्युपयोगीति कैश्चिदुक्तं तन्न संधिभिन्नोपयोगितया संकोचे मानाभावात् । अथवा संधिपदमुपलक्षकम् ॥२३॥

श्रीविद्यानगरस्थायिलोकेशकरशर्मणा । विहितायां हि टीकायां संज्ञासंधिरगात्सुखम् ॥

**(विरामोऽवसानम्)** वर्णानामभावोऽवसानसंज्ञः स्यात् ॥ इति संज्ञाप्रकरणम् ॥

---

( क ) मुखेन सहितेति । अन्यथा मुखं च नासिका चेति द्वन्द्वे कृते प्राण्यङ्गत्वादेकवद्भावे च मुखनासिकं स्यात् । उच्यतेऽसाविति वचनः, इत्यत्र कर्मणि युट्प्रत्ययो बोध्यः । तत्त्वदीपिकाकारेण यदुक्तम्—एकवद्भावेऽपि न क्षतिः, आङः प्रश्लेषेण तथासिद्धेरिति । तदयुक्तम् । आङः प्रयोजनाभावात् ।

( ख ) मुखनासिकया वचनो यस्य स इति व० वा० पुस्तके पाठः ।

( ग ) पद्यते गम्यतेऽर्थोऽनेनेति पदम् ।   ( घ ) ०नादिदिति व० वा० पुस्तके पाठः ।

( ङ ) 'तपरः' इति सूत्रमतत्कालनिवृत्त्यात्मकपरिसंख्यार्थम् । वैयाकरणास्तु परिसंख्याविधिमेव नियमविधिरिति व्यवहरन्ति । तदिदं सर्वमभिप्रेत्य व्याचष्टे—**तः परो यस्मादित्यादिना** । नियमविधानस्य फलमाह—**तेनेत्यादिना** । तेन नियमविधानेन । आदिपदेन ऌदित्यादिसंग्रहः । अत् , इत् , उत् , ऋत् , एत् , ऐत् ओत् , औत् , इत्येतेऽष्टौ तपराः । **ऌदिति द्वादशानामिति** । ऋऌवर्णयोः सावर्ण्यविधानादिति भावः ।

**( सू० ) विरामोऽवसानम्** । विरम्यतेऽनेनेति । विरामः । बाहुलकात्करणे घञ् । यदुच्चारणात्तरं वर्णान्तरं नोच्चार्य्यते सोऽन्त्यवर्णो विरामोऽवसानसंज्ञको भवतीत्यर्थः । सम्यक्ज्ञायते शब्दादिव्यवहारो यया सा संज्ञा ॥

**(कादयोमावसानाः स्पर्शाः)** लोकप्रसिद्धपाठापेक्षमिदं सूत्रे मावसानत्वायोगात् । कादयः पञ्चविंशतिवर्णाः स्पर्शसंज्ञकाः सन्ति(क) ॥

**( ञमङणना अनुनासिकाः )** एते पञ्च वर्णा अनुनासिकसंज्ञकाः सन्ति । नासिकामनुगता इत्यनुनासिकाः ॥

**(यरलवा अन्तस्थाः)** एते चत्वारो वर्णा अन्तस्थसंज्ञकाः सन्ति (ख) ॥

**( शषसहा ऊष्माणः )** एते चत्वारो वर्णा ऊष्मसंज्ञकाः सन्ति ॥

**( ≍ क इति प ≍ इति कपाभ्यां खफाभ्यां प्रागर्द्धविसर्गसदृशो जिह्वामूलीयोपध्मानीयसंज्ञकौ भवतः )** अर्द्धविसर्गसादृश्यमुच्चारणे लेखने च बोध्यम् ।

**(अं इति अः इति स्वरात्परावनुस्वारविसर्गसंज्ञकौ भवतः)**

**(अकुहविसर्जनीयानां कण्ठः)** एषामष्टानां वर्णानामुत्पत्तेः स्थानं कण्ठोऽस्ति । द्वन्द्वसमासो बोध्यः सर्वत्र (ग) ॥

**( इचुयशानां तालु )** एषामष्टानामुत्पत्तेः स्थानं तालु भवति(घ) ॥

**(उपूपध्मानीयानामोष्ठौ)** एषां सप्तानामुत्पत्तेः स्थानमोष्ठौ भवतः ॥

**(ऋटुरषाणां मूर्द्धा)** एषामष्टानामुत्पत्तेः स्थानं मुर्द्धा मस्तकोस्ति(ङ) ॥

**(लृतुलसानां दन्ताः)** एषामष्टानामुत्पत्तेः स्थानं दन्ताः सन्ति(च) ॥

---

( क ) **कादय इति** । कः आदिः येषां ते कादयः । मः अवसाने येषां ते मावसानाः । **लोकप्रसिद्धपाठापेक्षमिति** । यथा लोके 'क ख ग घ ङ च छ' इत्यादिपाठः, तत्परकमिदं सूत्रम् । व्याकरणेऽस्मिन् कादिमावसानत्वरूपेण मातृकागणनाभावात् ॥

( ख ) एतेषामन्तस्थानामध्ये रेफवर्जिता यवलाः सानुनासिका निरनुनासिकाश्च भवन्ति ।

( ग ) कस्य कानि स्थानानि इत्याशङ्कायां तद्वयापकस्थानानि पाणिन्यादिशिक्षावचनान्यर्थतः संगृह्णाति—**अकुहेत्यादिना** । अ इत्यष्टादशभेदा गृह्यन्ते । कु इति कादिपञ्चकात्मकः कवर्गः । लौकिकप्रसिद्धिमाश्रित्यैव एतत्प्रवृत्तेः । एवमग्रेऽपि कथञ्चित् समाधानं बोध्यम् । अश्च कुश्च हश्च विसर्जनीयश्चेति विग्रहः । विसर्जनीयशब्दो विसर्गपर्य्यायः ।

( घ ) इ इत्यष्टादशभेदाः । चु इति चवर्गः । इश्च चुश्च यश्च शश्चेति विग्रहः । तालु हनुः ।

( ङ ) **ऋटुरषेति** । ऋ इत्यष्टादश भेदाः । टु इति टवर्गः । ऋा च टुश्च रश्च षश्चेति विग्रहः ।

( च ) **लृतुलसेति** । दन्तशब्देन दन्तमूलप्रदेशो विवक्षितः । अन्यथा भग्नदन्तस्य तदुच्चारणानुपपत्तेः । समासस्तु पूर्ववद्बोध्यः ।

( **एदैतोः कण्ठतालु** ) इत्यादौ तपरत्वमसंदेहार्थं न स्वसमानकाल-सवर्णग्रहणार्थम् ॥ तेन प्लुतस्यापि ग्रहणमत्र भवति। एकारैकारयोरुत्पत्तेः स्थानं कण्ठश्च तालु च कण्ठतालु भवति। प्राणितूर्यसेनाङ्गानामित्येकवद्भावः ॥

( **ओदौतोः कण्ठोष्ठम्** ) तपरत्वमसंदेहार्थम्। अनयोरुत्पत्तेः स्थानं कण्ठश्च ओष्ठौ च कण्ठोष्ठमस्ति। प्राण्यङ्गत्वादेकवद्भावः ॥

( **वकारस्य दन्तोष्ठम्** ) वस्योत्पत्तेः स्थानं दन्ताश्च ओष्ठौ च दन्तोष्ठमस्ति। ओत्वोष्ठयोः समासे वेत्योकारः ॥

( **जिह्वामूलीयस्य जिह्वामूलम्** ) जिह्वामूलीयवर्णस्य जिह्वाया मूलमुत्पत्तेः स्थानमस्ति।

( **नासिकानुस्वारस्य** ) अनुस्वारस्योत्पत्तेः स्थानं नासिकाऽस्ति ॥

**"हकारं पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतम्।**
**उरस्यं तं विजानीयाः कण्ठ्यमाहुरसंयुतम् ॥१॥**

तं हकारमुरसि भवमुरस्यम्। भवार्थे ण्यः। णितो वेति न वृद्धिः ॥ त्वं विजानीयाः बुध्याः। कीदृशं तम्। पञ्चमैर्ञमङणनैर्युक्तम् ॥ पुनः कीदृशं तम्। अन्तस्थाभिर्यरलवैः संयुतं मिलितम् ॥ पञ्चमैरसंयुतमन्तस्थाभि-श्चासंयुक्तं हकारमाचार्याः कण्ठे भवं कण्ठ्यं कण्ठस्थानोद्भवमाहुर्ब्रुवन्ति ॥१॥

वर्णानामुत्पत्तेरष्टौ स्थानानि सन्ति। तद्यथा—

**"अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा।**
**जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥२॥"**

मातृकायामेवमनेन प्रकारेण द्विपञ्चाशद्वर्णा आचार्येणोदाहृता दर्शिताः। ते के। 'व्यञ्जनानि त्रयस्त्रिंशत्' इत्यादयः (क) ॥३-४॥ इति **स्थानानि**।

प्रयत्नो द्विधा। आभ्यन्तन्तरो वाह्यश्च। आभ्यन्तरः पञ्चधा। तद्यथा। स्पर्शानां स्पृष्टं प्रयतनम् ॥१॥ अन्तस्थानामीषत्स्पृष्टं प्रयतनम् ॥२॥ स्वराणां विवृतं प्रयतनम् ॥३॥ ऊष्मणामीषद्विवृतं प्रयतनम् ॥४॥ ह्रस्वस्याकारस्य संवृतं प्रयतनम् ॥५॥ वाह्यस्त्वष्टधा। ≍क≍ पविसर्गशषसानां विवारः श्वासो-घोषश्च प्रयत्नः ॥३॥ हवानां संवारो नादो घोषश्च प्रयत्नः ॥६॥ वर्गाणां

---

(क) व्यञ्जनानि इति। सम्पूर्णश्लोकोयम्—

व्यञ्जनानि त्रयस्त्रिंशत्स्वराश्चैव चतुर्दश। अनुस्वारो विसर्गश्च जिह्वामूलीय एव च।
गजकुम्भाकृतिर्वर्णः प्लुतश्च परिकीर्त्तितः। एवं वर्णाद्विपञ्चाशन्मातृकायामुदाहृतः ॥

प्रथमतृतीयपञ्चमानामन्तस्थानां चाल्पप्राणः प्रयत्नः ॥७॥ वर्गाणां द्वितीयचतुर्थानामूष्मणां महाप्राणः प्रयत्नः ॥८॥ इति प्रयत्नाः (क) ॥

इति सुबोधिन्यां संज्ञाप्रकरणम् ॥

# अथ परिभाषाप्रकरणम् ॥ २ ॥

( सु० ) (**षष्ठीनिर्दिष्टस्यादेशस्तदन्तस्य ज्ञेयः**) स्थानषष्ठ्या निर्दिष्टस्य शब्दस्य य आदेश उच्यते स आदेशोऽन्त्यस्य वर्णस्य स्थाने भवतीत्यर्थः ॥ ऐ सख्युरित्यैकारः सखिशब्दस्यान्तस्येकारस्य भवति ॥ स्थानषष्ठीति किम् । कृत इति इडागमस्तृप्रत्ययस्य ऋवर्णात्पूर्वो मा भूदिति ॥ जश्शसोः शिरित्यादीनां शित्त्वं परिभाषां ज्ञापयति । तद्यथा । तत्र हि शित्त्वमन्त्यादेशं बाधित्वा सर्वादेशो यथा स्यादित्येतदर्थं कृतम् । यदि षष्ठीनिर्दिष्टस्यादेशोऽन्त्यस्य न स्यात्तर्ह्यन्तरेणापि शित्त्वं सर्वादेशः सिद्धः किं तेनेति व्यर्थेन सता शित्त्वेन ज्ञापयति ॥

(**ङिदन्तस्य वक्तव्यः**) ङिदादेशोऽप्यन्तस्य स्यात् ॥ गुरुः शिच्च सर्वस्येत्यस्यापवादोऽयम् ॥ 'त्रेरयङ्' इत्ययङादेशोऽन्त्यस्येकारस्य भवति । त्रयाणाम् । अनुङादीनां ङित्त्वेन ज्ञापितेयम् । ङित्वस्य फलान्तरादर्शनात् ॥

( **गुरुः शिच्च सर्वस्य** ) अनेकवर्ण आदेशः शिदादेशश्च सर्वस्य स्यात् ॥ षष्ठीनिर्दिष्टस्येत्यस्यापवादोऽयम् । अन टौसोरित्यनादेशस्त्रिवर्णात्मको गुरुरस्ति स सर्वस्येदमः स्थाने भवति यथा अनेनेति । जश्शसोः शिरिति शिदादेशः सर्वस्य जसः शसश्च स्थाने भवति । यथा वारीणीति ॥ उच्चरितप्रध्वंसिनोऽनुबन्धाः स्मर्यमाणाः सन्त एव कार्यं निर्वाहयन्तीति ॥ ततः—

( **अनुबन्धकृतमनेकवर्णत्वं न स्वीक्रियते** ) अत्र संध्यक्षराणि पराणीत्यादिनिर्देशेन शिदंशे ज्ञाप्यते इयं परिभाषा । तथा हि जश्शसोः शिश्चेत् सर्वस्य न स्यात्तदोक्तं निर्देशोऽनुपपन्नः स्यादिति ॥ 'साधनाधारयोर्युट्' कारकात्क्रियायुक्ते' इत्यादिनिर्देशेनानेकवर्णांशे ज्ञाप्यते इयम् ॥

---

( क ) **प्रयत्नो द्विधेति** । यत्नानामाभ्यन्तरत्वं बाह्यत्वं च वर्णोत्पत्तेः प्रागूर्ध्वंभावित्वमिति पाणिन्यादिशिक्षासु स्पष्टम् । पञ्चप्रकारं दर्शयति—**तद्यथेति** । केचिदाभ्यन्तरं चतुर्धेति वदन्ति । तेषां मते स्वराणामूष्मणां च विवृतमेव प्रयतनम् । ईषद्विवृतमूष्मणामिति नाङ्गीकुर्वन्ति । **प्रयतनमिति** । प्रयत्न इत्यर्थः । **ह्रस्वस्याकारस्येति** । ननु दण्ड आढकमित्यत्र अकारस्य आकारस्य च विवृतसंवृतप्रयत्नभेदेन सावर्ण्याभावात् सवर्णदीर्घो न स्यादित्यत आह पाणिनीयादौ ह्रस्वस्यावर्णस्य प्रक्रियादशायां विवृतं प्रयोगे तु संवृतमेवेति । तथा हि—शास्त्रीयप्रक्रियाभिः परिनिष्ठितानां रामः कृष्ण इत्यादिशब्दानां प्रयोगे क्रियमाणे ह्रस्वस्यावर्णस्य संवृतमित्यर्थः शास्त्रीयकार्यप्रवृत्तिसमये तु ह्रस्वस्याप्यवर्णस्य विवृतत्वमेवेत्यर्थः । तेन ह्रस्वस्याप्यवर्णस्य विवृतत्वेन दण्डाढकमित्यादौ सवर्णदीर्घादिकार्यं निर्बाधमेवेति भाष्ये स्पष्टम् ।

**बाह्यस्त्वष्टधेति** । अत्र कौमुदी—बाह्यप्रयत्नस्त्वेकादशधा । विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति । अत्रोदात्तोऽनुदात्तः स्वरितः शब्दाः धर्मपराः ।

कस्य को बाह्यप्रयत्न इत्याकांक्षायां संगृह्णाति—ᳲकᳲ पेति । तदुक्तम्—

खयां यमाः खयः ᳲकᳲपौ विसर्गः शर एव च । एते श्वासानुप्रदाना अघोषाश्च विवृण्वते ॥ १ ॥
कण्ठमन्ये तु घोषाः स्युः संवृता नादभागिनः । अयुग्मा वर्गयमगाः यणश्चाल्पासवः स्मृताः ॥२॥ इति ॥

( **टित्किताद्यन्तयोर्वक्तव्यौ** ) टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ भवतः ॥ सिसतासीस्यपामिडितीट् स्यादीनामाद्यवयवो भवति ॥ अभविष्टेति । रातो णौ पुगिति तुक् आत इत्यस्यान्तावयवो भवति । यापयतीति । अन्यार्थटित्कित्स्वियं परिभाषा न प्रवर्तते । यथा । अटाविति टकारस्य ङ्वित इतीप् प्रयोजनमस्ति । कुत्वरीति । यक् चतुर्ष्विति ककारस्य गुणाप्रवृत्तिः प्रयोजनमस्ति । भूयते इति । प्रत्ययविधौ नेयं प्रवर्तते इति वा । टिदंशे तस्मादित्यत्रात् । इति स्मट् । रः संख्याया इत्यत्र यट् । नवानामित्यत्र नुट् । किदंशे तु कार्येत्यत्र 'ङेः अक्' इत्यक् । ऐ सख्युरित्यत्र 'ऋङे' इत्युक् । वर्तमाने इत्यत्र मुगानेत इति मुगिमां परिभाषां ज्ञापयति ॥

(**मिदन्त्यात्स्वरात्परो वक्तव्यः**) स्वराणां मध्ये योऽन्त्यस्वरस्तस्मात्परस्तस्यैवान्तावयवो मित्स्यात् ॥ 'नुमयमः' इति नुमः पूर्वान्तत्वान्नोपधाया इति दीर्घः सिध्यति । कुलानि, यशांसीति । नुम. परादित्वे तु नोपधाया इति दीर्घो न स्यात् । वारिणे इत्यादौ ङितीत्येकारश्च स्यादिति । अस्याः संध्यक्षराणीति निर्देशो ज्ञापकः ॥

( **सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यहितस्य पूर्वस्यैव वक्तव्यम्** ) नियमार्थम् 'इ यं स्वरे' इत्यत्र स्वरे इति भावे सप्तमी । अश्रूयमाणक्रियत्वाच्चान्तरङ्गस्यास्त्यर्थस्य लाभो भवति । तेन स्वरे सति यकारो भवतीत्यर्थः ॥ व्यवहितेऽव्यवहिते च प्राप्तमव्यवहित एवेति पूर्वस्य परस्य च प्राप्तं पूर्वस्यैवेति च नियम्यते ॥ पूर्वस्येति किम् । ननु इदमत्रेकारस्य मा भूत् ॥ अव्यवहितस्येति किम् । अग्निचिदत्रेत्यत्र सान्तरस्य मा भूत् । अस्याः द्वादे नृणः लित्पुपादेः सखिपत्योरित्यादिनिर्देशो ज्ञापकः ।

( **पञ्चमीनिर्देशेन क्रियमाणं कार्यमव्यवहितस्य परस्य वक्तव्यम्** ) उदः स्थास्तम्भोः सलोपः इत्यत्रोद इति पञ्चमीनिर्देशेन क्रियमाणा लोपः सोऽव्यवहितस्य परस्य स्थास्तम्भोः सकारस्य भवति । उत्थानम् उत्तम्भनमिति । अव्यवहितस्येति किम् , उत्संस्थानम् उत्संस्तम्भनमित्यादौ मा भूत् ॥ परस्येति किम् । अस्था उदासने स्तम्भ उद्गच्छत्यत्र मा भूत् ॥ अस्याज्ञापकः स नपुंसकं स धातुरित्यादिनिर्देशः ॥ तत्र हि सेषादिति विसर्गलोपः कृतोऽतो ज्ञाप्यते ।

( **ह्रस्वदीर्घप्लुतशब्दैर्यत्र स्वरो विधीयते तत्र स्वरेति षष्ठ्यन्तं पदमुपतिष्ठते** ) षष्ठीनिर्दिष्टस्येत्यस्य नायमपवादः किं तु तच्छेष एव ॥ स्वरस्येति षष्ठ्यन्तं पदं सति सम्भवे सामानाधिकरण्येनैव सम्बध्यते न वैयधिकरण्येन । तेन नपुंसकस्येत्यत्र स्वरान्तस्यैव नाम्नो ह्रस्वो भवति । सोमपमिति । नेह सुवाक् ब्राह्मणकुलम् । स्वरान्तत्वाभावान्न ह्रस्व इत्यर्थः । शमां दीर्घ इत्यत्र तु सामानाधिकरण्यस्यासम्भवात् । शमादीनां स्वरस्येति सम्बद्ध्यते । तेन शाम्यतीत्यादि सिद्धम् ॥ से दीर्घ इत्यत्र स्वरान्तस्य धातोर्दीर्घः । सञ्जिगीषतीति । नेह । बीभित्सतीति । दूरादाह्वाने टेः प्लुतः इत्यत्र सामानाधिकरण्यस्य संभवेऽपि टिग्रहणसामर्थ्यात् टेरवयवस्य स्वरस्य प्लुतो भवति । आयुष्मान् एधोन्द्रवर्मन् । ज्ञापकसिद्धेयम् । तथा हि—यजां यवराणाम्, रुदादेश्चतुर्णामित्यत्र नामीति दीर्घस्य प्रवृत्त्यप्रवृत्तिभ्यां स्वरान्तेषु नामीति दीर्घो भवति न हसान्तेषु इति ज्ञापितम् ॥ एकदेशानुमितिद्वारा ह्रस्वप्लुतयोरप्येवम् ।

( वर्णानां प्रसङ्गे सति सदृशतम आदेशो वक्तव्यः ) सादृश्यं चतुर्विधमस्ति स्थानार्थगुणप्रमाणभेदात् । स्थानतो यथा—दध्यानयेत्यत्र तालुस्थानस्येकारस्य तालुस्थानो यकारः । अर्थतो यथा-रूपवती भार्या यस्येत्यत्र पुंवद्वेत्यनेन पूर्वपदस्य स्थानेऽतिदिश्यमानः पुंशब्दो रूपवत्त्ववाचिनो रूपवतीशब्दस्य स्थाने तदर्थवाची एव रूपवच्छब्दो भवतीत्यर्थः । गुणतो यथा—वाग्घरिरित्यत्र घोषवतो नादवतो महाप्राणस्य संवारवतो हस्य तादृशो वर्गचतुर्थो घकारो भवतीत्यर्थः । प्रमाणतो यथा—अमुम्, अमू, अमून् इत्यत्र मादू इत्यनेन पूर्वपदस्य स्थाने ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घ उवर्णो भवतीत्यर्थः ॥ न्यायसिद्धेयम् । तथा हि । सभायामास्यतामित्युक्ते हि पण्डिताः पण्डितैः सहासते शूराः शूरैः कवयः कविभिर्न तु संकरेण । किञ्च गवां संघं प्रति गौर्धावति अश्वोऽश्वानामित्यादिव्यवस्था तिर्यक्ष्वपि दृश्यते ॥

( लोपशि पुनर्न सन्धिर्वक्तव्यः ) लोपशि कृते सति सन्धिर्न भवति ॥ यथा-त आगताः ॥

( नस्य लोपशि तु संन्धिर्वक्तव्यः ) श्वादेरिति निर्देशात् । यथा राजाश्वः ॥

( नस्य लोपशि न विभक्तिकार्यम् ) पञ्चस्विति निर्देशात् ॥ किकौस्षः स इति पत्वं तु भवत्येव तस्य वर्णमात्राश्रितत्वात् । यथा—पथिषु । अस्याः ज्ञापक आचार उपमानात् अत उपधाया इत्यादिनिर्देशः ॥

( विशेषणं तदन्तस्य स्वस्य च रूपस्योपस्थापकं वक्तव्यम् ) अप्रधानमात्मान्तस्य रूपस्य ग्राहकं भवति । स्वस्य रूपस्य चेत्यर्थः ॥ स्वराद् इत्यत्र धातोरिति विशेष्यं स्वरादिति विशेषणं तदन्तग्राहकं भवति ॥ स्वरान्ताद्धातोरप्रत्ययो भवतीति। स्वस्य रूपस्य च ग्राहकं स्वररूपाद्धातोश्चाप्रत्यय इति ॥ चयः, अयः । अस्या ज्ञापकोऽतिशये हसादेः अन्वये नाम्नामित्यादिनिर्देशः । न ह्यत्र तदन्तविधिं विना स्वराद् इति विधीयमानोऽप्रत्ययः शीङा भवेत् । स्वरग्रहणं विना च इधातोरप्रत्ययो न लभ्यतेति इयं परिभाषा ॥

( यदादेशस्तद्वद्भवति ) न तु वर्णमात्रविधौ आदेशे कृते स्वरूपभेदात् । स्थानिप्रयुक्तकार्याणामप्रवृत्तावतिदेश आरभ्यते । आदेशः स्थानिवद्भवति । यथा लक्ष्म्यामित्यत्र ङ्रामादेशे कृते तस्यामो ङित्वात् ङितामडित्यट् भवति । वर्णमात्रविधौ स्थानिवद्भावो न भवति । वर्णश्च स्थान्यवयव एवात्र गृह्यते । यश्च वर्णमात्रेण विधिः यश्च वर्णमात्रात् परस्य विधिर्यश्च वर्णमात्रं स विधिर्यस्य वर्णमात्रे विधिस्तत्र मा भूत् । तत्र वर्णमात्रेण विधौ यथा । व्यूढोरस्केनेत्यत्र सकारस्य स्थानिवत्त्वेन विसर्गत्वमाश्रित्यावकुप्वन्तरेऽपीति णत्वं प्राप्तमिति तन्न भवति ॥ वर्णमात्रात्परस्य यथा । द्यौरित्यत्र दिव औरित्यौकारस्य स्थानिवत्त्वेन पन्था इत्यत्र आसावित्याकारस्य स्थानिवत्त्वेन च हसत्वमाश्रित्य हसेप इति सिलोपो न भवतीति ॥ वर्णमात्रस्य विधौ यथा-द्युकाम इत्यत्र ऊ रसे इत्युकारस्य स्थानिवत्त्वेन यवयोर्वसे हकारे च लोपो न भवतीति ॥ वर्णमात्रे विधौ यथा । क इष्ट इत्यत्र 'यज देवपूजादौ' इति धातोः क्तप्रत्यये परतः संप्रसारणस्य स्थानिवत्त्वेन यकारमाश्रित्य 'हवे' इत्युकारो न भवतीति ॥ क्रियायां स्त्रियामित्यादिनिर्देशो ज्ञापकः ॥

इति परिभाषा ॥ २ ॥

# अथ स्वरसन्धिः ॥ ३ ॥

**( इ यं स्वरे )** इवर्णो यत्वमापद्यते स्वरे परे (क) ॥ १ ॥

**( सु० ) इ यं स्वरे** ॥ इ इत्यनेन इत्वजातिर्निर्दिश्यते न तु ह्रस्वव्यक्तिरेव । प्लुत इति निषेधसामर्थ्यात् । यमिति द्वितीयान्तं कर्म । तस्य योग्यत्वात् । प्राप्नोतीत्यस्याध्याहारः कर्तव्यः । अथ-इ इति क्लीबे कर्तृपदमस्ति । यमिति प्रथमान्तं क्लीबे । अकार उच्चारणार्थः । तदा सत्तार्थवाचकं क्रियापदमध्याहार्यमिति । स्वरे इति किम् । दधि पश्य । स्थानी आदेशो निमित्तं चेति त्रयं सर्वत्र बोध्यम् ॥ किंच अर्थवद्ग्रहणे नानर्थकस्येति परिभाषया अस्यापत्यमिः स्त्री च ई इत्यत्रैव यकारः स्यात् न तु दध्यानयेत्यादौ । उच्यते-स्यादावित्यादिनिर्देशेन तस्यानित्यत्वज्ञापनान्न निषेधः(ख) । दध्यानयेत्यत्र नामिनः स्वरे इति नुम् न स्यादिस्वरत्वाभावात् । दध्य् इति स्थिते ॥ १ ॥

**( त० ) इ यं स्वर इति** ॥ इश्च ईश्चेति समाहारद्वन्द्वे एकवद्भावे नपुंसकत्वे च इ इति । एतेन सांकेतिकत्वनिर्विभक्तिकत्वाद्युक्तिः परास्ता(ग) । ऋजुमार्गेण सिद्ध्यतोऽर्थस्य वक्रेण प्रदर्शनायोगात् । अर्थवद्ग्रहणे नानर्थकस्य इति परिभाषया केवलाया इव्यक्तेरेव ग्रहणं न तु दध्यादिस्थाया इति नाशङ्कनीयं स्यादावित्यादिनिर्देशेन तस्या अनित्यत्वज्ञापनात् । यमिति भावप्रधानो निर्देशः द्व्येकयोरितिवत् इत्याशयेनाह-इवर्णो यत्वमापद्यत इति । ननु 'इयं स्वरे' इत्यत्र इकारग्रहणं किमर्थमिति । उकारादोनां यत्ववारणायेति चेन्न उ वमित्यादिसूत्रप्राबल्यात् । न च षडत्रेत्यादौ टकारादीनां यत्वनिषेधार्थं तदिति चेत् तत्रापि पूर्ववत् 'चपा अबे जबा' इत्यादिसूत्रप्राबल्यात् । अथ पचतीत्यत्र चकारस्य तद्वारणायेतिचेत् 'ङ्णनो ह्रस्वात्' 'दीर्घात्' इति सूत्राभ्यां ह्रस्वदीर्घग्रहणमनुवर्त्य ह्रस्वदीर्घयोरेव यत्वविधानाद् इति चेत्सत्यम् । चिनुह्यत्रेत्यादौ प्लुतस्यापि पक्षे यत्वविधानार्थमिग्रहणस्यावश्यकत्वात् । दद्ध्यानयेत्यत्र स्यादिस्वरत्वाभावात् 'नामिनः स्वरे' इति नुमागमो न ।

---

( क ) उपोद्घातसङ्गत्या संज्ञां निरूप्य संधिसूत्रोपजीवकत्वाच्छब्दनिरूपणात्प्राक् सन्धिनिरूपणं प्रतिजानीते-**अथेति** । ननु किं नाम संधित्वमुच्यते पूर्वोत्तरान्योन्यमिलितत्वं कार्यत्वमिति ॥ **'इ यं स्वरे' इति** । ननु सूत्रपाठक्रमेणाकारस्याभ्यर्हितत्वादकारसंधिमनभिधाय प्रथमं कथमिकारसंधिरभिहितः । उच्यते । इकारः सावित्रीरूपः । शक्तिरूपः । सा च सर्वजगत्सृष्टिकर्त्री, तस्मात्पूर्वमिकारस्यसंधिरभिहितः । इति चन्द्रकीर्तिः । अत्र केचित्—ननु "अकारादिसकारान्ता, वर्णाश्च ब्रह्मरूपिणः । इकारस्य यकारत्वं, ब्रह्मनाशाय कल्पते" ॥ इत्यनेन इकारस्य यकारकरणे ब्रह्मवधः स्यादिति चेन्न, "इकारस्तु परंब्रह्मस्वररूपाक्षरे परे । इस्वरूपं परित्यज्य यत्वमेति नटो यथा ॥" इत्युक्तेरिति ॥ इ इत्युच्चारणप्रसक्तौ य इत्युच्चारणीय इति रहस्यम् । एवं शब्दात्मकवर्णानां नित्यत्वमप्युपपद्यते" इ इति किम्, गोदुहौ, स्वरे किम्, दधि पश्य ।

( ख ) समुदायो हि अर्थवान् तदेकदेशोऽनर्थकः । अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम् । इति परिभाषया केवलेकारस्य यत्वं प्राप्नोति न तु दधिपदघटकीभूतेकारस्य यत्वप्राप्तिरस्ति तस्य तु एकदेशत्वेनानर्थकत्वादिति शङ्कां प्रदर्शयति-**किं चेति** । केवलं 'ई' पदं साध्नोति-**अस्यापत्यमिति** । अस्य वासुदेवस्य । 'अत इञनृषे' इति सूत्रेण अपत्यार्थे इञ्प्रत्यये सति इरिति स्यात् । ततः "इतो मनुष्यजातेरीप्" इति सूत्रेण ईप्कृते 'ई' इति सिध्यति । निरुक्तशङ्काया उत्तरमाह—**उच्यत इति** । सि-आदाविति 'स्यादौ' इति सूत्रनिर्देशेन 'अर्थवत्' परिभाषाया अनित्यत्वज्ञापनात् दधि आनयेति 'दध्यानय' इत्यादौ न यकारस्य निषेधः । ( ग ) **उक्तिः परास्तेति** । उक्तिरियं माधववासुदेवयोः।

तद्धितस्वरत्वाभावात् यस्य लोप इति यस्य लोपोऽपि न । नन्वत्र 'संयोगान्तस्य लोपः' इत्यनेन यलोपःकथं न स्यादिति चेत्सत्यम् । 'असिद्धं बहिरङ्गमन्तरङ्गे' इति न्यायेनान्तरङ्गं लोपं प्रति बहिरङ्गस्य यादेशस्य असिद्धत्वादिति गृहाण ॥ १ ॥

**( हसेऽर्हृहसः )** स्वरात्परो रेफहकारवर्जितो हसो हसे परे अवसाने च वा द्विर्भवति (क) ॥ २ ॥

**( सु० ) हसेऽर्हृहसः** ॥ र् च ह् च र्हौ न र्हौ यस्मिन् सोऽर्ह अत्र संयोगान्तस्येति हलोपो न सभिन्नस्येति निषेधात् । रकारहकारभिन्नः स्वरात्परो हसो द्विर्वा स्यात् अवसाने हसे च ॥ स्वरादिति किम् । तस्मिन् स्नातः । हसे किम् । भवानत्र । हसः किम् । तितउच्छत्रम् । अर्हिति किम् । ह्र्य्यनुभवः । नह्यस्ति । अवसाने यथा । वाक्क्-वाग्ग् दध्ध्य् इत्यत्रयकारस्य स्थानिवद्भावेन स्वरत्वमाश्रित्य हसेऽर्ह हस इति द्वित्वनिषेधो नाशंक्यो न तु वर्णमात्रविधाविति स्थानिवद्भावनिषेधात् (ख) ॥ २ ॥

**( त० ) हसेऽर्हृहस** इति । अत्र 'ङ्णनो ह्रस्वात्' इति पूर्वसूत्रात् ह्रस्वादित्यस्यानुवृत्तस्य च लक्षणया स्वपरत्वं बोध्यम् । यत्तु दात्रं पात्रमित्यादौ दीर्घाद्द्वित्वनिवृत्त्यर्थं ह्रस्वादित्येव वक्तुं योग्यमिति तन्न तत्र विकल्पेनैव तद्वारणसम्भवात् (ग) । अत्र 'संयोगान्तस्य लोपः' इत्यनेन हलोपो न रात्सस्यैव लोप इति नियमात् । र् च ह् च र्हौ ताभ्यामन्यः स तथा । अस्वरेऽर्ह हस इति तु सुवचम् ॥ २ ॥

**( झबे जबाः )** झसानां झबे परे जबा भवन्ति ॥ ३ ॥

**( सु० ) झबे जबाः** ॥ झसानां जबाः स्युर्झबे ॥ झसानामिति किम् , गीर्भ्याम् ॥ झबे किम् ॥ खञ्जौ ॥ दध्ध्य् इत्यत्रानेन धस्य दः ॥ ३ ॥

**(त०) झबे जबा** इति ॥ यत्तु झभे जबा इति तन्न भृजते भृजतीत्यादावव्याप्तेः ॥ ३ ॥

**(वर्ग्यो वर्ग्येण सवर्णः)** स्वरहीनं परेण संयोज्यम् ॥ दद्ध्यानय ॥ ४ ॥

**( सु० ) वर्ग्यो वर्ग्येण सवर्णः** ॥ वर्गे भवो वर्ग्यो वर्णो वर्ग्येण वर्णेन सह सवर्णो भवतीत्युक्तत्वात् । संयोगान्तस्येति यलोपे प्राप्ते अन्तःस्थानां प्रतिषेधो वाच्य इति

---

( क ) अत्रेदं पूरणीयम्—**"नादिन्याक्रोशे पुत्रस्य"** । पुत्रशब्दस्य न द्वे स्त आदिनीशब्दे परे आक्रोशे गम्यमाने। पुत्रादिनी त्वमसि पापे । आक्रोशे किम् , तत्त्वकथने द्विर्वचनं भवत्येव । पुत्रादिनी सर्पिणी।

**'तत्परे च'** । आदिनीशब्दपरके पुत्रशब्दे च परे पुत्रशब्दावयवस्य न द्वित्वम् । पुत्रपुत्रादिनी त्वमसि पापे ।

**'वा हतजग्धयोः'** । हतशब्दे जग्धशब्दे च परे पुत्रशब्दावयवस्य हसस्य द्वित्वं वा भवति । पुत्रहती, पुत्त्रहती । पुत्रजग्धी, पुत्त्रजग्धी ।

**'त्रिप्रभृतिषु शाकटायनस्य'** । त्र्यादिषु वर्णेषु संयुक्तेषु वा द्वित्वम् । इन्न्द्रः, इन्द्रः । राष्ष्ट्रम् , राष्ट्रम् ।

**'दीर्घादाचार्याणाम्'** । केषांचिदाचार्याणां मते दीर्घात्परस्य हसस्य न द्वित्वं भवति । दात्रम् । पात्रम् ।

( ख ) दधि—आनयेत्यत्र, दध्य्—आनयेति अवस्थायां 'यदादेशस्तद्वद् भवति' इति परिभाषया यकारस्य इकारत्वात्तेन च हसपरत्वाभावात् "हसेऽर्ह हसः" इति सूत्रेण धकारस्य द्वित्वं न स्यादिति **शङ्कते—दध्ध्य् इत्यादिना** । अस्या उत्तरं दर्शयति—**नत्विति** । अयमर्थः—वर्णमात्रविधौ स्थानिवद्भावो न भवतीति यकारस्य स्थानिवद्भावनिषेधात् धकारस्य द्वित्वं निराबाधमेव ।

(ग) यत्त्विति वासुदेवस्योक्तिः । वस्तुतस्तु ह्रस्वादित्येव वक्तुं योग्यम् । वैकल्पेन कृतेऽपि पक्षे द्वित्वप्रसङ्गात् ।

असिद्धं बहिरङ्गम् इति परिभाषया वा यलोपाभावः(क) ॥ स्वरेण हीनं स्वरहीनं व्यञ्जनं परेण वर्णेन सह संयुज्यते इत्यर्थः ॥ ४ ॥

( त० ) वर्ग्यो वर्ग्येणेत्यादि ॥ वर्गे भवो वर्ग्यः ॥ ४ ॥

**( अपाद्यवला वा द्विर्वाच्याः )** दध्यानय ॥ द्वित्वं धस्यैव यस्यैव नोभयोरुभयोरपि । दध्यानयादिषु प्राज्ञैर्बोध्यं रूपचतुष्टयम् ॥ ५ ॥

( सु० ) अपाद्यवला वा द्विर्वाच्याः ॥ अपप्रत्याहारात्परा यवला वा द्विः स्युः ॥ धकारयकारयोर्द्वित्वविकल्पाच्चत्वारि रूपाणि ॥ इह धकारस्य द्वित्वे जश्त्वे च कृते पुनर्दस्य द्वित्वं न भवति सकृच्छास्त्रं प्रवर्तते इत्युक्तत्वात् (ख) । अन्यथा द्वित्वानन्त्यापत्तिः ॥ द्विधं द्वियम् १ एकधं द्वियम् २ द्विधमेकयम् ३ एकधमेकयम् ४ दद्ध्य्यानय १ दध्य्यानय २ दद्ध्यानय ३ दध्यानय ४ ॥ ५ ॥

( त० ) अपादिति ॥ इति यकारस्य द्वित्वम् । तथा च धयोर्द्वित्वविकल्पाच्चत्वारि रूपाणि ॥ यत्तु नरोत्तमः । वणोप्रणीतसूत्राणामिति प्रतिज्ञाय तदतिरिक्तविधानेन प्रतिज्ञाभङ्ग इत्याशङ्क्यात्र रामो बभ्रामेत्युक्तवान् तत्स्वमतिभ्रमादेव(ग) । यतः पतञ्जलेर्मतं बुबुध्वेत्युक्त्वा पतञ्जलिमतावबोधपूर्वकत्वेन पतञ्जलिमतानुसरणविशिष्टवाणीप्रणीतसूत्रसंबन्धिसिद्धान्तचन्द्रिकाकरणप्रतिज्ञाया उद्देश्यत्वेन प्रतिज्ञाभङ्गाभावात् ॥ तथा च "रामाभिप्रायमज्ञात्वा तदुक्तौ दूषणार्पणम् । चकारानवबोधेन स्वयं भ्रान्तो नरोत्तमः ॥ नरोत्तमतया तस्य न नाम विहितं बुधैः । तृणोत्तमतया किं तु रलयोरैक्यभावनात् ॥" ५ ॥

**( रहाभ्यपो द्विः )** स्वरपूर्वाद्रेफात् हकाराच्च परो यपो वा द्विर्भवति ॥ जलतुम्बिकान्यायेन रेफस्योर्ध्वगमनम् ॥ गौर्य्यत्र । हर्य्यनुभवः । नह्य्यस्ति । व्यवस्थितविभाषया शसस्यापि द्वित्वम् ॥ पार्श्श्वम् । पर्श्वा इवण् । सस्स्यं वष्ष्मेत्यादौ ॥ ६ ॥

( सु० ) रहाभ्यपो द्विः ॥ स्वरात्पराभ्यां रेफहकाराभ्यां परा यपो द्विर्वा स्यात् ॥ स्वरादिति किम् । कि ह्नुते ॥ **ननु मद्रह्रद** इत्यत्र स्वरात्परात् हकाराद्रेफस्यापि द्वित्वप्रसंगः स्यादिति चेन्न, विशेषेण सामान्यस्य बाधात् । विशेषे हि रस्य निमित्तत्वं सामान्ये तु कार्यित्वम् । माठरकौण्डिन्यन्यायेन । तद्यथा—ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविषटामिति ब्राह्मणभोजने निमित्तभूतयोस्तयोर्भोजनं बाध्यते । तद्वद्यपस्य द्विरुक्तौ निमित्तस्य द्वित्वं बाध्यते(घ) । व्यवस्थितविभाषया शसस्यापि द्वित्वम् । कुत्रचिद्भवति

( क ) 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया संयोगान्तस्य लोपे कर्त्तव्ये बहिरङ्गस्य यादिशस्यासिद्धत्वान्न यलोप इति भावः । ( ख ) 'लक्ष्ये लक्षणं सकृदेव प्रवर्तते' इत्यप्युक्तत्वात् ।

( ग ) रामो **बभ्रामेति** । रामो रामाश्रमाचार्य्यः । अस्य ग्रन्थस्य कर्त्ता । स्वमतिभ्रमादेव नरोत्तममतिभ्रमादेव ।

( घ ) यपप्रत्याहारस्यानुवर्त्तित्वाद्रेफस्य द्वित्वमाशङ्कते—**नन्विति** ॥ शंकां निरस्यति—**नेति** । विशेषेण समान्यस्य बाधस्तु सार्वतन्त्रिकः । तदुक्तम्—"सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत्" इति । रस्य निमित्तत्वमिति यस्य द्वित्वं प्रतीति शेषः । रस्य कार्य्यित्वं तु स्वस्य द्वित्वापेक्षया । निमित्तत्वकार्य्यित्वयोर्दृष्टान्तमाह—**माठरकौण्डि-न्यन्यायेनेति** ।

न्यायं व्याचष्टे-**ब्राह्मणा इति** ॥ प्रकृते सङ्गमयति-**तद्वदिति** ॥ यपस्य द्विरुक्तौ निमित्तस्य रस्येत्यर्थः

कुत्रचिन्न भवतीयं व्यवस्थितविभाषा तथा । स्वरात्पराभ्यां रहाभ्यां परः शसो द्विः स्यादित्यर्थः ॥ पार्श्श्वम् । वर्ष्र्म ॥ ६ ॥

( त० ) रहाद्यपो द्विरिति । रश्च हश्चेति द्वन्द्वः । हकाराधिक्यं तु 'अचो रहाभ्यां द्वे' इति पाणिनिसूत्रानुसारात् ॥ मद्ध्रह्द इत्यादौ स्वरात्पराद्धात्परस्यापि रेफस्य न द्वित्वं माठरकौण्डिन्यन्यायेन तद्बाधात् । तद्यथा । ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविष्टामिति ब्राह्मणभोजने निमित्तभूतयोस्तयोर्भोजनं बाध्यते । एवमत्रापि यबुद्वित्वनिमित्तस्य रेफस्य न यपान्तर्गतत्वेन द्वित्वकार्यित्वम् । व्यवस्थितविभाषया शसस्यापि द्वित्वम् । पार्श्श्वं वर्ष्र्मेत्यादौ । पार्श्वा ड्वण् । णित्वाद्वृद्धिः । डित्वाट्टिलोपः ॥ ६ ॥

**( उ वम् ) मद्ध्ध्वत्र-मध्ध्वत्र—मद्ध्वत्र—मध्वत्र ॥ सूत्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्तनीयम्(क) ॥ ७ ॥**

( सु० ) उ वम् । यपा अबे जबा इत्यतः प्राक् स्वरे इत्यनुवर्तते । सूत्रेषु यत्पदं न दृष्टं तत् पदमन्यत्सूत्रं सूत्रान्तरं तस्मात्सूत्रान्तरादनुवर्तनीयमित्युक्तत्वात् । पूर्वसूत्राद् ग्रहणमनुवृत्तिः । उ वत्वं प्राप्नोति स्वरे परे ॥ एवम् ऋ रम् ऌ लमत्रापि पूर्ववत्सर्वं व्याख्येयम् । धस्य द्वित्वं जबत्वं च । मद्ध्ध्वत्र ॥ ७ ॥

( त० ) उ वमिति ॥ वत्वमापद्यत इति पूर्ववत् ॥मध्ध्वत्रेति ॥ अत्राति धकारवकारयोर्द्वित्वविकल्पाच्चत्वारि रूपाणि ॥ ७ ॥

**( ऋ रम् ) पित्रर्थः (ख) । ( ऌ लम् ) लनुबन्धः ॥ ८–९ ॥**

( सु० ) ऋ रम् । ऋ रत्वं प्राप्नोति स्वरे ॥ रत्वं तकारस्य द्वित्वम् ॥ पित्त्रर्थः ॥ ऌ लम् ॥ ऌ लत्वं प्राप्नोति स्वरे परे ॥ ९ ॥

( त० ) ऋ रमित्यादि पूर्ववत् ॥ पित्त्रर्थः इति ॥ अत्रापि तकारस्य द्वित्वविकल्पाद्रूपद्वयम् ॥ ऌ लमिति ॥ लनुबन्ध इति ॥ ऌ अनुबन्धो यस्येति विग्रहः ॥ ८–९ ॥

**( ए अय् ) नयनम् (ग) । ( ओ अव् ) भवनम् (घ) ॥१०–११॥**

( सु० ) ए अय् ॥ एरय् स्यात्स्वरे ॥ ओ अव् ॥ ओरव् स्यात्स्वरे ॥ १०–११ ॥

( त० ) ए अयिति ॥ प्रथमान्तं पदद्वयमपि । एवमुत्तरसूत्रेऽपि । नयनमिति ॥ 'णीञ् प्रापणे' इत्यस्माद्युटि 'युवोरनाकौ' इति अनादेशे । एवं भवनमपि भूधातोः॥१०-११॥

**(गोरग्वा पदान्ते स्वरे) टिकिताबाद्यन्तयोर्वक्तव्यौ ॥ गोअग्रम् गोऽग्रम् गवाग्रम् (ङ) । पदान्ते किम् । गवि । स्वरे किम् । गोहितम् ॥१२॥**

( सु० ) गोरग् वा पदान्ते स्वरे ॥ पदान्ते ओदन्तस्य गोरग् वा स्यात् स्वरे । किस्वादन्ते ॥ पदान्ते किम् । गवि ॥ ओदन्तस्य किम् । चित्रग्वग्रम्(च) ॥१२॥

---

(क) उवर्ण इति किम्, ककुभौ । स्वरे इति किम् मधु हरति । सूत्रेष्वदृष्टमिति । यत्र सूत्रान्तरैर्न कार्य्यसिद्धिस्तत्र सूत्रान्तरात्पदान्तरात्पदान्तरादनुवृत्तिर्ज्ञातव्या । ग्रन्थभूयस्त्वभयान्न तत्तैर्लिख्यते ।

(ख)ऋ इति किम् , सुगणौ । स्वरे किम् , कर्त्तृ पश्यत । ऌ इति किम् , मरुतौ । स्वरे किम् , ऌकारः ।

(ग)ए किम् , रायौ । स्वरे किम , नेता । (घ) ओ किम् , लावौ । स्वरे किम् , भोक्ता ॥

( ङ ) अत्र पक्षे असन्धिः । पक्षे अगागमः । पक्षे अलोपश्च बोध्यः ।

(च)चित्रा गावो यस्य यस्मिन् वेति विग्रहः । एकदेशविकृतमनन्यवदिति न्यायेन गोशब्दसद्भावेऽपि समस्तपदतया पदान्ततासत्त्वेऽपि च ओदन्तत्वाभावान्न अगागमः ।

( त० ) गोरग्वेति ॥ पदान्ते किम् । गवि । स्वरे किम् । गोहितम् । तथा च पाणिनिसूत्रे 'अवङ् स्फोटायनस्य' इत्यत्र 'अक् स्फोटायनस्य' इत्युचितम् । अगागमे कृते सति 'एचोऽयवायावः' इत्यवादेशे गवाग्रमित्यादिरूपसिद्धेः(क) ॥ १२ ॥

**(इन्द्राक्षयोः परतो गोरङ्नित्यम्)** गवेन्द्रः । गवाक्षः ॥१३॥

( सु० ) इन्द्राक्षयोः परतो गोरङ् नित्यम् ॥ पदान्ते ओदन्तस्य गोर्नित्यमङ् स्यात् इन्द्रेऽक्षे च परे ॥ गवां किरणानामक्षीव यः स गवाक्षः । टाङ्का इत्यप्रत्ययः । वातायने रूढोऽयम् । पुंस्त्वं लोकात् ॥ १३ ॥

( त० ) व्यवस्थितविभाषा चेयमित्याशयेनाह ॥ इन्द्राक्षयोः परत इति ॥१३॥

**(ऐ आय्)** नायकः । **(औ आव्)** पावकः ॥ १५ ॥

( सु० ) ऐआय् ॥ ऐराय् स्यात् स्वरे ॥ औ आव् ॥ औराव् स्यात् स्वरे ॥१५॥

( त० ) नायकः पावक इत्यत्र णीञ्पूञ्धातुभ्यां ण्वुलतृचाविति वुणि णित्वाद्वृद्धौ अकादेशे च रूपसिद्धिः ॥ १५ ॥

**( क्वचित्स्वरवद्यकारः )** गव्यूतिः स्त्री क्रोशयुगम् । अन्यत्र गोयूतिः ॥ १६ ॥

( सु० ) क्वचित्स्वरवद्यकारः ॥ क्वचित्स्वरेण तुल्यं स्वरवद्यकारः स्यात् ॥ स्वरे परे यत्कार्यं भवति तद्यकारे परेऽपीत्यर्थः ॥ तेन गव्यूतिरित्यत्राध्वनः परिमाण एवाव् । ''गव्यूतिः स्त्री क्रोशयुगम्''इत्यमरः ॥ अध्वपरिमाणाभावे गोयूतिर्गवां मिश्रीभाव इत्यर्थः॥ ननु गव्यूतिरित्यत्र व्योर्लोपशित्यनेन वकारस्य लोपश् कस्मान्न । उच्यते । व्यवस्थितविभाषाश्रयणात् संज्ञापूर्वकविधेरनित्यत्वाद्वा(ख) ॥ १६ ॥

( त० ) गव्यूतिरिति ॥ ''गव्यूतिः स्त्री क्रोशयुगम्'' इत्यमरः ॥ 'व्योर्लोपश् वा पदान्ते' इत्यत्र व्यवस्थितविभाषाश्रयणात् गव्यूतिरित्यादौ वलोपो न ॥ १६ ॥

**( क्षय्यं जय्यं शक्यार्थे )** क्षेतुं शक्यं क्षय्यं जेतुं शक्यं जय्यं सैन्यम् ॥ अन्यत्र क्षेयं पापम् । जेयं मनः ॥ १७॥

( सु० ) क्षय्यं जय्यं शक्यार्थे ॥ सामर्थ्यार्थे क्षय्यं जय्यमित्यत्राय् निपात्यते । क्षेतुं शक्यं क्षय्यम् । जेतुं शक्यं जय्यम् ॥ 'क्षि क्षये' 'जि जये' आभ्यां तव्यादयोऽर्हेऽर्थे विधौ शक्तौ चेति यः प्रत्ययः । शक्यार्थाभावे तु क्षेतुं योग्यं क्षेयं जेतुं योग्यं जेयम् । नात्राय्॥

( त० ) क्षय्यमित्यादि ॥ क्षेतुं शक्यं क्षय्यम् । जेतुं शक्यं जय्यम् । क्षि क्षये जि जये इत्यतः स्वराद्यः इति यप्रत्यये गुणे च क्षेयं जेयमिति ॥ १७ ॥

**( क्रयार्थे प्रसारितं क्रय्यम् )** क्रेयमन्यत् ॥ १८ ॥

( सु० ) क्रयार्थे प्रसारितं क्रय्यम् ॥ द्रव्यविनिमयार्थेऽय् निपात्यते ॥ अत्र प्रा-

---

( क ) पाणिनीयसूत्रे गौरवदोषं प्रदर्श्य लघुमार्गेण प्रक्रियामाह–तथा चेति । वस्तुतस्तु सूत्रमेतत् स्फोटायनस्य मतेनातो नात्र लाघवगौरवयोर्विचारणा समीचीना । आहतमते गौरवस्य ग्रन्थकर्तुरदोषात्।

( ख ) व्यवस्थितविभाषा तु कुत्रचिद्भवति कुत्रचिन्न भवतीत्येवं रूपा । तर्हि अत्र यलोपो न भवतीत्युक्तैवादिनो मतेनात्र भवतु इतोऽन्यत्र न भवत्विति शंकया पक्षान्तरं व्याचष्टे संज्ञापूर्वकेति ।

इका गृह्णीयुरिति बुद्ध्या हट्टे प्रसारितं वस्तु क्रय्यम् । द्रव्यविनिमयाभावे तु क्रेतुं योग्यं क्रेयं क्रयणार्हमित्यर्थः ॥ 'डुक्रीञ्, द्रव्यविनिमये' इत्यस्मात्तव्यादयोऽर्हेऽर्थे इति यः ॥ १८ ॥

( त० ) क्रयार्थे प्रसारितं क्रय्यमिति ॥ क्रेतारः क्रीणीयुरिति बुद्ध्या आपणे प्रसारितं क्रय्यं । क्रेयमन्यत् क्रयणार्हमित्यर्थः ॥ १८ ॥

**( अक्षादेरूहिन्यादावग्वक्तव्यः )** अक्षौहिणी सेना । प्रौढः । प्रौढिः । स्वैरम् । स्वैरी । स्वैरिणी ॥ १९ ॥

( सु० ) **अक्षादेरूहिन्यादावग् वक्तव्यः** ॥ अक्षादेरक् स्यादूहिन्यादौ परतः ॥ ऊहः समूहोऽस्त्यस्याः सा ऊहिनी अक्षाणामूहिनी अक्षौहिणी । परिमाणविशेषविशिष्टा सेना । संज्ञायां णत्वम् । "सासेनाऽक्षौहिणी नाम खागाष्टैकद्विकैः २१८७० र्गजैः । रथैश्चे २१८७० भाद्ध्यौघ्निऽनैः ६५६१० पञ्चघ्नैश्च पदातिभिः १०९३५० ॥ प्रमाणमिति ॥ प्रौढः । प्रौढिः । अर्थवद्ग्रहणे नानर्थकस्येति उढग्रहणे क्तान्तमेव गृह्यते न तु क्तवत्वन्तस्यैकदेशस्तेन प्रोढवानत्र नाक् (क) । स्वैरम् । स्वेन ईरितुं शीलमस्येति स्वैरी । णिन्यन्तः । अथवा ईरणमीरो घञन्तः । ततो मत्वर्थीय इनिः । स्वैरिणी ईबन्तः ॥ १९ ॥

( त० ) **अक्षादेरूहिन्यादा**विति ॥ अक्ष प्र स्व इत्यक्षादयः । ऊहिनी ईर ईरिणी ऊढः ऊढि इत्यूहिन्यादयः । अग्विधिसामर्थ्यादादौ सवर्णदार्घो न ॥ **अक्षौहिणी**ति ॥ सेनाविशेषस्य संज्ञा । तथा हि । "अक्षौहिण्यामित्यधिकैः सप्तत्या ह्यष्टभिः शतैः । संयुक्तानि सहस्राणि गजानामेकविंशतिः ॥ २१८७० ॥ एवमेव रथानां तु संख्यानं कीर्तितं बुधैः २१८७० । पञ्चषष्टिसहस्राणि षट्शतानि दशैव तु ॥ संख्यातास्तुरगास्तज्ज्ञैर्विना रथतुरङ्गमैः ६५६१० । नृणां शतसहस्राणि सहस्राणि नवैव तु ॥ शतानि त्रीणि चान्यानि पञ्चाशत्तु पदातयः १०९३५० ॥" सप्ततिसहिताष्टशताधिकैकविंशतिसहस्राणि गजाः । इत्यन्त एव रथाः । दशोत्तरषट्शताधिकानि पञ्चषष्टिसहस्राणि अश्वाः । पञ्चाशदुत्तरशतत्रयसहितं नवसहस्राधिकमेकलक्षं पदातय इत्यक्षौहिणीलक्षणम् ॥ १९ ॥

**य्वोर्लोपश्वा पदान्ते (ख)** । पदान्ते स्थितानामयादीनां यकारवकारयोर्लोपश् वा भवति ॥ त आगताः—तयागताः । पट इह—पटविह । हे सखयिति—हे सख इति । तस्मा इदम्—तस्मायिदम् । ता इह—ता विह ॥ लोपशि न संधिः । नलोपाशि तु भवति छन्दसि च श्वादेरिति निर्देशात् ॥ दामोदरः राजाश्वः ॥ २० ॥

( सु० ) **य्वोर्लोपश् वा पदान्ते** ॥ य् च व् च य्वौ तयोर्य्वोः । पदस्यान्तः

---

(क) अत्रेयमाशंका । प्र—उढवान्—प्रोढवानित्यत्र 'अक्षादेरूहिन्यादावक्' इत्यादिना अगागमः कथंनेति। अस्योत्तरमिदम् । ऊहिन्यादावित्यादिपदेन क्तान्तोढपदग्रहणात् 'अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्', इति परिभाषया न क्तवत्वन्तस्य ग्रहणम् । तेन प्रोढवानित्यत्र न अक् । तदुक्तम्—समुदायो हि अर्थवान् तदेकदेशोऽनर्थक इति ।

( ख ) 'वापदन्ते' इत्यत्र पदान्ते इत्येव च्छेदः न त्वपदान्त इति अन्यथा—अग्रिमसूत्रेऽप्यपदान्त इत्यनुवृत्तौ हरेर्भानोरित्यादिसिद्धौ ऽस्येति सूत्रस्य व्यर्थत्वापत्तेः । वान्त इत्येव वक्तव्ये पदान्त इति तु पर्य्यायशब्दानां गौरवं लाघवं नाद्रियत इति ।

पदान्तः अन्तशब्दोऽवयववाची । पदं तु विभक्त्यन्तमेव गृह्यते । पद्यते गम्यतेऽर्थोऽनेनेति व्युत्पत्तेः(क) । पूर्वसूत्रेभ्योऽय् अव् आय् आव् इत्यनुवर्तते । अनुवृत्तं च षष्ठ्या विपरिणम्यते । पदान्ते स्थितानामयादीनां य्वोर्लोपश् वा स्यात् । दाम उदरे यस्य स दामोदरः । राज्ञोऽश्वः राजाश्वः । नाम्नो नो लोपशिति लोपशि कृतेऽपि पुनः सन्धिजातः । समासे नलोपशि तु भवतीत्युक्तत्वात् । पदान्ते किम् । नायकः । पावकः । अयादीनां किम् । दध्यानय । मध्वत्र । ननु वृक्षं वाति वेति वा वृक्षवाः वृक्षवोः । वा गतिगन्धनयोः । वी गतिव्याप्तिप्रजननादौ । आभ्यां क्विप् , वृक्षवां वृक्षव्यं वा करोतीति ञिडिल्करणे इति ञि-प्रत्यये टिलोपे च सति स धातुरिति धातुत्वम् । ततः क्विपि ञिलोपे च वृक्षव् इति । वृक्षव् इहेत्यादावव्रूपस्य सत्त्वात् वकारस्य लोपश् कस्मान्न । उच्यते । अव् इति रूपस्य लाक्षणिकत्वान्न(ख) । अयादीनां रूपमव्युत्पन्नमेव ॥ २० ॥

( त० ) य्वोर्लोपश् वेति । य् च व् च य्वौ तयोः । अनन्तरोक्तत्वादयादीनामेव यकारवकारौ गृह्येते इत्याशयेनाह । अयादीनामिति । अयादयश्च अय् आय् अव् आव् । पदस्यान्तः पदान्तः । अन्तशब्दोऽवयववाची । पदं च विभक्त्यन्तमेव । अयादयश्चैतत्सूत्रभाषिता एव गृह्यन्ते । तेन वृक्षं वातीति वृक्षवाः तं करोति ञिडिल्करणे इति 'ञिप्रत्यये' टिलोपे च सति 'स धातुः' इति धातुत्वम् । ततः क्विपि ञिलोपे च वृक्षविति भवति । वृक्षविहेत्यत्र लोपो न ॥ पदान्ते किम् , नयनम् ॥ श्वादेरिति ॥ श्वा आदिर्यस्य सः श्वादिः तस्य । बहुव्रीहिरन्यार्थे इति समासे 'नाम्नो नो लोपशधौ' इति नलोपशि सवर्णे दीर्घः ॥२०॥

**( एदोतोऽतः ) पदान्ते स्थितादेकारादोकाराच्च परस्याकारस्य लोपश् भवति ॥ तेऽत्र । पटोऽत्र ॥ २१ ॥**

( सु० ) एदोऽतोतः ॥ अयवोरपवादः । एच्च ओच्च तयोः समाहारः एदोत् तस्मात् एदोतः । तपरकरणं स्पष्टार्थम् । प्लुतव्यावृत्तिः प्लुत इत्यादिना बोध्या । तेन आगच्छाग्ने३ अत्र तिष्ठ । एहि विष्णो ३ अत्र हविर्भुङ्क्ष्वेत्यादौ न संधिः । प्लुतस्य निषेधादिति(ग) । पदान्ते एदोतः परस्यातो लोपश् स्यात् ॥ पदान्ते किम् । नयनम् । भवनम् ॥ एदोतः किम् । तस्मै अन्नम् । तौ अत्र ॥ अतः किम् । ते आगताः ॥ २१ ॥

( त० ) एदोतोऽत इति ॥ एच्च ओच्च एदोत् तस्मात् । तपरकरणं सुखमुखोच्चारणार्थम् ॥ अत इति तपरकरणं दीर्घादिनिवृत्त्यर्थम् । तेन हरे आगच्छेत्यादौ लोपो न ॥ तेऽत्रेति ॥ अत्रापवादत्वाल्लोप एव न त्वयादयः ॥ २१ ॥

---

( क ) अन्तशब्दस्य शेषादिरूपबहुर्थवाचित्वादन्यार्थप्रतिषेधार्थमाह—अवयववाचीति । विभक्त्यन्तमेवेति । एव शब्देन न तु नैयायिकानामिवात्र 'शक्तं पदम्' इति तद्व्यवच्छेदः । पदस्य विभक्त्यन्तस्वरूपग्रहणे को हेतुरित्याह-पद्यते गम्यत इति । तथा च वैयाकरणानां विभक्त्यन्तस्यैवार्थवाचकत्वमिति ध्येयम् ।

( ख ) लाक्षणिकत्वादिति । लक्षणेन सूत्रेणोक्तो लाक्षणिकः सूत्रानुसम्बन्धद्वारेण कृत इत्यर्थः । वृक्षव् इहेत्यादाववादिरूपस्य लाक्षणिकत्वाभावाल्लोपशोऽभावः ।

( ग ) अत्र केचित्—एदोत इति तपरकरणं दीर्घव्यक्तेरेव निर्देशार्थं तेनागच्छाग्ने ३ अत्र तिष्ठेत्यादौ च स्पष्टार्थं वा पूर्वत्र 'प्लुत' इत्यनेन सन्धिनिषेधात् । माधवस्तु—क्वचित् प्लुतस्यापि सन्धिर्भवतीति ज्ञापनार्थं तत् । तेन सुश्लोक ३ इति सुश्लोकेतीत्यादौसिद्धमित्याहेत्याहः ।

**( गोर्वा )** तेन गोअजिनम्–गोऽजिनम्–गवाजिनम् ॥ २२ ॥

( सु० ) **गोर्वा** ॥ पदान्ते ओदन्तात् गोशब्दात् परस्यातो लोपश् पक्षे प्रकृतिभावश्च॥ ओदन्तात्किम् । चित्रग्वग्रम् ॥ पदान्ते किम् । गोः ॥ प्रकृतिभावे गो अजिनम् ॥ अल्लोपे गोऽजिनम् । गोरग्वेत्यगागमे गवाजिनम् ॥ २२ ॥

( त० ) **गोर्वेति** । गोशब्दादकारस्य लोपो वेत्यर्थः । तेन गोजिनमित्यत्र रूपत्रयम् २२

**( सवर्णे दीर्घः सह )** समानस्य सवर्णे परे सह दीर्घोभवति ॥

दैत्यारिः । श्रद्धाऽत्र । दधीह । भानूदयः । श्रीशः । होतॄकारः । होत्लृकारः(क)॥

"सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत् ॥
परेण पूर्वबाधो वा प्रायशो दृश्यतामिह" ॥ २३ ॥

( सु० ) **सवर्णे दीर्घः सह** ॥ सवर्णशब्दस्य च ससंबन्धिकत्वात्सवर्णादिति लभ्यते । वर्णशब्दोऽक्षरेऽस्ति । "वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाक्षरे ॥" इत्यभिधानात् ॥ सशब्देन तु समानशब्दो लक्ष्यते । नामैकदेशेनापि नामग्रहणस्य संमतत्वात् सगोत्रः सनामेत्यादाविव समानशब्दस्यादेशः स इति वा । ततः समानं च तद्वर्णं च सवर्णं तस्मात् । सवर्णसंज्ञकस्य सवर्णस्यात्रग्रहणं नास्ति किंतु यौगिकस्य ग्रहणं तेन समानसंज्ञात्मको वर्णः समानशब्देन ग्राह्यो न तु तुल्यार्थकः । समानसंज्ञकाद्वर्णात्सवर्णे परे सह दीर्घो भवतीत्यर्थः ॥ सहग्रहणं तूभयोः स्थानित्वलाभार्थं कृतम् । तच्च नामी इति यावदनुवर्तते ॥ ननु विना सहेत्यनेन सहशब्दयोगे तृतीया किं न स्यात् । उच्यते । उपपदविभक्तेः कारकविभक्तिर्बलीयसीत्युक्तत्वात्(ख) सहशब्दयोगे विधीयमाना तृतीयोपपदविभक्तिः । सवर्णे इति सप्तमी तु भावे सामीपिकाधारे वा विहिता कारकविभक्तिः क्रियान्वयित्वात् क्रियापदमध्याहृतं भवति । भवतिनायोगे दीर्घ इत्यत्रान्योक्ते इत्यनेन प्रथमाऽपि कारकविभक्तिः । सवर्णे किम् ॥ दध्यत्र मध्वेतत् । दधीह भानूदयः श्रीशः वधूपमेत्यादौ उकारादौ वकरादिप्राप्तिः सवर्णे दीर्घ इत्यस्य प्राप्तिश्चास्ति तत्र किं भवतीत्यत आह । **सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत्** ॥ नूनमित्यव्ययं निश्चये विचारे वा । बहुव्यपकं शास्त्रं सामान्यशास्त्रम् । शासनाच्छास्त्रं लक्षणं सूत्रमित्यर्थः ॥ तस्मादल्पव्यापकोऽपवादो भवतीत्यर्थः । यथा रामोऽत्रेत्यादौ लोपशोऽपवाद उत्वम् ॥ सर्वस्मै इत्यादौ ङेरगित्यस्यापवादः स्मट् ॥ कार्येऽणित्युत्सर्गः आतो ङ इत्यपवादः ॥ नुडागम इत्युत्सर्गः छुडागम इत्यपवादः ॥ एवं यत्ववत्स्वरत्वादिविधिरुत्सर्गः दीर्घविधि-

---

(क) तथा च सवर्णविधौ प्राचामुक्तिः–"क्रमेण वैपरीत्येन गुरूणां गुरुभिः सह । लघूनां लघुभिः सार्द्धं लघूनां लघुभिः–सह ॥ गुरूणां लघुभिः सार्द्धं चतुर्द्धेति सवर्णता ॥" इति ॥ केचित्तु–'अदीर्घो दीर्घतां याति नास्ति दीर्घस्य दीर्घता । पूर्वदीर्घस्वरं दृष्ट्वा परलोपो विधीयते' ॥ इत्युक्तेः श्रद्धात्रेत्यादौ परवर्त्तिनोऽकारस्य लोप इत्याहुः । तन्न । पर्ज्जन्यवल्लक्षणप्रवृत्तिरिति दीर्घस्यापि दीर्घो भवितुमर्हति । अथवा मतं बुद्ध्वा पतञ्जलेरित्युक्तत्वाद् भाष्यविरुद्धत्वेन तदुपेक्ष्यम् । **सामान्येति** । बहुव्यापदं सामान्यमल्पव्यापको विशेषः ।

( ख ) पदान्तरयोगनिमित्तिका विभक्तिरुपपदविभक्तिः, कारकनिमित्तिका विभक्तिः कारकविभक्तिः क्रियान्वयित्वस्य कारकत्वात् । तयोर्मध्ये कारकविभक्तिर्लघीयसी भवति । 'अन्तरान्तरेण इति सूत्रे भाष्ये पठितमिदं वचनम् ।

रपवादः ॥ पुनः परिहारान्तरमाह ॥ **परेण पूर्वबाधो वा** ॥ वेति पक्षान्तरे । सूत्रपाठे परेण परपठितेन विधिना पूर्वबाधः क्रियते पूर्वपठितो विधिर्बाध्यत इत्यर्थः ॥ इदं परिहारान्तरं च नित्यान्तरङ्गापवादव्यतिरिक्तस्थले एव द्रष्टव्यम् । तत्र नित्यं बाधकमावश्यकत्वात् ॥ अन्तरङ्गं तु बाधकं लाघवात् । अपवादस्तु बाधको भवति वचनप्रामाण्यात् । नुमागम-इआदेशयोः यथा प्रधीनीत्यादौ परेण नुमा य्वौ वेति यत्वं बाध्यते तथा दीर्घविधिना यत्वादिविधिर्बाध्यते ॥ ननु वारीणां स्त्रीणामित्यादौ परत्वान्नुमियोः सतोर्नुडागमो न स्यादित्यत आह—**प्रायशो दृश्यतामिह** ॥ प्रायश इत्यव्ययं बाहुल्येऽर्थे । इह शास्त्रे पूर्वोक्तो न्यायो बाहुल्येन भवन्निदृश्यतां ज्ञायतां न सर्वत्र(क) । दृशिर्ज्ञापनार्थः । 'दृशिर्ज्ञानेऽक्षिण दर्शने' इत्युक्तत्वात् । कर्मणि लोट् । प्रायश इति कथनात् क्वचित्पूर्वेणापि परविधिर्बाध्यते इति दृश्यताम् । यथा स्त्रीणां वारीणामित्यादावियङ्नुमौ परावपि पूर्वेण नुटा बाध्येते ॥ २३ ॥

( त० ) **सवर्णे दीर्घः सहेति** ॥ सवर्णशब्दस्य ससंबन्धिकत्वात्सवर्णस्येति लब्धम् । सवर्णसंज्ञा च समानस्यैव नान्यस्येति स्पष्टार्थम् ॥ **समानस्येति** । सहयोगे तृतीया तु न उपपदविभक्तित्वात् । सप्तम्यास्तु सामीपिकाधारे विहितत्वात्कारकविभक्तित्वम् । दीर्घ इति प्रथमायाश्चाध्याहृतभवतिना योगादन्योक्त इत्यनेन विहितत्वात्कारकविभक्तित्वम् ॥ 'उपपदविभक्तेः कारकविभक्तिर्बलयसी' इति वचनात् । समानस्येति किम् । हरये ॥ **श्रद्धाऽत्रेति** ॥ पर्जन्यवल्लक्षणप्रवृत्तिरिति दीर्घस्यापि दीर्घः ॥ 'यत्तु अदीर्घो दीर्घतां याति' इत्यादि कलापानुसारिभिरुक्तं तद्भाष्यविरोधादुपेक्ष्यम् । 'अलोऽलि दीर्घः' इत्येव सुवचम् ॥ **सामान्यशास्त्रत इत्यादि** ॥ बहुव्यापकं सामान्यम् । अल्पव्यापको विशेषः ॥ २३ ॥

**( हलादेरीषादौ टेर्लोपो वक्तव्यः )** हलीषा । लाङ्गलीषा । मनीषा । मधोम् । शकन्धुः । कर्कन्धुः । कुलटा । पटत् इति पटिति ॥ **सारङ्गः पशुपक्षिणोः** । साराङ्गोऽन्यः ॥ **सीमन्तः केशवेशे** । सीमान्तोऽन्यः(ख) ॥ २४ ॥

( सु० ) **हलादेरीषादौ टेर्लोपो वक्तव्यः** ॥ हलादेष्टेर्लोपः स्यादीषादौ परे ॥ 'ईष उञ्छे' 'ईष गत्यादिषु' च । आभ्यां गुरोर्हलादित्यङ्प्रत्यये ईषाशब्दः । हलस्य ईषा हलीषा । लाङ्गलदण्डः । लाङ्गलस्य ईषा लाङ्गलीषा ॥ मनसः ईषा मनीषा ॥ शकानां देशविशेषाणामन्धुः कूपः शकन्धुः ॥ कर्काणां राज्ञामन्धुः कर्कन्धुः ॥ अटतीत्यटा । पचाद्यच्प्रत्ययः । कुलस्याटा कुलटा । यदा तु कुलमटतीति विगृह्येत तदा कार्येऽणित्यण्—

---

( क ) वेदान्तशास्त्रादावयमेव श्लोकार्थो भूतसृष्ट्यादिक्रमे विनियुज्यते । यथा—भूतसृष्टौ प्रथमभूतं बाधित्वा परं महाभूतं समुत्पद्यते । प्रमाणं चात्र—"तस्माद्वा एतस्मादात्मन आकाशः संभूतः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधिभ्योऽन्नम् , अन्नाद्रेतः, रेतसः प्रजाः, इत्येष भूतसर्गः" इत्यादिषु पूर्वं पूर्वं बाधित्वा उत्तरोत्तरं प्रवर्तते परोत्तरं पूर्वस्माद्बलवत् ।

( ख ) हलादिरीषादिश्चाकृतिगणः, तेन पतञ्जलिर्मार्तण्डश्चेत्यादि सिद्धम् । तथा चोक्तम्—
हलीषा लाङ्गलीषा च मनीषा च तथैव च । शकन्धुश्च कर्कन्धुः सीमन्तः कुलटा तथा ॥
पतञ्जलिश्च सारङ्गो मार्तण्डः पटितीति च । एवं हलादावुन्नेयो यथा पाठो मनीषिभिः ॥

प्रत्यये ईपि च कुलटीनि स्यात् ॥ अन्यस्मिन् अर्थे साराणि प्रधानान्यङ्गानि यस्य स सारङ्गः । टिलोपो न ॥ केशवेशे केशरचनायामर्थे टिलोपो भवति । सीमन्तः । अन्यस्मिन् अर्थे सीमाया अन्तः । सवर्णे दीर्घः । सीम्नो अन्तः सीमान्त इति वा । नाम्नो नो लोपशिति नलोपे कृते दीर्घोऽत्र । 'सीमसीमे स्त्रियामुभे इत्यमरः ॥ २४ ॥

( त० ) हलादेरिति ॥ हलादेरीषादेश्च आकृतिगणत्वं बोध्यम् । तेन पतञ्जलिमार्तण्ड इत्यादि सिद्धम्(क) ॥ हलाषेति ।। 'ईषा लाङ्गलदण्डः स्यात्' इत्यमरः ॥ मनीषेति ॥ 'बुद्धिर्मनीषा धिषणा' इत्यपि च ॥ शकन्धुरिति ।। शकानां देशविशेषाणामन्धुः कूप इत्यर्थः ॥ सीमान्तोऽन्य इति । सीम्नः अन्तः सीमान्तः ॥२४॥

( ओत्वोष्ठयोः समासे वा ) ओऔ औ अवर्णादोकारे औकारे च परे सह औकारो भवति ॥ बिम्बोष्ठः–बिम्बौष्ठः । स्थूलोतुः–स्थूलौतुः । समास इति किम । तवोष्ठः ॥ २६ ॥

( सु० ) ओत्वोष्ठयोः समासे वा । समासे अकारस्य लोपो वा स्यादोतुशब्दे ओष्ठशब्दे च परे ॥ बिम्बवदोष्ठौ यस्य स बिम्बोष्ठः । स्थूलश्चासौ ओतुश्च स्थूलोतुः । 'ओतुविडालो मार्जारः' इत्यमरः ॥ एकस्मिन्समासे इदं प्रवर्तते । तेनेह न । हे वृषलसुतौष्ठव्रणस्ते इति(ख) । पक्षे औत्वम्॥ ओऔ औ ॥ आद्यौ सप्तम्यन्तौ प्रथमान्तोऽन्त्यः॥२६॥

( त० ) ओत्वोष्ठयोरिति ॥ ओतुश्च ओष्ठश्च तौ तयोः । अत्र स्वराद्यन्तत्वादोष्ठशब्दस्य पूर्वनिपाते न्याय्ये स्वराद्यदन्तम् इत्यस्यानित्यत्वज्ञापनायेदम् । स्थूलोतुरिति॥ स्थूलश्चासौ ओतुश्च स तथा । ओतुर्मार्जारः । ननु वृषलसुतौष्ठव्रणस्ते इत्यत्र कथं न टिलोपः स्यादिति चेत्सत्यम् । ओत्वोष्ठयोश्चैकत्र समासे स्थितावदं बोध्यम् ॥ २६ ॥

(एदोदादौ धातौ) अवर्णान्तोपसर्गस्य लोपः॥ प्रेजते। उपोषति॥२७॥

( सु० ) एदोदादौ धातौ ॥ अवर्णोऽन्ते यस्य स अवर्णान्तः अवर्णान्तश्चासौ उपसर्गश्च अवर्णान्तोपसर्गस्तस्य अवर्णान्तोपसर्गस्य लोपः स्यात् ॥ एच्च ओच्च एदोतौ एदोतावादौ यस्य स एदोदादिस्तस्मिन् एदोदादौ जातौ परे ॥ एजृ दीप्तौ कम्पने च । कम्पनार्थस्तु परस्मैपदी प्रेजतीति । प्रेजते इति दीप्त्यर्थः ॥ २७ ॥

( त० ) एदोदादाविति ॥ एच्च ओच्च एदोत् स आदिर्यस्य स तथा तस्मिन् ॥ प्रेजत इति ॥ एजृ दीप्तौ । न तु एजृ कम्पने भ्वादिः तस्य परस्मैपदित्वात् ॥ उपोषतीति॥

(क) पतञ्जलिरिति । पतन् अञ्जलिर्यस्मिन्नमस्कार्यत्वादिति विग्रहः । अत्र टेरतोलोपः ।
केचित्तु—गोनर्दाख्यदेशे कस्यचिदृषेः सन्ध्योपासनासमये अञ्जलेर्निर्गत इत्यैतिह्यात् अञ्जलेः पतन्निति विगृह्णन्ति । मयूरव्यंसकादित्वात् समासः । मार्तण्ड इति । मृतं अण्डं यस्य स मृतण्डः कश्चिदृषिः मृतं अण्डं इति स्थिते सवर्णदीर्घंबाधित्वा अनेन सूत्रेण टेर्लोपः : ततः 'अपत्ये अण्' इत्यणि मार्त्तण्डः । 'परामार्त्तण्डमास्यत्' इति सवर्णदीर्घस्तु च्छान्दसः ।

(ख) वृषलया सुत इति वृषलसुतः तत्सम्बोधने हे वृषलसुत : ओष्ठयोर्व्रण इति ओष्ठव्रणः । हेवृषलसुत ओष्ठव्रणस्ते–हे वृषलसुतौष्ठव्रणस्ते । इत्यादौ उभयदलयोः समाससद्भावेऽपि ओष्ठशब्दस्य परवर्त्तित्वेऽपि एकसमासाभावान्न टकारस्य लोपः किं तु 'ओ औ औ' इति औकार एव । तथा च यच्छब्दोत्तरवर्त्तिवर्णमात्रेण सह यच्छब्दपूर्ववर्त्तिवर्णमात्रस्य सन्धिर्विवक्षितस्तयोर्यदि एकसमासमात्रित्वं स्यात् तदा ओष्ठशब्दे ओतुशब्दे च परे टेर्लोपः स्यादित्यर्थः ।

उपदाहे । एदोदादिकं कृत्रिममकृत्रिमं च ग्राह्यं विशेषानुपादानात् एत्येधत्योरिति निषेधाज्ज्ञापनाच्च(क) ॥ २७ ॥

**(एदोदादौ नामधातौ वा)** उपेडकीयति-उपैडकीयति । प्रोघी-यति–प्रौघीयति ॥ २८ ॥

( सु० ) **एदोदादौ नामधातौ वा** ॥ अवर्णान्तोपसर्गस्य वा लोपः स्यात् । एदोदादौ नामधातौ परे ॥ आत्मन एडकमिच्छतीत्येडकीयति । नाम्नो य ई चास्येति यः । आत्मन ओघमिच्छतीत्योघीयति ॥ २८ ॥

( त० ) **उपेडकीयति इति** ॥ एडकमिच्छति इति वाक्ये नाम्नो य ई चास्येति सूत्रेण यप्रत्ययेऽकारस्येकारादेशे रूपसिद्धिः । एवं प्रोघीयतीत्यादि ॥ २८ ॥

**( एत्येधत्योर्न )** उपैति । उपैधते ॥२९॥

( सु० ) **एत्येधत्योर्न** ॥ अवर्णान्तोपसर्गस्य लोपो न भवति एतिश्च एधतिश्च इति एत्येधती तयोरेत्येधत्योः परतः ॥ संध्यक्षराद्योरेत्येधत्योरेव । तेनेह न । उपेतः ( ख ) । मा भवान्प्रेदिधदिति ॥ प्रपूर्वस्य एधतेर्ण्यन्तस्य लुङि परे अङि परे अङि ह्रस्वाविति ह्रस्वे कृते पश्चाद् द्वित्वे मेट इत्यडागमाभावे रूपम् ॥ २९ ॥

( त० ) **एत्येधत्योरिति** ॥ इण् गतौ । एध वृद्धौ ॥ २९ ॥

**(प्रस्यैष्यैषयोर्न)** एष्यः–एषः । प्रैष्यः-प्रैषः । प्रस्य किम् । अपेषः॥३०॥

( सु० ) **प्रस्यैष्यैषयोर्न** ॥ प्रोपसर्गस्याकारस्य लोपो न स्यादेष्यशब्दे एषशब्दे च परे ॥ एदोदादौ धाताविति प्राप्तेऽयं निषेधः । इषु इच्छायां तुदादिः । इष गतौ दि-वादिः । इष आभीक्ष्ण्ये क्र्यादिः । एषां धातूनां घञ्प्रत्यये घ्यण्प्रत्यये च एषः एष्यः इति रूपे भवतः । किंच एषसाहचर्यादेष्योऽव्ययनव्ययं गृह्यते । तेन ल्यन्तादिषेः कयपि कृते एष्ये-त्यव्ययम् ( ग ) । तत्राकारस्य लोपो भवतीत्यर्थः । प्रेष्य गतः इति ॥ ३० ॥

( त० ) **प्रैष इति** ॥ इषु इच्छायां तुदादिः । इष गतौ दिवादिः । इष आभी-क्ष्ण्ये क्र्यादिः । घञि घ्यणि च एष एष्य इति रूपे सिद्धे । तत्र लोपे प्राप्तेऽनेन निषेधः । यत्तु ईष उञ्छे यश्च ईष गतिहिंसादानेषु तयोर्दीर्घोपधत्वादीष, ईष्यस्तत्रैत्वे प्रेष्यः ॥३०॥

**( एवेऽनवधारणे )** अद्येव । अवधारणे त्वद्यैव ॥ ३१ ॥

( सु० ) **एवेऽनवधारणे** ॥ अकारस्य लोपः स्यादनिर्धारणे एवशब्दे परे ॥ अद्येव कुरु । अनिश्चयार्थे एवशब्दोऽत्र । निश्चयेऽर्थे त्वकारस्य लोपो न । अद्यैव ॥३१॥

( त० ) **एवेऽनवधारणे इति** ॥ एवशब्दे परे अनवधारणेऽर्थे अकारान्तपूर्वपदस्य लोप इत्यर्थः ॥ ३१ ॥

---

( क ) प्रेजत इत्यत्र एज्धातोरेकारस्याकृत्रिमत्वम् यथाप्रकृत्यैव स्थितत्वात् । उपोषतीत्यत्र उष्धा-तुसम्बन्धिन ओकारस्य कृत्रिमत्वम् , गुणविधानेन उकारस्य ओकाररूपत्वात् ।

( ख ) उपेत इति उपोपसर्गादितेे रूपम् ।

(ग) **अव्ययमिति** । क्त्वाद्यन्तं चेत्यादिनाव्ययत्वम् । साहचर्य्यवशादव्ययस्य प्रतिसिद्धत्वात् प्रेष्यगत इत्यादौ लोपनिषेधाभाव एव ।

**( अ इ ए ) अवर्णादिवर्णे परे सह ए भवति(क) ॥ ममेदम् ॥३२॥**

( सु० ) अ इ ए ॥ अ इति पञ्चम्यन्तम् । इ इति सप्तम्यन्तम् । ए इति प्रथमान्तं संकेतितम् ॥ ३२ ॥

( त० ) अ इ ए इति ॥ अ इति पञ्चम्यन्तमित्यभिप्रेत्याह ॥ अवर्णादिति ॥ इ इति सप्तम्यन्तम् । यत्तु प्राचा अ इत्यस्य प्रथमान्तत्वमङ्गीकृत्य अवर्णे इवर्णे पर इति विवृतं तत्पाणिनीयग्रन्थानुसारित्वादुपेक्षितम् ( ख ) ॥ ३२ ॥

**( उ ओ ) अवर्णादुवर्णे परे सह ओ भवति(ग) ॥ गङ्गोदकम् ॥३३॥**

( सु० ) उ ओ ॥ उ इति सप्तम्यन्तम् । ओ इति प्रथमान्तं संकेतितम् ॥३३॥

( त० ) उ ओ इति ॥ उ इति सप्तम्यन्तम् ॥ ३३ ॥

**( ऋ अर् ) अवर्णादृवर्णे परे सह अर् भवति(घ) ॥ ३४ ॥**

( सु० ) ऋ अर् ॥ ऋ इति सप्तम्यन्तम् । अर् इति प्रथमान्तं संकेतितम् ॥३४॥

( त० ) ऋ अरिति ॥ ऋ इति सप्तम्यन्तम् ॥ ३४ ॥

**(हसात्परस्य झसस्य लोपो वा सवर्णे झसे) तवर्धिः । तवर्द्धिः ॥३५॥**

( सु० ) हसात्परस्य झसस्य लोपो वा सवर्णे झसे । हसात्किम् । प्रत्तम् ॥ झसस्येति किम् । शार्ङ्गम् ॥ झसे इति किम् । प्रियपञ्चानाम् ॥ सवर्णे किम् । तर्हि ॥ तव ऋद्धिरित्यत्रार् । ततो 'रहाद्यपो द्विः' इत्यनेन पक्षे ऋद्धेर्धस्य द्वित्वम् । द्वित्वाभावे लोपे सति एकधम् । तवर्धिः । लोपाभावपक्षे द्वित्वलोपयोर्वा द्विधम् तवर्द्धिः । द्वित्वे सति लोपे चासति त्रिधम् । तवर्द्धिः । यवलाद्यपो द्विर्वेति लक्षणान्तरेण पुनर्द्वित्वे चतुर्धमपि बोध्यम् ॥३५॥

( त० ) तवर्द्धिरिति ॥ रूपत्रयम् । तथा च द्वित्वाभावे लोपे सत्येकधम् । असति लोपे द्वित्वलोपयोर्वा द्विधम् । सति द्वित्वे लोपे चासति त्रिधम् ॥ ३५ ॥

**( ऌ अल् ) अवर्णात् ऌवर्णे परे सह अल् भवति(ङ) ॥ ३६ ॥**

( सु० ) ऌ अल् ॥ ऌ इति सप्तम्यन्तम् । अल् इति प्रथमान्तम् ॥ 'हसेऽर्हं हसः,' इत्यनेन लस्य द्वित्वम् ॥ ३६ ॥

( त० ) ऌ अलिति ॥ ऌ इति सप्तम्यन्तम् ॥ ३६ ॥

**(यवलाद्यपो द्विर्वा) तवरकारः—तवरल्कारः तवल्लकारः तवल्लकारः ॥३७॥**

( सु० ) यवलाद्यपो द्विर्वा ॥ अर्थवशाद्विभक्तिविपरिणाम इत्यनेन यपाद् यवला

---

( क ) अ इति किम् , मध्विति । इ इति किम् , अद्यात्र । अ इति पञ्चम्यन्तं सांकेतिकम् । अविभक्तिकनिर्देशो वा । इ इति सप्तम्यन्तं तथैव ए इत्यपि प्रथमान्तमेवमुत्तरत्रापि बोध्यम् । अत इत्यनुवृत्त्यैव सिद्धेः अकारग्रहणेन तपरस्तत्कालव्यक्तेरेव ग्राहको न भिन्नकालव्यक्तेरिति प्रमाणदार्ढ्यायेति ।

( ख ) प्राचेति । अनुभूतिस्वरूपाचार्यादिभिः । सारस्वतादौ 'अवर्ण इवर्णे पर' इति विवृतिर्दृश्यते ।

( ग ) उ किं देवात्र । गङ्गोदकमिति षष्ठीतत्पुरुषे पूर्वपरयोरोकारः ।

( घ ) केचिदत्र 'क्वचिदार्' इति वार्त्तिकं पठन्ति तन्नादरणीयम् , वेत्यनुवृत्त्यैवेष्टसिद्धेः । 'प्रवत्सतर' ऋदादौ' इत्यादिशास्त्रस्य जागरूकत्वाद्वा ।

( ङ ) कैश्चिदत्र 'क्वचिदाल्' इति वक्तव्यमित्युक्तं तदप्यरुचिकरम् । वेत्यनुवृत्त्यैवेष्टसिद्धेः 'ऌदादौ नामधातौ वाऽऽल्' इति जागरूकत्वाद्वा ।

वा द्विरित्यस्य स्थाने यवलादिति पञ्चमी । यप इति प्रथमेति पक्षे ककारस्यापि द्वित्वे तवल्कार इत्यत्र रूपचतुष्टयं भवति ॥ " द्वित्वं लस्यैव कस्यैव नोभयोरुभयोरपि। तवल्कारादिषु बुधैर्बोध्यं रूपचतुष्टयम् ॥ ३७ ॥

( त० ) यवलाद्यपो द्विर्वेति 'हसेऽर्ह्हसः' इति द्वित्वविकल्पाच्चत्वारि रूपाणि । एवं प्राल्कारीयतीत्यादावपि बोध्यम् ॥ ३७ ॥

(एऐ ऐ) अवर्णादेकारे ऐकारे च परे सह ऐकारो भवति ॥ तवैषा । देवैश्वर्यम् ३८

( सु० ) एऐ ऐ ॥ आद्यौ सप्तम्यन्तौ प्रथमान्तोऽन्त्यः ॥ ३८ ॥

( प्रवत्सतरकम्बलवसनार्णदशभ्य ऋणे ) प्रार्णम् । वत्सतरार्णम् । कम्बलार्णम् । वसनार्णम् । ऋणार्णम् । दशार्णः ॥ ३९ ॥

( सु० ) प्रवत्सतरकम्बलवसनार्णदशभ्य ऋणे ॥ एषामृणशब्दे परे आर् भवति ॥ इह केचित् वत्सशब्दं प्रक्षिपन्ति(क) । भाष्ये तु वत्सशब्दो नोक्तः । ऋणस्यापनयनाय यदन्यदृणं क्रियते तदृणार्णम् । वत्सतरस्य ऋणं वत्सतरार्णमित्यत्र 'हसेऽर्ह् हसः' इत्यनेन तकारसकारयोर्द्वित्वविकल्पाच्चत्वारिरूपाणि । 'खपात् शसस्य छिः' इति वार्तिकेन वा सकारद्वित्वे चतुर्विंशतिः । रेफात्परस्य णस्य तु 'रहाद्यपोद्विः' इत्यनेन द्वित्वे 'यवलाद्यपो द्विर्वा' इति वचनान्तरेण पुनर्द्वित्वे एकणं द्विणं त्रिणमिति द्वादश । दशार्णो देशः ॥ दशार्णा नदी च ॥ ३९ ॥

( त० ) प्रवत्सतरेत्यादि ॥ प्रादिभ्यः षड्भ्यः ऋणशब्दे परे सह आर् भवतीत्यर्थः । प्रार्णमित्यादि ॥ प्रकृष्टम् ऋणमिति विग्रहः ॥ वत्सतरार्णमित्यादि ॥ वत्सतरेण देयमृणमित्यादि । एवं कम्बलार्णमित्याद्यपि ॥ ऋणार्णमिति ॥ ऋणस्यापनयनाय यदृणं क्रियते तदृणार्णमित्यर्थः ॥ दशार्णो देशः । नदी च दशार्णा । ऋणशब्दो दुर्गभूमौ जले च । अत्र कालापानुसारिणः वत्सशब्दमपि पठित्वा वत्सेन देयम् ऋणं वत्सतरार्णमित्युदाहरन्ति । तत्सर्वं भाष्यादिविरुद्धम् ॥ ३९ ॥

( ऋदादौ नामधातौ वा ) प्रार्षभीयति—प्रर्षभीयति ॥ ४० ॥

( सु० ) ऋदादौ नामधातौ वा ॥ अवर्णान्तादुपसर्गादृदादौ नामधातौ परे सह वाऽऽर् भवति ॥ आत्मन ऋषभमिच्छतीति ऋषभीयति । यप्रत्ययः ॥ ४० ॥

( त० ) ऋदादावित्यादि ॥ प्रार्षभीयतीत्यादि । ऋषभमिच्छति ऋषभीयति । नाम्नो य ई चास्येति यप्रत्ययः । अवर्णस्येकारः ॥ ४० ॥

( अवर्णान्तादुपसर्गादृकारादौ धातावार् ) उपार्छति ॥४१॥

( सु० ) अवर्णान्तादुपसर्गादृकारादौ धातावार् ॥ उपसर्गादिति किम् । खट्वर्छति ॥ ऋकारादौ किम् । उपेतः ॥ धातौ किम् । उपर्कारः ॥ ४१ ॥

( त० ) उपार्छतीति ॥ ऋ गतौ भ्वादिः । इशादेः पश्यादिरित्यनेनास्य ऋच्छादेशः । ननूपार्च्छतीत्यत्र 'स्नोर्विसर्गः' इत्यनेन रेफस्य विसर्गोऽस्त्विति चेन्न पदान्तत्वाभावात् । न चोपेत्यस्याम्स्यावयवेन सहार्विधानात्कथं न पदान्तत्वमिति वाच्यम् । ऋच्छ-

---

( क ) केचिदिति कलापानुसारिणः ।

तीत्यस्याप्याद्यावयवत्वेन पदान्तत्वाभावात् (क) ॥ ननूपसर्गग्रहणेनैव धातोराक्षेपे सिद्धे धाताविति ग्रहणं व्यर्थमिति चेन्न(ख) । पदान्तानां समानानामृति ऌति च वा ह्रस्वः इति पाक्षिकह्रस्वस्यापि बाधनार्थं धातुग्रहणम् ॥ ४१ ॥

( **अवर्णादृते परे तृतीयासमासे** ) सुखार्तः । शीतार्तः ॥ तृतीयासमासे किम् । परमर्तः ॥ ४२ ॥

( सु० ) **अवर्णादृते परे तृतीयासमासे** ॥ अवर्णादृते परे सह आर् स्यात् ॥ सुखेन ऋतः सुखार्तः । शीतेन ऋतः शीतार्तः ॥ तृतीयासमासाभावे तु परमश्चासौ ऋतश्च परमर्तः ॥ "ऋतं शिलोच्छे पानीये पूजिते दीप्तिसत्ययोः" इति हेमचन्द्रः ॥ **तृतीयासमासार्थवाक्येऽपि न**(ग) । तृतीयासमासोऽर्थः प्रयोजनं यस्य तत् तृतीयासमासार्थं तृतीयासमासार्थं च तद्वाक्यं च तृतीयासमासार्थवाक्यं तस्मिन् तृतीयासमासार्थवाक्ये अवर्णादृकारे सह आर् न भवति किं त्वर् ॥ ४२ ॥

( त० ) **अवर्णादृते पर इति** ॥ अवर्णादृतशब्दे परे तृतीयासमासे आर् भवति ॥ इत्यर्थः ॥ **सुखार्त इति** ॥ सुखेन ऋत इति विग्रहः ॥ समासे किम् । सुखेनर्तः ॥ तृतीयेति किम् । परमर्तः ॥ ४२ ॥

( **ऌदादौ नामधातौ वाऽऌ** ) प्राल्कारीयति-प्राल्कारीयति-प्राल्ल्कारीयति-प्राल्ल्कारीयति ॥ ४३ ॥ इति स्वरसन्धिः ३ ॥

( सु० ) **ऌदादौ नामधातौ वाऽऽऌ** ॥ अवर्णान्तादुपसर्गादृ ऌकारादौ नामधातौ सह आल् वा स्यात् ॥ आत्मनः ऌकारमिच्छतीति ऌकारीयति । यप्रत्ययः । प्राल्कारीयति इत्यादावपि पूर्ववद्रूपचतुष्टयं बोध्यम् ॥ ४३ ॥ इति सुबोधिन्यां स्वरसंधिः ३ ॥

( त० ) श्रीविद्यानगरस्थायिलोकेशकरशर्मणा । विहितायां हि टीकायां स्वरसंधि रगादयम् ॥

इति तत्त्वदीपिकायां स्वरसंधिः ३ ॥

# अथ प्रकृतिभावः ॥ ४ ॥

( **नामी** ) (घ) अदसोऽमीशब्दः संधिं न प्राप्नोति ॥ अमी आदित्याः । अदसः किम् । अम्यत्र ॥ १ ॥

---

(क) उपार्च्छतीत्यत्र रेफं विसर्गं विधातुमाशङ्कते—**नन्विति** । पदान्तस्थितस्य रेफस्य विसर्गविधानसत्त्वादत्र तु पदान्तत्वाभावात् रेफस्य न विसर्गत्वमित्याह—**नेत्यादिना** । अव्ययानां विभक्तिलोपेऽपि प्रत्ययलोपे प्रत्ययलक्षणमित्युक्त्या उपस्याकारस्य विभक्त्यन्तत्वेन पदान्तत्वात्तद्घटकीभूतस्य रेफस्य पदान्तत्वमस्तीति शङ्कते—**न चेत्यादिना** । उपान्तत्रयवत्वेन रेफस्य पदान्तत्वेऽपि ऋच्छतेराद्यवयवत्वेन पदान्तत्वाभावान्न विसर्गं इत्याह—**ऋच्छतीत्यादिना** ।

( ख ) 'प्राग्धातोः' 'उपसर्गा धातोः प्राक् प्रयोक्तव्या' इति वचनेन उपसर्गग्रहणेन धातोराक्षेपसिद्धिरिति बोध्यम् ।

( ग ) अयं पाठो मूले निवेशनीयः व्याख्यायां तद्व्याख्यादर्शनात् । उदाहरणं यथा—सुखेनर्तःइति ।

इति टिप्पण्यां स्वरसन्धिः ।

(घ) 'इयं स्वरे' इत्यादिसूत्रस्यापवादकोऽयम्—**नामीति** । इत आरभ्य एतत्प्रकरणसमाप्तिपर्य्यन्तं प्रकृतिभावो ज्ञेयः । प्रकृत्या यथावस्थितरूपेण भवनं प्रकृतिभावः ।

( ह० ) **नामी** ॥ अदस इति वक्तव्यमत्र व्यवस्थार्थे वाऽनुवृत्तेः । अदस्शब्दस्यामीरूपं स्वरे परे संधिं न प्राप्नोति ॥ अदस इति वचनादमो रोगोऽस्यास्तीत्यमी इत्यत्र संधिर्भवत्येव । नामीति ज्ञापकादकारस्य न निषेधः(क) ॥ १ ॥

(त० ) **नामी** ॥ अदसोऽमीशब्दस्येकार एव संधिं न प्राप्नोति न त्वकारोऽपि नामीति सूत्रज्ञापकादिति भावः ॥ अमू असाते इत्यत्र य्वे द्वित्वे इत्यनेनैव संधिनिषेधः ॥ अदसः किम् । अम्यत्र । अर्थवद्ग्रहणपरिभाषयाप्येतद्वारयितुं शक्यते तदा(ख)अम्यत्रेति प्रत्युदाहरणं बोध्यम् ॥ अमो रोगः सोऽस्यास्तीत्यमी । अदस एवेति तु वेत्यस्य व्यवस्थितस्यानुवृत्तेः १

**य्वे द्वित्वे** ॥ ईकारान्त ऊकारान्त एकारान्तश्च शब्दो द्वित्वे वर्तमानः संधिं न प्राप्नोति ॥ अग्नी अत्र । पटू अत्र । माले आनय । पचेते इमौ ॥२॥

( सु० ) **य्वे द्वित्वे** ॥ ईश्च ऊश्च एश्च एषां समाहारो य्वे । 'एकत्वे द्विगुद्वन्द्वौ' इति नपुंसकस्येति ह्रस्वो न द्विग्वादिसंज्ञापूर्वकत्वेनानित्यत्वात् ॥ अथवा भिन्नमेवेदं पदम् ॥ सर्वत्राविभक्तिकनिर्देशश्च ॥ ननु ईदूतोः स्थाने यवयोः कृतयोः संदेहो भवति किं ह्रस्वयोर्निर्देश उत दीर्घयोरिति । उच्यते । दीर्घयोरेवात्र ग्रहणं न ह्रस्वयोः दीर्घस्यैकारस्य साहचर्यात्(ग) । तेनाकुर्वह्यावामित्यादौ प्रकृतिभावो न । पदग्रहणमित्यनुवर्त्यते । तस्य य्वे इति विशेषणं तदन्तविधिराश्रीयते ईदूदेदन्तं पदमिति । तेन पचेते इमावित्यादौ प्रकृतिभावः सिद्धयति । न ह्यत्रैदू द्वित्वेऽस्ति । द्वित्वे इति तु य्वे इत्यस्य विशेषणम् । किंभूतम् , ईदूदेदन्तम् , द्वित्वे वर्तमानम् । ननु कुमार्योरगारं कुमार्यगारं वध्वोरगारं वध्यगारमित्यत्रौसि लुप्ते ईदूदन्तं द्वित्वे वर्तते ततः प्रकृतिभावः स्यात् । उच्यते । ईकारादीनां प्रत्ययत्वस्यासिद्धेर्न प्रकृतिभावः । न ह्यत्र प्रत्ययत्वोपस्थापकं किंचिदस्तीति । यद्वा समासे कृते समुदायस्यैवार्थवत्त्वेन पूर्वोत्तरपदयोरनर्थकत्वान्न प्रकृतिभावः(घ) ॥ "मणी वोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम" इति भारतप्रयोगे तु इवार्थे वशब्दो वा शब्दो वाबोध्यः॥ "वा विकल्पोपमानयोः" इति । "वं प्रचेतसि जानीयादिवार्थे च तदव्ययम् ।"इति मेदिनी(ङ)॥२॥

( क ) ननु न अमी नामीत्यत्र कथं सन्धिरिति चेन्न, अदसोऽमीशब्दस्येकार एव सन्धिं न प्राप्नोति नत्वकार इत्येतत्सूत्रज्ञापकादित्याह—**नामीति** ।

( ख ) अयं पाठो 'मुग्धबुध्याः' कपुस्तक नास्ति का० पुस्तके दृश्यते वस्तुतः समीचीनः ।

( ग ) अयम्भावः—'य्वे द्वित्वे' इत्यत्र ईश्च ऊश्च, एश्च य्वे' । अथवा—इश्च उश्च एश्च 'य्वे' इति सन्दिह्यते । सहचरितासहचरितयोः सहचरितस्य ग्रहणमित्युक्तेरेकारसाहचर्य्याद्दीर्घाणामेव ग्रहणं न तु ह्रस्वानामिति । ह्रस्वग्रहणस्य फलमाह—**तेनेति** । अकुर्वह्यावामित्यत्र द्विवचनान्तत्वेऽपि ईकारान्तत्वाभावान्न प्रकृतिभावः । किन्तु 'इयं स्वरे' इत्यादिना यत्वमेवेति भावः ।

(घ) कुमार्य्योरगारं कुमार्य्यगारमित्यादौ 'समासप्रत्यययोः, इति विभक्तिलोपो भवतीत्याह—**औसि लुप्ते इति** । उत्तरमाह—**ईकारादीनामित्यादिना** । प्रत्ययलोपे प्रत्ययलक्षणबलात् प्रत्ययत्वोपस्थितौ सन्ध्यभावः प्रसज्येतेति तत् परित्यज्याह—**यद्वेति** । **अनर्थकत्वादिति** । अर्थवद्ग्रहणे नानर्थकस्य ग्रहणमिति परिभाषयाऽनर्थकत्वं पूर्वोत्तरपदयोर्बोध्यम् ।

( ङ ) ननु 'मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम ह्रीयमाणौ हि तौ दम्यौ मकिस्तत्रेदमब्रवीत्'। इति महाभारतश्लोके मणी इवेति द्वित्वेनैत्वेन च प्रकृतिभावे सवर्णदीर्घो न स्यादित्याह—**मणीवोष्ट्रस्येत्यादिना** । अमरोप्याह—'ववा यथा तथैवैवं साम्य' इति । केचित्तु—'मणीवादिवर्जम् इति वदन्ति। तेन मणी इव मणीव । रोदसी इव रोदसीव । दम्पती इव दम्पतीवेति । तच्च मुनित्रयानुक्तत्वादप्रमाणमिति तत्त्वदीपिका ।

( त० ) स्त्रे द्वित्वे इति ॥ ईकारान्तत्वादिकं च परिनिष्ठितत्वे सति बोध्यम् ॥ ननु कुमार्योरगारं कुमार्यगारं वध्वगारमित्यत्रापि संधिनिषेधः प्राप्नोति ॥ ईकाराद्यन्तस्य द्वित्वे वर्तमानत्वात् प्रत्ययलक्षणेनेति चेन्न । ईकारादिभिर्द्विवचनस्य विशेषितत्वात् ईकाराद्यन्तं द्विर्वचनमिति निष्कर्षात् । समासे कृते समुदायस्यैवार्थवत्त्वेन पूर्वोत्तरपदयोरनर्थकत्वाद्वा ॥ नन्वेवमपि अशुक्ले वस्त्रे शुक्ले संपद्येतां शुक्लयास्तां वस्त्रे अत्र प्राप्नोति । अत्र हि ईकारादिमद्द्विवचनान्तत्वं च भवति प्रत्ययलक्षणं नेति चेत्सत्यम् । अत्राप्यकृते ईभावे लुग्भविष्यति च्व्यन्तस्याऽव्ययत्वेनासंख्यत्वादर्थवत्त्वाद्वा । यत्तु मणीवादिवर्ज्यमिति पठित्वा मणीवाद्युदाहृतं प्राचा तच्च मुनित्रयानुक्तत्वादप्रमाणमिति सन्तः(क) । एवं "मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम" इति भारतप्रयोगसमर्थनाय इवार्थे वशब्दो वाशब्दो वा बोध्यः । "व वा यथा तथैवैवं साम्ये" इत्यमरग्रन्थव्याख्यावसरे ॥ "शार्ङ्गवं व पपुर्यश" इति कालिदासप्रयोगस्याभियुक्तैरुदाहृतत्वात् । "कादम्बखण्डितदलानि व पङ्कजानि" इत्यादिदर्शनाच्चेति भावः ॥ २ ॥

**औ निपातः ॥** स्वरो निपातश्च संधिं न प्राप्नोति ॥ अ अपेहि । इ इन्द्रं पश्य । उ उत्तिष्ठ । आ एवं मन्यसे ॥ ३ ॥

( सु० ) **औ निपातः** ॥ औ इति अकारादारभ्य औकारेण प्रत्याहारो ग्राह्यः । ततः स्वरा निपातसंज्ञकश्च स्वरे परे सन्धिं न प्राप्नोति ॥ अ अपेहि । अ इति निषेधाक्षेपयोः ॥ इ इन्द्रं त्वं पश्य । इ इति विस्मये ॥ उ उत्तिष्ठ । उ इति जुगुप्सासंतापान्वर्थाप्यर्थेषु ॥ आ एवं त्वं मन्यसे । पूर्वप्रक्रान्तवाक्यार्थस्यान्यथात्वद्योतकोऽयमाकारः । पूर्वमित्थं न त्वममंस्था इदानीं त्वेवं मन्यसे इत्यर्थः । आ एवं किल तत् । स्मरणद्योतकोऽयमाकारः । ङित आकारस्य तु निपातसंज्ञा नास्ति प्रादिषूपसर्गेषु आङः पाठात् निपातसंज्ञाऽप्रादीनामेवास्ति न तु प्रादीनाम् । ततो ङित आकारस्य प्रकृतिभावो न । आ ईषदुष्णं ओष्णम् । किंच "ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्" इति भाष्ये उक्तम् ॥ आङनाङोरर्थ एव भेदकोऽस्ति । स्वराणामपि निपातानिपातविवेकोऽर्थाधीन एव ॥ निपातग्रहणं किम् । अकारो वासुदेवस्तस्य धौ अ इति रूपम् । अ आगच्छ आगच्छेति । उः शम्भुस्तस्य धौ ओ इति रूपम् । औ आगच्छ अवागच्छेति । इः कामस्तस्य धौ ए इति रूपम् । ए आगच्छ अयागच्छेति । स्वररूपनिपातस्य परेण स्वरेण सह संधिनिषेधोऽस्ति । पूर्वेण स्वरेण सह तु संधिर्भवत्येव । जानु उ अस्य रुजतीत्यत्र उकारोकारयोः सवर्णे दीर्घे कृते निपातस्य विकृतत्वात् परेणापि संधिर्भवत्येव जान्वस्येति(ख) ॥ ३ ॥

( त० ) **औ निपात इति** ॥ अकारादिरौकारान्त औप्रत्याहार इत्यभिप्रेत्याह—

---

( क ) मुनित्रयमिति । पाणिनिः, कात्यायनः, पतञ्जलिश्च ।

( ख ) इयमत्राशङ्का—ननु जान्वस्य रुजतीत्यत्र उकारस्य निपातत्वात् प्रकृतिभावे कथं सन्धिरिति। इदमस्या उत्तरम्—निपातस्वराणां परवर्तिस्वरेण साकं प्रकृतिभावोऽङ्गीकृतः, नतु पूर्ववर्तिना । तेन च जानूत्तरवर्त्युकारेण सह निपातोकारस्य सवर्णदीर्घे कृते पश्चादुकारनिपातस्य दीर्घोकाररूपेण विकृतत्वात् परवर्तिनाऽस्याकरभागेन सार्द्धम् 'उवम्' इति सूत्रेण सन्धिः ।

स्वर इति ॥ स्वरोऽप्येक एव बोध्यः न तु स्वरान्तः । चार्थे । वेङ्योः इत्यादिनिर्देशात् । तेन प्रेदं ब्रह्मेत्यत्र न संधिनिषेधः ॥ निपात इति किम् । चकारात्र जहाराात्राङो न निषेधः । तस्य प्रादिषु पाठेनानिपातत्वात् । चादिर्निपातः इति चादेरेव तत्त्वात् । ङित्त्वं च भाष्यात् । "इषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्" इति ॥ आ एवमिति ॥ पूर्वप्रक्रान्तवाक्यार्थस्यान्यथाद्योतकोऽयमाकारः । पूर्वमित्थं नामंस्थाः इदानीं त्वेवं मन्यसे इत्यर्थः ॥ ३ ॥

**( ओदन्तो निपातश्च )** अहो ईशाः । अहो आगताः ॥ ४ ॥

( सु० ) **ओदन्तो निपातश्च** ॥ ओदन्तो निपातश्च सन्धिं न प्राप्नोति । निपातः किम् । देवोऽसि ॥ ४ ॥

( त० ) **ओदन्त** इति । अत्र भाष्यम् । ओतश्च प्रतिषेधः । ओदन्तो निपात इत्यत्र च्व्यन्तस्य प्रतिषेधो वक्तव्यः । अनदः अदः अभवत् अदोभवत् । तिरोभवत् । इव यथा न स्यात् । स च वक्तव्यो न वक्तव्यः । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य इत्येव भविष्यति । एवमपि अगौर्गौः समपद्यत गोऽभवत् अत्र प्राप्नोति । एवं तर्हि गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति । तद्यथा—गौरनुबध्यते इत्यत्र न वाहीकोऽनुबध्यते । च्व्यन्तस्य क्त्वाद्यन्तर्गतत्वेन निपातत्वाभावान्नेत्यपरे । निपातः किम् । सुद्योग्रम् । यत्तु मनोरमायां निपातः किम् । देवोऽसि वायवायाहि इति प्रत्युदाहृतं तद्भाष्यविरोधादुपेक्ष्यम् ॥ ४ ॥

**( ओदन्तो धौ वेतौ )** विष्णो इति-विष्णविति ॥ ५ ॥

(सु०) **ओदन्तो धौ वेतौ** ॥ सम्बोधननिमित्तक ओकारः संधिं वा प्राप्नोति इति शब्दे परे ॥ इतौ किम्, पटोऽत्र ॥ धौ किम्, अहो इति ॥ प्रकृतिभावे विष्णो इति । पक्षे अवादेशः व्योर्लोपशिति वलोपे विष्ण इति । पक्षे विष्णविति ॥ ५ ॥

( त० ) **ओदन्तो धाविति** ॥ अवैदिके इतौ बोध्यम्(क) ॥ धाविति किम् । अहो इति । अत्र विकल्पो मा भूत् ॥ ५ ॥

**( य्वृणामसवर्णे स्वरेऽसमासे पदान्ते वा ह्रस्वः)** चक्रि अत्र—चक्र्यत्र । मधु एतत्—मध्वेतत् । कर्तृ इदम्—कर्त्रिदम् । ह्रस्वविधानसामर्थ्यान्न सन्धिः । समासे तु हर्यर्थः । पदान्ते किम् । गौर्यौ ॥ ६ ॥

( सु०) **य्वृणामसवर्णे स्वरेऽसमासे पदान्ते वा ह्रस्वः** ॥ इश्च उश्च आ च ते य्वरस्तेषां य्वृणाम् । असमासे पदान्ते स्थितानामिवर्णोवर्णऋवर्णानां प्रकृतिभावो ह्रस्वश्च वा भवत्यसवर्णे स्वरे परे ॥ ह्रस्वपक्षे चक्रि अत्र । प्रकृतिभावे चक्री अत्र । पक्षे यत्वम् । चक्र्यत्र । इह स्कोरिति कस्य लोपो न यत्वस्य बहिरङ्गपरिभाषयासिद्धत्वात्स्थानिवद्भावाच्च । हरेरर्थं इति हर्यर्थः । समासत्वादत्र ह्रस्वप्रकृतिभावौ न ॥६॥

( त० ) **य्वृणामिति** ॥ इश्च उश्च आ च य्वरस्तेषाम् ॥ ६ ॥

**( पदान्तानां समानानामृति लृति च वा ह्रस्वः )** ब्रह्म ऋषिः

---

( क ) अत्र कौमुदी प्रमाणं तथा च—**सम्बुद्धौ शाकल्यस्येतावनार्षे** सम्बुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिक इतौ परे । अनार्षे किम्, ब्रह्मबन्धवित्यब्रवीत् इति ।

ब्रह्मर्षिः । दण्डि ऋषिः दण्डयृषिः । वधु ऋकारः वध्वृकारः । होतृ ऌकारः होतृकारः ॥ पदान्तानां किम् । आर्च्छत् ॥ ७ ॥

( सु० ) पदान्तानां समानानामृति ऌति च वा ह्रस्वः ॥ पदान्ते स्थितानां समानानां प्रकृतिभावो ह्रस्वश्च वा भवति ऋकारे ऌकारे च परे ॥ होतृ ऌकारः, ब्रह्माऋषिरित्यादौ प्रकृतिभावार्थमिदम् । ट्वृगां तु पूर्वेणैव प्रकृतिभावः सिध्यति । समासेऽप्ययं प्रकृतिभावोऽस्ति । तेन सप्तऋषीणामिति । प्रकृतिभावे ब्रह्मा ऋषिः । ह्रस्वे ब्रह्म ऋषिः । संधौ ब्रह्मर्षिः ॥ पदान्ते किम् । आ ऋच्छदित्यत्र आ इत्यस्य ह्रस्वो न । ऋकारे परेऽपि पदान्तत्वाभावात् । ऋच्छदित्यस्य लङि तुदादेरित्य प्रत्यये दिवादावडिति स्वरादेरिति चाडागमयोः कृतयो रूपम् ॥ ७ ॥

( अपादुञो वो वा स्वरे ) किम्वुक्तम्—किम् उक्तम् ॥ ८ ॥

( सु० ) अपादुञो वो वा स्वरे ॥ अपात्परस्य उञ्निपातस्य वो वा स्यात्स्वरे परे ॥ किमु उक्तम् । वत्वपक्षे किम्वुक्तम् । वस्यासिद्धत्वान्नानुस्वारोऽत्र ॥ ८ ॥

( त० ) अपादुञ इति ॥ किम्वुक्तमिति । वत्वस्यासिद्धत्वान्नानुस्वारः । ओदन्तो निपात इत्यारभ्यैतत्पर्यन्तं वेत्यस्य व्यवस्थितस्यानुवृत्तेर्लभ्यत इति बोध्यम् ॥ ८ ॥

दूरादाह्वाने टेः प्लुतः ॥ दूरात्संबोधने यद्वाक्यं तस्य टेः प्लुतो वा ॥ प्लुतः संधिं न प्राप्नोति । एहि देवदत्त ३ अत्राधीष्व(क) ॥ ९ ॥

( सु० ) दूरादाह्वाने टेः प्लुतः ॥ दूरत्वमिहाह्वानापेक्षं बोध्यते न देशापेक्षं पुरुषापेक्षं च गृह्यते । आह्वाने इति सम्बोधनमात्रोपलक्षणम् । तेनाह्वानादन्यत्रापि भवति । सक्तून्पिब देवदत्त ३ इति । आह्वाने इत्याधारे सप्तमी । आधारश्चाधेयमपेक्षते । आधेयं च वाक्यमेव । तेनैवाह्वानसंभवात् । सम्बोधने वाक्यस्य टेः प्लुतो वा स्यादित्यर्थः । ह्रस्वदीर्घव्यक्त्योरुच्चारणात्स्वरूपलिखनाच्च भानं प्लुतव्यक्तेरुच्चारणादेव ॥ ९ ॥

( त० ) दूरादाह्वान इति ॥ दूरत्वमिहाह्वानापेक्षं न तु देशापेक्षं पुरुषापेक्षं वा । वाक्यस्य टेरिति ॥ वाक्यं च सामर्थ्याल्लभ्यते ॥ आह्वाने इत्याधारे सप्तमी । आधारश्चाधेयमपेक्षते । आधेयं च वाक्यमेव । तेनैवाह्वानसंभवात् इति नव्याः । सम्बोधनमात्रोपलक्षकम् इत्यभिप्रेत्याह ॥ दूरात्संबोधन इति ॥ ९ ॥

(हैहेप्रयोगे हैहयोः प्लुतो वा) है अम्ब—हायम्ब । हे ईश-हयीश १०

( सु० ) हैहेप्रयोगे हैहयोः प्लुतो वा ॥ हैहेप्रयोगे दूरात्संबोधने यद्वाक्यं तत्र हैहयोरेव प्लुतो वा स्यात्(ख) ॥ प्लुताभावे आय् । हायम्ब । हयीशेत्यत्र अय् ॥ १० ॥

---

( क ) दूरादिति । दूरादाह्वाने गाने रोदने विचारे च गम्यमाने टेः प्लुतः स्यादिति सारस्वतम् । यद्यपि दूरत्वमव्यवस्थितं तथापि प्राकृतप्रयत्नाधिक्यप्रयन्ताश्रयणेन यत्र भवति तज्ज्ञेयम् । आह्वानस्य रोदनाद्युपलक्षणत्वाद्गाने इत्याद्युक्तिरिति तत्र वासुदेवः । इह गानरोदनयोः प्रसिद्धम् । विचारे अधःस्विदासीदुपरिस्विदासीदित्यादौ ।

(ख) "गुरोरनृत" इत्यनेन च सिद्धे किमर्थमिदमित्याशंक्य नियमार्थमिदं व्याचष्टे–हैहयोरेवेति । हैहयोरेवेति नियमार्थमिति भावः । देहि है ३ अम्ब, देहि हे ३ अम्बेत्यत्र हैहयोरेव प्लुतः । न तु गुरोरनृतोः'इत्यन्यस्यापीत्येतत् हैहयोरित्यनेन लभ्यत इति यावत् । प्रयोगग्रहणाभावे वाक्यस्य टेरित्यधिकाराद् अम्ब है ३ अम्ब हे ३ इत्यत्रैव स्यात् । अतः प्रयोगग्रहणम् । ततश्च अनन्त्ययोरपि तयोः प्लुतो भवति ।

**( सप्तम्यर्थे ईत् संधिं न याति )** वातप्रमी आस्ते। ययी इदम्। पपी एषः(क) ॥ ११ ॥

( सु० ) **सप्तम्यर्थे ईत्संधिं न याति** ॥ सप्तम्यर्थे संसिद्धमीकारान्तं पदं संधिं न प्राप्नोति ॥ अर्थग्रहणात्समासे मा भूत्। वाप्यामश्वो वाप्यश्व इत्यत्र वापीशब्दो वाप्यधिकरणकद्रव्ये उपसंक्रान्तो न तु सप्तम्यर्थे(ख)। वातप्रमीययीपपीशब्दा औणादिकेकारान्ताः सन्ति तेषां सप्तम्येकवचने सवर्णे दीर्घे रूपम् ॥ ११ ॥

( त० ) **सप्तम्यर्थे इति** ॥ अर्थग्रहणं किम्। वाप्यामश्वो वाप्यश्वः। इह यथा न स्यात्। अथ क्रियमाणेऽप्यर्थग्रहणे कस्मादेवात्र न भवति जहत्स्वार्था वृत्तिरिति सप्तम्यर्थाभावात्। अथाजहत्स्वार्थायां वृत्तौ दोष एवेति चेन्न। समुदायार्थोऽभिधीयते ॥११॥

**( इतौ वा उञ् )** उ इति–विति ॥ १२ ॥

( सु० ) **इतौ वा उञ्** ॥ उञ् निपातः सन्धिं वा प्राप्नोति इतिशब्दे परे ॥ ओ निपात इति नित्यं प्राप्ते विकल्पोऽयम् ॥ १२ ॥

( त० ) **इतौ वेति** ॥ उभयत्र सानुबन्धक एव गृह्यते ॥ १२ ॥

**( अप्लुतवदितौ )** देवदत्तेति ॥ १३ ॥

( सु० ) **अप्लुतवदितौ** ॥ प्लुतोऽप्लुतवद्भवति इतिशब्दे परे ॥ अप्लुतवत्कार्यं यत्वादिकं करोतीत्यर्थः ॥ १३ ॥

( त० ) **अप्लुतवदिति** ॥ अत्रापि अवैदिके इतौ बोध्यम्(ग)। वत्किम्। अग्नी इति इत्यत्र यथा न स्यात् ॥ १३ ॥

**(गुरोरनृतोऽनन्त्यस्यापि वा पर्यायेण प्लुतः)** दे ३ वदत्त–देवद३त्त। अपिशब्दादन्त्यस्याप्यगुरोर्वा पर्यायेण प्लुतः। देवदत्त ३॥ गुरोः किम्। वकारादकारस्य मा भूत् ॥ अनृतः किम्। कृष्ण ३ गौश्वरति ॥ १४ ॥ इति प्रकृतिभावः (घ) ॥ ४ ॥

---

(क) **सप्तम्यर्थे ईदिति**। अत्र ऊदित्यपि पाठ्यम्। तेन मामकी तनू इतीति। तथोक्तं पाणिनिना-**ईदूतौ च सप्तम्यर्थे**। १–१–१९। सप्तम्यर्थे पर्य्यवसन्नमीदूदन्तं प्रगृह्यं स्यात्। सोमो गौरी अधिश्रितः। मामकी तनू इतीति कौमुद्यां स्पष्टम्।

(ख) **वाप्यामश्वो वाप्यश्व इति**। वाप्यामश्व इति विग्रहे सुप्सुपेति समासे वाप्यश्व इति रूपमित्यर्थः। अत्र वाप्यामिति सप्तम्या अधिकरणत्वमवगतम्। तच्चाधिकरणकारकं क्रियापेक्ष्यम्। तत्र वाप्यामश्वो वर्त्तते इति क्रियाध्याहारे वर्त्तमानक्रियायां वाप्या अधिकरणत्वेन अश्वस्य कर्तृत्वेनान्वयात्तयोः परस्परमन्वयाभावादसामर्थ्यात्समासो नोपपद्यते वाप्यां विद्यमानोऽश्व इति विद्यमानपदस्याध्याहारेऽपि अश्वपदेनासामर्थ्यात्समासो न सम्भवति। अतः वाप्यामित्यत्र वाप्यां विद्यमानेऽश्वे लक्षणया प्रवृत्तिं पुरस्कृत्य समासो वक्तव्यः। एवं च समासे लुप्तसप्तमीकस्य वापीशब्दस्य सप्तम्यर्थमतिलंघ्य तत्संसृष्टे आधेयभूतेऽश्वेऽपि प्रवृत्तेः सप्तम्यर्थमात्रविश्रान्त्यभावान्न प्रगृह्यत्वमिति भावः।

( ग ) **अवैदिक इति**। तथा च पाणिनीये—'**अप्लुतवदुपस्थिते**'। उपस्थितोऽनार्ष इति शब्दः, तस्मिन् परे प्लुतोऽप्लुतवद्भवतीति। अनार्ष अवैदिक॥ ( घ ) प्रकृतिभावे एतल्लोकाद्बोध्यम्—यथा पाणिनीये, "**प्रत्यभिवादेऽशूद्रे**। अशूद्रविषये प्रत्यभिवादे यद्वाक्यं तस्य टेः प्लुतः स्यात्। स चोदात्तः। अभिवादये देवदत्तोऽहम्। आयुष्मान् भव देवदत्त ३। **स्त्रियां न**' अभिवादये गार्ग्यहम्। आयुष्मती भव

( सु० ) गुरोरनृतोऽनन्त्यस्यापि वा पर्यायेण प्लुतः ॥ दूरात्संबोधने यद्वाक्यं तस्य ऋन्निवस्यानन्त्यस्यापि गुरोर्वा पर्यायेणानुक्रमेण प्लुतः स्यात् ॥ एकत्र दे इत्येकारस्य प्लुतता । अन्यत्र द इत्यकारस्य प्लुतता । त इत्यकारस्य तु 'दूराद्धाने टेः प्लुतः' इत्यनेन प्लुतसंज्ञा । प्रकृतेर्मूलरूपस्य भवनं प्रकृतिभावः ॥ १४ ॥

इति सुबोधिन्यां प्रकृतिभावः ॥ ४ ॥

( त० ) गुरोरनृत इति ॥ अपि शब्दो गुरोरगुरोश्च टेः प्लुतार्थः ॥ १४ ॥

श्रीविद्यानगरस्थायी क्षेमङ्करसुतोऽकरोत् । श्रीलोकेशकरो व्याख्यां संध्यभावस्य सत्तमाम् ॥

इति तत्त्वदीपिकायां प्रकृतिभावः ॥ ४ ॥

---

# अथ हससन्धिः ॥ ५ ॥

**चपा अबे जबाः** ॥ पदान्ते वर्तमानाश्चपा जबा भवन्त्यबे परे ॥ षडत्र । वाग्यथा (क) ॥ १ ॥

( सु० ) **चपा अबे जबाः** ॥ पदान्त इत्यनुवर्तते(ख) । पदान्ते वर्गप्रथमास्तृतीया भवन्त्यबे परे ॥ पदान्ते किम् ॥ वाचौ । भवन्तौ । बहुवचनं सर्वव्यक्तिषु तात्पर्यबोधनार्थम् ॥ १ ॥

( त० ) **चपा अबे जबाः** ॥ अत्र लघुभाष्यम् । झपा इति पाठ्यम् । समिदत्र ककुबत्र अग्निमदासनमित्यादावव्याप्तिर्यथा न स्यात् । यद्वा अबे जबा इत्येव कर्तव्यम् । पदान्त इत्यनुवर्तते । पदान्ते वर्तमानस्य जबा भवन्त्यबे परे इत्यर्थः ॥ स्वराणां पूर्वविधयो बाधकाः । हसानां तूत्तरविधय इति । अत्रोच्यते । तयागताः पटविद्वेत्यादौ अतिप्रसङ्गवारणाय तावत् अन्यतरद्वक्तव्यम् । तत्र व्यक्तिलाघवाच्चपग्रहणमेव कर्तव्यम् । न चोक्तदोषः 'वाऽवसाने' इतीष्टसिद्धेः । अवसानं किमिति चेत् , अन्त एवेति गृहाण ॥ विद्यावसानमित्यादिप्रयोगदर्शनात् । अत्रार्थे चपग्रहणस्यापि मानत्वात् इति । अत्रेदमवधेयम् । 'वाऽवसाने' इत्यत्रावसानशब्दस्यान्तवाचकता नोचिता । 'विरामोऽवसानम्' इत्यनेन वर्णाभावस्यावसानसंज्ञां कुर्वता सूत्रकारेण विरुद्धत्वात् । किं चैवं भवत्पुत्रः बृहत्फणी महत्खण्डनं इत्यादिषु 'वाऽवसाने' इत्यनेन पक्षे दकारश्रवणापत्तेः । न चेष्टापत्तिः, तदसाधुत्वस्य सर्वत्र दर्शनात् । न च ककुबत्रेत्यादौ अव्याप्तिपरिहारः कथमिति चेत् । इत्थम् । 'जमे जमा वा' इत्यत्र व्यवस्थितविभाषाश्रयणात् झपानामपि जबा जमाश्च

---

गार्गि । नाम गोत्रं वा यत्र प्रत्यभिवादवाक्यान्ते प्रयुज्यन्ते तत्रैव प्लुत इष्यते । नेह । आयुष्मानेधि । भोराजन्यविशां वेति वाच्यम् । आयुष्मानेधि भोः ३ । आयुष्मानेधीन्द्रवर्मन् ३ । आयुष्मानेधीन्द्रपालित"॥

एवं च—"**ई ३ चाक्रवर्मणस्य** । ई ३ कारः प्लुतोऽचि ( स्वरे ) परेऽप्लुतवद् वा स्यात् । चिनु हि ३ इति चिनुहीति । चिनु हि ३ इदम्—चिनुहीदम् । उभयत्र विभाषेयम्" ।

ॐ । उञ इतौ दीर्घोऽनुनासिक प्रगृह्यश्च ऊँ इत्ययमादेशो वा स्यात् । ऊँ इति—विति ।'

इति श्रीनवकिशोरकरकृतचक्रधराख्यटिप्पण्यां स्वरसन्ध्यन्तर्गतप्रकृतिभावप्रकरणम् ॥ ४ ॥

( क ) **चपा इति** । अत्र वासुदेवः । यद्यपि खसे चपा इति विशेषविधेः प्राक् इत्यादाववसाने च पक्षे चपविधानसामर्थ्यादेव तदप्राप्तौ परिशेषादवपरत्वप्राप्तौ अबग्रहणं व्यर्थम् । तथापि 'चपाच्छः शः' इत्युत्तरसूत्रेऽनुवृत्त्यर्थं । ततश्च वाक्श्चोतति इत्यादौ तदभावः । चपानां झपोपलक्षणाद्विपरीतनिर्देशाद् वा समिध इन्धनं यस्येति समिदिन्धनम् अग्निमञ्जानमित्यादावपि जबाः ।

( ख ) 'ख्योर्लोपश् वा पदान्ते' । इत्यतः पदान्त इत्यनुवर्तते ।

भवन्तीति व्याख्यानात् । तन्मयमित्यादौ ञमकरणार्थं प्रत्यये ञमे जबस्यापीति भवद्भिरपि व्यवस्थितविभाषाश्रयणस्य स्वीकृतत्वात् । अथ भवत्पुत्र इत्यादौ 'खसे चपा झसानाम्' इति सूत्रेण पाक्षिकदकारस्यापि तत्वेन रूपसिद्धिरिति चेत्सत्यम् । 'खसे चपा झसानाम्' इति सूत्रं प्रति तु 'वाऽवसाने' इत्यस्य बहिरङ्गत्वेनासिद्धत्वात् । किं च तच्छिव इत्यत्र तदो 'वाऽवसाने' इति चर्त्वे कृते पश्चाच्छिव इत्यनेन सम्बन्धे 'झलां जशोऽन्ते' इति जश्त्वे 'खरि च' इति चर्त्वमिति व्याकुर्वतां कृष्णपण्डितानां मते भाविन्यवसानभङ्गे अकृतव्यूहपरिभाषया कृतमपि शास्त्रं निवर्तयन्तीत्यनया वा 'वाऽवसाने' इत्यस्याप्रवृत्तेरित्युक्त्या दूषयतां भट्टोजिदीक्षितानां मतेनातिविरोधात् इति दिक् ॥ अबग्रहणं किम् । जगत्सर्वमित्यादौ खसे मा भूत् । अथ तत्र 'खसे चपा झसानाम्' इत्यस्यैव प्रवृत्तिरिति चेत्तर्हि उत्तरार्थमबग्रहणं स्पष्टार्थमिहैव कृतम् ॥ पदान्त इति किम् । त्वचौ ॥१॥

**ञमे ञमा वा** ॥ पदान्ते वर्तमानाश्चपा ञमे परे ञमा वा भवन्ति ॥ षण्मम–षड्मम । वाङ्मधुरा–वाग्मधुरा(क) ॥२॥

(सु०) **ञमे ञमा वा** ॥ पदान्ते इत्यनुवर्तते । पदान्ते वर्गप्रथमाः पञ्चमाः स्युः पञ्चमे परे ॥ पदान्ते किम् । वच्मि । पाप्मा । यत्नः । पक्षे तृतीयाश्चपा अबे जबाः इत्यनेनैव २

( त० ) **ञमे ञमा वेति** ॥ अत्रापि पदान्त इत्यनुवर्तते । तेन वच्मीत्यादौ न । वाशब्दोऽत्र व्यवस्थावाची । तेन क्वचित् झपानामपि ञमा भवन्ति । प्रत्यये च नित्यतालाभः । यत्तु कश्चिन्मयटि नित्यमित्युक्तं तद्भाष्यविरोधादुपेक्ष्यम्(ख) ॥ चपा इति किम् । विष्णो मां रक्षेत्यादौ स्वरस्य मा भूत् ॥ २ ॥

**( प्रत्यये ञमे जबस्यापि नित्यम् )** तन्मयम् । चिन्मात्रम् ॥३॥

( सु० ) **प्रत्यये ञमे जबस्यापि नित्यम्** ॥ वर्गतृतीयानां पञ्चमा भवन्ति प्रत्ययसम्बन्धिनि ञमे परे ॥ अपिशब्दाद्वर्गप्रथमानामपि ॥ कथं तर्हि रघुकाव्ये 'मदोदग्राः ककुद्मन्तः' इति । उच्यते । यवादिगणे दकारस्य निपातनान्न ञमो भवतीति कौमुदी ॥ क्वचिज्जबस्यापि ञमो भवति 'त्वन्मदेकत्वे' इति ज्ञापकात् ॥ तत्स्वरूपमस्येति तन्मयम् । प्राचुर्यविकारप्राधान्यादिष्विति मयट् ॥ चित्प्रमाणमस्येति चिन्मात्रम् । प्रमाणे द्वयसट्दघ्नट्मात्रटः इति मात्रट् ॥ ३ ॥

**चपाच्छः शः** ॥ पदान्ते वर्तमानाच्चपादुत्तरस्य शकारस्य छो वा भवत्यबे परे ॥ वाक्छूरः वाक्शूरः ॥ अबे किम् । वाक्श्च्योतति ॥४॥

( सु० ) **चपाच्छः शः** ॥ चपादुत्तरः शकारः छकारो वा भवत्यबे परे ॥ चपादिति किम् । प्रशान् शेते ॥ अबे इति किम् । वाक्श्च्योतति ॥ शः किम् । वाक्साधुः ॥ ननु चपाच्छऽश इत्युक्ते सन्देहो भवति किं शस्य छः छस्य शो वेति । लोका-

( क ) **ञमे इति** । अत्र वासुदेवः । वा शब्दस्य व्यवस्थिताव्यवस्थितविकल्पार्थत्वान्मयटि नित्यम् । चिन्मयम् । यत्तु प्रत्ययेऽञमे नित्यविधेर्वाङ्मात्रमित्येकमेव रूपमिति । तदयुक्तम् । एवं विधे नियामकाभावात् मयटि नित्यं वाच्यमित्युक्तेः कलापादिषु प्रत्ययग्रहणं विशेषपरं ज्ञेयम् । अपा अबे जबा इत्यतो झपोपलक्षितचपानुवृत्तेर्मृन्मयं ककुन्मयमन्नमन्नयनमित्यादौ झपानामपि ञमाः ॥

( ख ) **यत्तु** । इति मतं पूर्वमुपदर्शितम् ।

च्छेषस्येति निर्देशान्न सन्देह इति (क) ॥ ४ ॥

( त० ) चपाच्छः श इति ॥ पदान्त इति किम् । विरप्शम् । रपेर्विपूर्वादौणादिकशप्रत्यये रूपमेतत् इति प्राञ्चः । तच्चिन्त्यम् । विरप्शमित्यस्य छान्दसत्वलाभात् । छन्दसि दृष्टानुविधिस्वीकारात् इत्युक्तं लघुभाष्ये । तत्रेदमवधेयम् । विरप्शमित्यस्य पदान्तप्रत्युदाहरणत्वमेवोचितं पतञ्जलिसंमतत्वात् ॥ किं च 'शच्छोऽटि' इत्यस्य हि पदान्ताज्झयः परस्य शस्य छ इत्यर्थ आकरे स्थितः । विपूर्वाद्रपेरौणादिकशप्रत्यये 'मध्वश्च्योतन्त्यभितो विरप्शम्' इत्यादौ यथेति मनोरमायामुक्तवतां दीक्षितानां मतेन विरोधात् छान्दसत्वादित्यस्यागतित्वेनोपेक्षितत्वात् ॥ चपादिति किम् । प्रशान् शेते ॥ अबे इति किम् । वाक्श्च्योतति ॥ शः किम् । वाक्साधुः । ननु चपा इत्यनुवर्त्यार्थवशाद्विभक्तिविपरिणामं कृत्वा चपादिति व्याख्याऽऽश्रीयते इति चेत् तर्ह्युत्तरार्थं तच्च 'हो झभाः' इत्यत्र वक्ष्यते । इहार्थं च । अत्र तन्त्रादिना वाक्यद्वयमाश्रीयते । तत्राद्य उक्त एव । द्वितीयस्तु चपमततीति चपात् चेन सहितः छः तस्य शो अमे । तेन च प्राङ्शमात्यादौ शत्वम् । विधेयस्य पूर्वनिर्देशस्त्वसन्देहार्थः । 'चपाच्छः छः' इत्युक्ते सन्देहः स्यात् ॥ ४ ॥

**हो झभाः । चपादुत्तरस्य हकारस्य झभा वा भवन्ति ॥ यद्वर्गगश्चपस्तद्वर्गगश्चतुर्थो भवति ॥ तद्धविः—तद् हविः । वाग्घरिः—वाग्हरिः (ख)॥५॥**

( सु० ) हो झभाः ॥ 'चपाच्छः शः' इत्यतश्चपादित्यनुवर्तते । चपात्परस्य हस्य स्थाने झभाः स्युर्वा ॥ निमित्तादेशयोश्चपझभयो समसंख्ययोर्यथाक्रमं वक्ति । यद्वर्गगश्चपस्तद्वर्गगश्चतुर्थो भवतीति ॥ चात्परस्य हस्य झः । टात्परस्य हस्य ढः । तात्परस्य हस्य धः । कात्परस्य हस्य घः । पात्परस्य हस्य भः इति । उपादिति किम् । भगवन् हरे ॥ हस्येति किम् । तत् षष्ठम् ॥ वाग्घरिः । वर्गचतुर्थाभावे वाग्हरिः । उभयत्र जबत्वम् ॥ ५ ॥

( त० ) हो झभा इति ॥ चपादित्यनुवृत्तेर्नेह । भगवन् हरे ॥ हकारस्येति किम् तत्षष्ठम् ॥ चपानां झपानां च यथाक्रमं प्रवृत्तिरित्याह ॥ यद्वर्गग इति ॥ ननु उद्दिश्यमानविधीयमानयोर्यथाक्रमं प्रवृत्तिर्भवतीति वचनं विना कथं यथाक्रमं लभ्यत इति चेन्न ज्ञापकाद्वचनमस्तीति अनुमानात् । ज्ञापकं तु 'सैषाद्धसे' इति सूत्रे तकारात्परस्य धकारकरणम् ॥ ५ ॥

**स्तोः श्चुभिः श्चुः ॥ सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ भवतः (ग) । उद्दिश्यमानप्रतिनिर्दिश्यमानयोर्यथाक्रममिति वाच्यम् ॥ कश्चरति । कश्शूरः । तच्चित्रम् । तच्छादयति ॥ ६ ॥**

---

( क ) अत्र वासुदेवः । विपरीतनिर्देशोऽसन्देहार्थः । अन्यथा कार्यान्तरवृत्त्यर्थं छस्यैव छविधिरिति सन्देहः स्यात् । इति ॥ ( ख ) यद्वर्गग इति । अयं भावः । घोषवत्त्वनादवत्त्वमहाप्राणत्वसोष्मत्वादिधर्मैश्चपचतुर्थहस्यान्तरतमत्वाज्जुहोतीत्यादौ हस्थाने वर्गचतुर्थादेशार्थमिदं प्रसङ्गादत्रोक्तम् । अत्र निमित्तनैमित्तिकयोर्यथासङ्ख्येनाप्युपपत्तेरिति । ( ग ) स्तोरिति । स् च तुश्चेति समाहारद्वन्द्वे छान्दसो लिङ्गव्यत्ययः । 'अनित्यमागमानुशासनम्' इति वा नुमभावः । इतरेतरयोगे वा तत एव वचनव्यत्ययः ॥ यद्यप्यकारान्तत्वेन तोः पूर्वनिपातत्वं प्राप्नोति तथापि श्लिष्टोच्चारणेन लाघवात्सस्य सोष्मत्वादिगुणेन प्राधान्यात् पूर्वनिपातनियामकस्य वक्तव्यत्वात् सौत्रत्वाद्वा पूर्वम् ।

( सु० ) स्तोः श्चुभिः श्चुः ॥ स् च तुश्चानयोः समाहारः स्तु तस्य स्तोः आगमजमनित्यम् इत्युक्तत्वान्न नुम् । अथवा सा सहितः तुः स्तुः तस्य स्तोः । शाकपार्थिवादित्वान्मध्यमपदलोपः(क) । श् च चवश्च श्चवस्तैः श्चुभिः । श्चुरिति पुंलिङ्गनिर्देशोऽयमित्येके । नपुंसकनिर्देशोऽयमित्यन्ये । श्चुभिरिति सहादियोगं विनाऽपि सहार्थे तृतीया । सिनेति निर्देशात् । अत्र स्थान्यादेशयोर्यथासंख्यमस्ति । निमित्तस्थानिनोस्तु न यथा संख्यम् 'न शात्' इति ज्ञापकात् । उद्दिश्यते इति उद्दिश्यमानः स्थानी । निर्दिश्यते विधीयते यः सः निर्दिश्यमानः आदेशस्तयोर्यथाक्रमं यथा-सख्यं वक्तव्यम् । चवर्गयोगे कश्चरतीति ॥ कश्शूर इत्यत्र शसे वेत्यस्य पाक्षिकत्वाद्विसर्जनीयस्य सस्तस्य शकारेण योगे शः । तच्चित्रमित्यत्र चवर्गयोगे तवर्गस्य चुत्वम् । तच्छिव इत्यत्र शकारेण योगे तोश्चुत्वम् ॥ ६ ॥

( त० ) स्तोः श्चुभिः श्चुरिति ॥ स् च तुश्च अनयोः समाहारः स्तुः तस्य स्तोः । एकत्वे द्विगुद्वन्द्वावित्यस्यानित्यत्वान्न क्लीबत्वम् । तज्ज्ञापकं चेदमेव । सा सहित इति वा शाकपार्थिवादिः श् च चवश्च श्चवः तैः श्चुभिः । श्चुना इत्यत्रार्द्धमात्रागौरवाद्बहुवचनम् । अत्र स्थान्यादेशयोर्यथासंख्यं निमित्तकार्यिणोस्तु न 'न शात्' इति ज्ञापकात् इत्यभिप्रेत्याह—**संख्यासाम्य** इति । समस्य भावः साम्यं संख्यायाः साम्यं संख्यासाम्यम् , तस्मिन् ॥ क्रममनतिक्रम्य यथाक्रमम् । यावत्संख्याकस्योद्दिश्यमानस्य तावत्संख्याकमेव प्रतिनिर्दिश्यमानं भवतीत्यर्थः । स्तोः श्चौ श्चुरीत्येव सुवचम् ॥ नच 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परिभाषोपस्थानेन यज्ञः याच्ञा इत्यादि न सिद्ध्येत् । 'न शात्' इति लिङ्गेन तस्या अनुपस्थानाभ्युपगमात् ॥ ६ ॥

**न शात्** ॥ शकारात्परस्य तवर्गस्य चुत्वं न भवति ॥ प्रश्नः । विश्नः ॥ ७

( सु० ) न शात् ॥ स्तोः श्चुरित्यनुवर्तते । शात्परस्य सस्य शकारप्रसङ्गो नास्त्यतः शात्परस्य तोश्चुत्वं न ॥ 'प्रच्छ ज्ञीप्सायाम्' विच्छ गतौ आभ्यां नङ्गौ इसि नङ्प्रत्ययः । किङ्ति इसे कौ भमे चेति छस्य शत्वम् । नङो ङित्वात् गुणाभावः । प्रच्छेस्तु सम्प्रसारणं न भाष्येऽनुक्तत्वात् ॥ ७ ॥

( त० ) न शादिति ॥ शात्परस्य सस्य शकारप्रसङ्गो नास्ति अतः शात्परस्य तवर्गस्य चवर्गो निषिध्यते ॥ शादिति किम् । याच्ञा ॥ ७ ॥

**ष्टुभिः ष्टुः** ॥ सकारतवर्गयोः षकारटवर्गाभ्यां योगे षकारटवर्गौ भवतः ॥ कष्षष्ठः । तट्टीकते ॥ ८ ॥

( सु० ) ष्टुभिः ष्टुः ॥ स्तोरित्यनुवर्तते । ष् च टवश्च ष्टवस्तैः ष्टुभिः । ष् च टुश्चानयोः समाहारः ष्टुः । नपुंसकनिर्देशोऽयमित्येके । षा सहितः टुः ष्टुः । शाकपार्थिवादित्वान्मध्यमपदलोपः । इति पुंल्लिङ्गनिर्देशोऽयमित्यन्ये । इहापि स्थान्यादेशयोर्यसंख्यम् । निमित्तस्थानिनोस्तु न 'नषि' इति निषेधात् । स्तोः ष्टुभिर्योगे ष्टुः स्यादिति ॥ ८ ॥

( त० ) ष्टुभिः ष्टुरिति ॥ स्तोरित्यनुवर्तते । समासः पूर्ववत् । अत्रापि ष्टौ

---

( क ) अत्र वासुदेवः । यत्तु सा युतस्तुरिति तत्पुरुषाश्रयणमिति । तदप्ययुक्तम् । तत्पुरुषे परपदप्राधान्यात् सकारयुतस्यैव तवर्गस्य चुत्वविधिप्रसङ्गात् ।

ष्टुरित्येव सुवचम् ॥ ८ ॥

**न षि** ॥ षकारे परे तवर्गस्य ष्टुत्वं न भवति ॥ भवान्षष्ठः ॥ ९ ॥

( सु० ) न षि ॥ तोष्टुर्न स्यात् षकारे परे ॥ तोरिति किम् । कष्षष्ठः । षीति किम् । तट्टीका ॥ षीति सप्तमीनिर्देशात्पूर्वं षकारे ष्टुत्वं स्यादेव । रोष्टेति ॥ ९ ॥

( त० ) न षीति ॥ अत्र तोरित्यनुवर्तते ॥ षीति किम् । तट्टीकते । षीति सप्तमीनिर्देशात्पूर्वस्य शकारस्य ष्टुत्वं योगे स्यादेव क्रोष्टा ॥ ९ ॥

**टोरन्त्यात्** ॥ पदान्ते वर्तमानाट्टवर्गात्परस्य स्तोः ष्टुर्न भवति । षण्नरः षड्नरः । षट् सीदन्ति ॥ १० ॥

( सु० ) **टोरन्त्यात्** ॥ स्तोरित्यनुवर्तते । अन्ते भवोऽन्त्यस्तस्मादन्त्यात् । अन्त्यशब्देन पदान्तं कथ्यते । भवार्थे ण्यः । 'णितो वा' इति णित्वविकल्पाद्वृद्ध्यभावः । पदान्ते स्थिताट्टोः परस्य स्तोः ष्टुत्वं न भवति ॥ पदान्तात् टोः किम् । इट्टे ॥ टोः किम् । सर्पिष्टमम् ॥ 'ञमे ञमा वा' इति ञमे षण्नरः । ञमभावपक्षे षड् नरः । नर इति बहुवचनम् ॥ १० ॥

( त० ) **टोरन्त्यादिति** ॥ स्तोरित्यत्रानुवर्तते न तोरिति ॥ टोरिति किम् । सर्पिष्टमम् ॥ अन्त्यः । भवार्थे ण्यः । 'णितो वा' इति वृद्धिविकल्पाद्वृद्ध्यभावः ॥१०॥

( **नवतिनगर्योर्न** ) षण्णवतिः । षण्णगर्यः ॥ ११ ॥

( सु० ) **नवतिनगर्योर्न** ॥ पदान्ताट्टवर्गात्परयोर्नवतिनगरीशब्दयोर्न ष्टुत्वनिषेधो भवति टोरन्त्यादिति निषेधो न प्रवर्तते इत्यर्थः । षड्भिरधिका नवतिरित्यत्र षस्य डत्वे कृते नस्य ष्टुत्वम्, ततः षण्णवतिः ॥ षट् नगर्यः इत्यत्र नस्य ष्टुत्वम् । षण्णगर्यः ॥११॥

( त० ) पदान्त इत्यनुवृत्तेः पदान्तादिति लब्धे अन्त्यादिति ग्रहणमस्यानित्यत्वज्ञापनायेत्यभिप्रेत्याह—**नवतिनगर्योर्नेति** ॥ **षण्णवतिरिति** ॥ षट् च नवतिश्च षड्भिरधिका नवतिरिति वा ॥ ११ ॥

( **सुपो न** ) लिट्सु । टनास्सस्य वा धुट् । लिट्त्सु ॥ १२ ॥

( सु० ) **सुपो न** ॥ टवर्गात्परस्य स्यादीनां सुपः सकारस्य ष्टुत्वं न भवति ॥१२॥

( त० ) 'न शात्' 'न षि' इत्यत्र नञ्द्वयोपादानं ष्टुत्वस्यानित्यत्वज्ञापनार्थमित्याशयेनाह—**सुपो नेति** ॥ सुपः सकारस्य ष्टुत्वं नेत्यर्थः ॥ १२ ॥

**तोर्लि लः** ॥ तवर्गस्य लकारे परे लकारः स्यात् ॥ तल्लुनाति । भवाँल्लिखति । अनुनासिकाननुनासिकत्वेन द्विधा यवलाः । तत्र नकारस्यानुनासिको लकारः(क) ॥ १३ ॥

( सु० ) **तोर्लि लः** ॥ तोरिति किम् । शक्नोतीति शक् लुनातीति ॥ लि इति किम् । तदन्नम् ॥ यकारवकारलकाराः सानुनासिका निरनुनासिकाश्च । तत्र सानुनासिक-

---

( क ) तोरिति । 'एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः' सह वा निवृत्तिः' इति पूर्वतः स्तोरनुवृत्तेः तोरित्युक्तम् । लकारस्य द्वैविध्यात् स्थानेऽन्तरतम इति निरनुनासिकस्थाने निरनुनासिकः सानुनासिकस्थाने सानुनासिको लकार इत्यर्थः ।

स्य नकारस्य स्थाने सानुनासिक एव लो भवतीत्यर्थः ॥ १३ ॥

( त० ) तोर्लि ल इति ॥ अत्र लघुभाष्यम् । स्तोरित्यनुवर्तमाने तोर्ग्रहणं सकारनिवृत्त्यर्थमित्येके तन्न, लकारपरस्य सकारस्याभावात् । न च को लुनातीत्यादावन्तरङ्गेण विसर्गेण भाव्यम् । सल्लावक इत्यत्रापि परत्वादन्तरङ्गत्वाच्च दत्वे कृते लः । तोर्ल्लि इति द्विलकारं पाठ्यम् । ल् लि चेति छेदः । एवं सार्द्धमात्रा न्यूना भवति । 'अत्रेदमवधेयम् । तोर्लि इत्युक्ते रकारात्परत्वात्तन्निमित्तकद्वित्वमाशङ्क्य विधेयसंदेहस्यानिवार्यत्वात् । किं च स्तोः श्चुभिः श्चुरित्यत्र प्रकृतस्य श्चुरित्यस्य विधेयत्वेनोपन्यासाद्वा ॥ भवाल्ँलिखति इति ॥ अत्रानुनासिको लकारः ॥ १३ ॥

**( उदः स्थास्तम्भोः स लोपः )** उत्थानम् । उत्तम्भनम् ॥१४॥

( सु० ) **उदः स्थास्तम्भोः स लोपः** ॥ उदः परयोः स्थास्तम्भोः सकारस्य लोपो भवति ॥ ष्ठा गतिनिवृत्तौ । स्तम्भु निरोधने । सलोपे कृते 'खसे चपा झसानाम्' इति दस्य तः । उत्थानम् ॥ १४ ॥

( त० ) **उदः स्थास्तम्भोरिति** ॥ उदः परयोः स्थास्तम्भोः सकारस्य लोपः स्यादित्यर्थः ॥ **उत्थानम् उत्तम्भनमिति** । स्थीयत इति स्थानम् । भावे युट् । युवोरनाकावित्यनादेशः सलोपे कृते 'खसे चपा झसानाम्' इति दकारस्य तकारः ॥ १४ ॥

**नः सक् छते** ॥ नान्तस्य पदस्यावपरे छते समागमो भवति ॥ राजँश्चित्रम् । भवाँस्तनोति । अवपरे किम् । सन्त्सरुः ॥ १५ ॥

( सु० ) **नः सक् छते** ॥ नान्तस्य पदस्य सक् स्यात् अवः परो यस्मात्सः अवपरस्तस्मिन् अवपरे छते ॥ कित्वादन्ते । सकोऽकारस्तूच्चारणार्थः । कस्यान्ते इत्याकांक्षायां पदस्यान्ते भवति । नस्यापदान्तत्वात् 'नश्चापदान्ते झसे' इत्यनुस्वारः । नस्य सगागमो भवतीति वचने तु नस्यानुस्वारो न स्यात् । सको नकारस्य भक्तत्वात् नस्य पदान्तत्वानपायात् । आगमाष्टितकिन्मितस्ते यद्गुणीभूता यस्य गुणीभूता यस्य विशेषणीकृतास्तद्ग्रहणेन विशेष्यग्रहणेन कृत्वा ते आगमाः आचार्यैर्गृह्यन्ते अभ्युपगम्यन्ते । तद्यथा । सगागमः पदस्य विहितः । पदं विशेष्यम् । सगागमो विशेषणम् । पदग्रहणेन सक् गृह्यते । सक्पर्यन्तं पदमित्यर्थः(क) ॥ पदस्येति किम् । हन्ति ॥ नान्तस्येति किम् । तट्टीकते ॥ छते किम् । भगवन् कुरु ॥ अवपरे छते किम् । सन्त्सरुः खड्गमुष्टिः ॥ १५ ॥

( त० ) **नः सक् छते इति** ॥ अत्र पदस्य सगागमः न तु नस्य । तथा सति नस्यानुस्वारो न स्यात अपदान्तत्वाभावात् इत्याशयेनाह—**नान्तस्येत्यादि** ॥ पदस्येति किम् । हन्ति ॥ न इति किम् । तट्टीकते । छते किम् । भगवन्कुरु ॥ अवपरे किम् । सन्त्सरुः । 'त्सरुः खड्गादिमुष्टिः स्यात्' इत्यमरः ॥ १५ ॥

**( न प्रशानः )** प्रशान्तनोति ॥ १६ ॥

---

( क ) इयमत्राशङ्का—

राजँश्चित्रमित्यत्र राजन्नित्यस्य पदत्वेन नकारस्य पदान्तत्वात् 'नश्चापदान्ते झसे' इत्यनुस्वारो न स्यादिति । अयं समाधिः—'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्तते' इति परिभाषया नान्तपदविहितस्य सगागमस्य पदत्वेन गृहीतस्मात् न कारस्यापदान्तत्वं समायात्यतोऽनुस्वारो निरवाध एवेति ।

( सु० ) न प्रशानः ॥ प्रशानिति नान्तस्य पदस्य सग् न भवत्यवपरे छते ॥ प्रपूर्वात् शाम्यतेः क्विप् । 'अमान्तस्योपधाया दीर्घः' इत्यनेन दीर्घः । 'मो नो धातोः' इति नः । नस्यासिद्धत्वात्तलोपो न प्रशाम्यतीति प्रशान् ॥ १६ ॥

( त० ) अव इत्यपकृष्य तस्य व्यवस्थितत्वाश्रयणात् । मस्थानिकस्य नस्य सग्नेत्याशयेनाह-न प्रशान इति ॥ प्रशान्तनोतीति ॥ 'शमु उपशमे' इत्यस्मात् क्विपि 'अमान्तस्य क्वौ' इति दीर्घे 'मो नो धातोः' इत्यनेन नत्वे रूपम् ॥ १६ ॥

शे चक् वा ॥ नान्तस्य पदस्यावपरे शे वा चगागमो भवति । भवाञ्छूरः-भवाञ्च्छूरः-भवान्च्शूरः-भवाञ्शूरः(क) ॥ १७ ॥

( सु० ) शे चक् वा ॥ न इत्यनुवर्तते । नान्तस्य पदस्य चक् स्याद्वा शे ॥ पदस्येति किम् । दंश । शे इति किम् । भवांश्चिनोति ॥ चक् वा इत्यत्र 'वाक्ये तु सा विवक्षामपेक्षते' इत्युक्तत्वाजवाभावः ॥ भवान् शूर इत्यत्र चगागमस्य कित्त्वात् पूर्वान्तत्वेन 'चपाच्छः शः' इति छत्वविकल्पः । पक्षे हसात्परस्य झसस्येति चलोपः । नकारस्यानुस्वारपरसवर्णौ अपदान्तत्वात् । भवाञ्छूरः भवाञ्च्छूरः भवाञ्च्शूरः ॥ भवाञ्शूरः ॥ "अछौ अचछा अचशा अशाविति चतुष्टयम् । रूपाणामिह चक्छत्वचलोपानां विकल्पनात् ॥" कुर्वंस्तत्र । कुर्वञ्च्छेते । इत्यत्रापदान्तनकारस्य स्थानेऽनुस्वारचुत्वाभ्यां परत्वात्प्राप्तं णत्वं न । कस्मात् । अनन्ते इत्यन्तरङ्गे णत्वनिषेधे सति 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया बहिरङ्गयोः सकृचकोरसिद्धत्वात्(ख) ॥ तच्छास्त्रम् , मञ्चशंभुरित्यादौ चोः कुरिति कुत्वमपि न । अन्तरङ्गे कुत्वे कर्तव्ये चुत्वचकारासिद्धत्वात् । कुत्वविधिस्तु वाग्भ्यां वक्ष्यतीत्यादावेक पदस्थे चवर्गे सावकाशः । 'चपाच्छः' अम्वयुक्ताच्छसादौ' इत्यादिनिर्देशात् ॥ १७ ॥

( त० ) शे चक् वेति ॥ भवाञ्च्छूर इत्यादि ॥ 'अछौ अचछा अचशा अशाविति चतुष्टयम् । रूपाणामिह चक्छत्वचलोपानां विकल्पनात् ॥" पदस्येति किम् । दंशः ॥ नान्तस्य किम् । पञ्चशः ॥ शे इति किम् । भवांश्चिनोति ॥ अत्र शीत्येव वक्तुमुचितम् । मात्रालाघवात् । ननु कुर्वंस्तिष्ठ कुर्वञ्छेते इत्यत्र अपदान्तत्वान्नस्य चुत्वादनुस्वाराच्च परत्वान् णत्वं प्राप्नोति । सत्यम् । अनन्त इत्यन्तरङ्गं निषेधं प्रति बहिरङ्गयोश्चक्सकोरसिद्धत्वाश्रयणात् । तच्छास्त्रमित्यत्रापि चुत्वे कृते कुत्वमप्यसिद्धत्वादेव न ॥१७॥

ङणनो ह्रस्वाद् द्विः स्वरे ॥ ङकारणकारनकारा ह्रस्वादुत्तरा द्विर्भवन्ति स्वरे परे पदान्ते (ग) ॥ प्रत्यङ्ङिदम् ॥ सुगण्णिह । राजन्निह ॥ ह्रस्वात्किम् । प्राङास्ते ॥ पदान्ते किम् । परमदण्डिनौ ॥ १८ ॥

---

( क ) भवान् अग्रे शूरः । अत्र 'चपाच्छः शः' इति सूत्रस्य विकल्पेन प्राप्त्यर्थं रूपद्वये चगागमः । च पदत्रयेऽपि । 'स्तोः श्चुभिश्चुः' नस्य ञः । प्रथमरूपे 'चपाच्छः शः' शस्य छः सर्वत्र । स्वर०० । भावाञ्छूरः, भवाञ्शूरः भवाञ्शूरः । तृतीयरूपे चगागमाभावे भावाञ्छूरः । इति चन्द्रकीर्तिः ।

( ख ) अत्र वासुदेवः । ननु कुर्वन् शेते इत्यादौ चकि नस्य अपदान्तत्वात् परत्वाण्णत्वं स्यादिति चेत , सत्यम् , परशब्दस्येष्टवाचित्वात् क्वचित्पूर्वेणापि परबाधादनुस्वारपरसवर्णाविति ।

( ग ) ङ्णन इति । यद्यपि कुर्वन्नास्ते इत्यादौ नस्य द्वित्वे पूर्वस्यापदान्तत्वाण्णत्वप्राप्तिस्तथापि 'अवकुप्वन्तरेऽपि' इत्यत्र 'वाक्योरि'त्यतो वानुवृत्तेर्न । केचित्तु पदान्तस्यैव द्वैधाभावाद्दलितमुद्गादिदले तदीयव्यपदेश इवात्रापि पूर्वस्यापि पदान्तत्वाण्णत्वं नेत्याहुः ।

( सु० ) ङ्णनो ह्रस्वाद् द्विः स्वरे ॥ ङ् च ण् च न् च ते ङ्णनः । पदान्ते इत्यनुवर्तते । ह्रस्वात्पराः पदान्ते स्थिताः ङ्णनः द्विः स्युः स्वरे परे ॥ ह्रस्वादिति किम् । प्राङ् आस्ते । प्राण् आस्ते । भवान् आस्ते ॥ ङ्णन इति किम् । किम् आस्ते ॥ स्वरे किम् । प्रत्यङ् करोति । सुगण् वदति । पचन्वदति ॥ पदान्ते किम् । दण्डिनौ ॥ ननु समिद्दण्डिनावित्यादौ पूर्वपदस्येव चोत्तरखण्डस्यापि प्रत्ययलक्षणेन पदत्वात् नस्य द्वित्वं स्यात् । उच्यते । उत्तरखण्डस्य प्रत्ययलक्षणेन पदान्तकार्यं न 'एदोतोऽतः' 'वत्विनौ'' इत्यादिनिर्देशात् । अत एव परमवाचौ परमगोदुहौ परमलिहावित्यादौ कुत्वघत्वढत्वादीनि न भवन्ति ॥ ननु अनश्न इत्यादौ नस्य द्वित्वं स्यात् । उच्यते । अनन्ते अनपोत्यादिज्ञापनान्न द्वित्वम् ॥ १८ ॥

(त०) ङ्णनो ह्रस्वाद् द्विः स्वरे इति ॥ ङ् च ण् च न् च ते ङ्णनः । ह्रस्वादिति किम् । प्राङ् आस्ते । स्वरे इति किम् । प्रत्यङ् करोति । पदान्ते इति किम् । दण्डिनौ ॥ ननु समिद्दण्डिनावित्यत्र पूर्वपदस्येवोत्तरखण्डस्यापि प्रत्ययलक्षणत्वेन पदत्वात् नस्य द्विर्वचनं प्राप्नोतीति चेन्न । उत्तरपदस्य प्रत्ययलक्षणेन न पदान्तकार्यितेति 'एदोतोऽतः' इति ज्ञापनात् । अत एव नलोपोऽपि न । अनश्न इत्यादौ तु अनपीत्यादिज्ञापकाद्विद्वत्वं न । नलोपस्तु अमूविधिसामर्थ्यान्न द्विरिति क्रियावृत्तौ 'द्वित्रिचतुर्भ्यः सुः' इति स्वन्तत्वादव्ययम् । क्रिया चात्रोच्चारणमेव तथा च द्विरुच्चार्यां इत्यर्थो बोद्धव्यः ॥ १८ ॥

छः ॥ ह्रस्वात्परश्छकारो द्विर्भवति ॥ १९ ॥

( सु० ) छः ॥ ह्रस्वादित्यनुवर्तते । छकारे अकार उच्चारणार्थः तेन विच्छिन्नमित्यादि सिद्ध्यति ॥ १९ ॥

( त० ) छ इति ॥ अत्र स्वरे इत्यनुवर्त्य विभक्तिव्यत्ययेन स्वरात् इति बोध्यम् । पदान्ते वेत्यनुवर्तते । तच्च वाक्यभेदेन सम्बध्यते । विकल्पस्तु व्यवस्थितः । तेन पदान्ते दीर्घादाङ्माङ्वर्जिताद्वा ॥ स्वरादिति किम् । छत्रम् ॥ १९ ॥

( खसे चपा झसानाम् ) तव छत्रम्—तव च्छत्रम् ॥ २० ॥

( सु० ) खसे चपा झसानाम् ॥ झसानां चपाः स्युः खसे परे ॥ झसानामिति किम् । खन्सु ॥ खसे किम् । वेद्मि ॥ २० ॥

( दीर्घाच्च ) ह्रीच्छः ॥ २१ ॥

( सु० ) दीर्घाच्च ॥ दीर्घात्परश्छकारो द्विः स्यात् ॥ २१ ॥

( पदान्ताद्दीर्घाद्वा ) लक्ष्मीच्छाया—लक्ष्मीछाया ॥ २२ ॥

( सु० ) पदान्ताद्दीर्घाद्वा ॥ पदान्ताद्दीर्घात्परश्छो वा द्विः स्यात् ॥ २२ ॥

( आङ्माङ्भ्यां नित्यम् ) आच्छादयति । माच्छिदत् ॥ २३ ॥

( सु० ) आङ्माङ्भ्यां नित्यम् ॥ पदान्ताद्दीर्घादित्यस्यापवादोऽयम् । आङ्माङ्भ्यां परश्छो द्विः स्यान्नित्यम् ॥ २३ ॥

( पुंसोऽवपरे खपे संयोगान्तस्य लोपो न ) पुंस्कोकिलः । पुंस्पुत्रः ॥ अवपरे किम् । पुङ्क्षीरम् ॥ खपे किम् । पुन्दासः ॥ २४ ॥

(सु०) पुंसोऽवपरे खपे संयोगान्तस्य लोपो न ॥ पुंस्शब्दस्य सस्य लोपो न भवति । अवः परो यस्मात्सः अवपरस्तस्मिन् अवपरे खपे ॥ 'संयोगान्तस्य लोपः' इति प्राप्तावयं निषेधः। अवपरे किम् । पुंक्षीरम् । सलोपोऽत्र ॥ खपे किम् । पुंदासः। अत्रापिसलोपः॥

( त० ) संयोगान्तस्य लोप इत्यत्र वाऽवसाने इत्यतो वेत्यपकृष्य तस्य व्यवस्थितत्वाश्रयणात् क्वचिन्न इत्याशयेनाह-पुंसोऽवपर इत्यादि ॥ तेन ख्यातौ वा सभिन्नस्य रात्र इत्यादि सिद्धम् । पुंस्कोकिल इति ॥ पुमांश्चासौ कोकिलश्च सः ॥ २४ ॥

( ख्याधातौ वा ) पुंस्ख्यानम्—पुङ्ख्यानम् ॥ २५ ॥

( सु० ) ख्याधातौ वा । पुंशब्दस्य मकारस्य लोपो वा भवति । 'चक्षिङः ख्याञ्' इति ख्याधातौ परे ॥ पुख्यानमिति । चक्षिङो युटि रूपम् ॥ २५ ॥

मोऽनुस्वारः ॥ मकारस्यानुस्वारो भवति हसे पदान्ते ॥ तं हसति । पटुं वृथा ॥ पदान्ते किम् । गम्यते ॥ हसे किम् । किमत्र(क) ॥ २६ ॥

( सु० ) मोऽनुस्वारः ॥ पदान्ते इत्यनुवर्तते । पदान्ते मोऽनुस्वारः स्यात् हसे परे ॥ पदान्ते किम् । गम्यते ॥ म इति किम् । भवान्हसति ॥ हसे किम् । फलमस्ति ॥ म इत्यत्राकार उच्चारणार्थः ॥ अनुस्वार इति पूर्वाचार्याणां संज्ञा ॥ २६ ॥

( त० ) मोऽनुस्वारः इति ॥ पदान्ते किम् । गम्यते ॥ मकारस्य किम् ॥ भवान् हसति ॥ हसे इति किम् । फलमस्ति ॥ अत्र लघुभाष्यम् । ननु 'मोम्' इति सूत्र्यताम् । अत्राकार उच्चारणार्थः । ततः परस्यादेशः स्यादिति चेत् सत्यम् । संज्ञापूर्वको विधिरनित्यो यथा स्यादित्येवमर्थमिदम् । अनुस्वार इति प्राचां संज्ञा । तेन सम्राडिति सिद्धम् । वस्तुतस्तु 'मोम्' इति कर्तुं शक्यम् 'अम्शसोः' इत्यादिनिर्देशेनास्यानित्यत्वज्ञापनात् सम्राडित्यादि सिद्धम् ॥ अत्रेदमवधेयम् । 'मोम्' इति कृते ओ अवित्यादिष्विव म इत्यस्य प्रथमान्तत्वमाशङ्क्य ओकारस्य विधेयत्वशङ्काया अनिवार्यत्वादनुस्वारस्य तत्संदेहनिराकरणायावश्यं वक्तव्यत्वात् । यत्तु अत्र म् इति योगं सिभज्य तत्र सकं चानुवर्त्य क्वचिन्मस्य सगागम इति व्याख्येयम् । तेन पुंस्कोकिलः पुंस्पुत्र इत्यादि सिध्यतीत्युक्तम् । तत्तु पुंसोऽवपरे खपे संयोगान्तस्य लोप इति स्वोक्त्या विरोधादुपेक्ष्यम् ॥ २६ ॥

नश्चापदान्ते झसे ॥ नस्य मस्य चापदान्ते वर्तमानस्यानुस्वारो भवति झसे हकारे च परे (ख) ॥ यशांसि । पुंभ्याम् । स्वनड्वांहि ॥ अपदान्ते किम् । ब्रह्मन् पाहि ॥ झसे किम् । तन्यते ॥ २७ ॥

( सु० ) नश्चापदान्ते झसे ॥ चकारो मकारस्य समुच्चयार्थः । अपदान्ते नस्य मस्य चानुस्वारः स्यात् झसे परे ॥ अपादान्ते किम् । भवान् भाति ॥ झसे किम् । मन्यते । यम्यते ॥ २७ ॥

---

( क ) म इति । मकारस्यानुस्वारो भवति हसे पदान्ते चेति० व० पु० पाठः। व० मू० पु० पाठः, का० पु० पाठः । कौमारास्त्ववसानेऽप्यनुस्वारं चेच्छन्ति । तेन देवं, देवम् ।

( ख ) 'नश्चापदान्ते झसे' इत्यत्र चो मानुकर्षणार्थ इति मत्वा वृत्तावाह—नस्य मस्य चेति । हो झभाः' इत्यतो ह इत्यनुवर्त्तते स च विभक्तिविपरिणामेन सप्तम्यन्तोऽवसेयः । तेन हकारेऽपि नस्य मस्य चानुस्वारो भवतीत्युक्तम् ।

( त० ) नश्चापदान्ते झले इति ॥ चकारो मकारस्य समुच्चयार्थः। अन्यथा अपदान्ते नस्यैव स्यात् ॥ अपदान्ते किम्। भवान् याति। अत्रापदान्तग्रहणादेतत्सूत्रपर्यन्तः पदान्त इत्यधिकारो बोध्यः ॥ झल इति किम्। मन्यते। यम्यते। अत्र हो ढभा इत्यतो हकारोऽनुवर्त्यः स च विभक्तिविपरिणामेन सप्तम्यन्तो बोध्य इत्याशयेनाह—हकारे चेति ॥ २७ ॥

**यमा यपेऽस्य** ॥ अपदान्ते वर्तमानस्यानुस्वारस्य यमा भवन्ति यपे परे ॥ अस्य यपस्य सवर्णाः ॥ शान्तः। अङ्कितः। अञ्चितः। कुण्ठितः। गुम्फितः (क) ॥ २८ ॥

( सु० ) यमा यपेऽस्य ॥ अस्येति यपपरामर्शार्थम्। अनुस्वारस्यानुवृत्त्यैव लाभात्। अपदान्ते अनुस्वारस्य यमो यमा भवन्ति यपे परे। ते यमा अस्य यपस्य सवर्णा भवन्तीत्यर्थः। सानुनासिकस्यानुस्वारस्य सानुनासिका एव यमाः स्युः। यमा इति बहुवचनं जातौ ज्ञेयम्। कुण्डं रथेनेत्यत्रानुस्वारस्य पाक्षिको यमो न रकारस्यानुनासिकत्वाभावात्(ख) ॥ यपे किम्। आक्रंस्यते। स्वनड्वांहि ॥ अनुस्वारस्येति किम्। राजन् गच्छ। गम्यते ॥ 'अङ्क पदे लक्षणे च' इति चुरादिण्यन्तात् क्तः। सेटोक्तक्तवत्वोर्णिलोप इति णिलोपः अनेनानुस्वारस्य ङः। अकि लक्षणे इत्यस्माद्वा क्तः। नुमोऽनुस्वारे परसवर्णेन ङः। अङ्कितः॥ अञ्चेः पूजायामिट् इतीट्। पूजार्थस्याञ्चेर्नेति नलोपो न। अञ्चितः॥ 'कुठि प्रतिघाते' क्तः। नुमोऽनुस्वारे परसवर्णेन णः कुण्ठितः॥ 'शमु उपशमे' क्तः। 'दान्तादयो वा निपात्यन्ते' इति निपातनादिडभाव। 'अमस्य क्ङिति झले इति' दीर्घः। मस्यानुस्वारे परसवर्णेन नकारः। शान्तः॥ गुम्फ ग्रन्थे' क्तः। मस्यानुस्वारेपरसवर्णेन मः। गुम्फितः॥ ननु कुर्वन्तीत्यत्रानेन कृतस्य नस्य णत्वं कस्मान्न। उच्यते। 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परसवर्णस्यासिद्धत्वान्न णत्वम् (ग) ॥ २८ ॥

( त० ) यमा यपेऽस्येति ॥ अस्येति किमर्थम्। अनुस्वारपरामर्शार्थं चेन्न। तस्यानुवृत्त्यैव लाभात्। न च प्रथमान्तस्यानुवृत्तस्य अनुस्वार इत्यस्य षष्ठीविपरिणामार्थमिति वाच्यम्। यमा इत्यादेशापेक्षया अर्थात् षष्ठीविपरिणामसंभवात्। एवं तर्हि यपपरामर्शार्थम्। इत्यभिप्रेत्याह—अस्य यपस्य सवर्णा इति ॥ अनुनासिकस्यानुस्वारस्य सदृशयपस्य सवर्णा यमा भवन्तीत्यर्थः॥ तेन रेफो न भवति, अनुस्वारसादृश्याभावात्। न च सादृश्याभावेऽपि वचनात् स्यादिति वाच्यम्। यपं इत्यस्य जातिपरत्वेन यपजातीये

---

( क ) यमा इति। अत्र मोऽनुस्वार इत्यतोऽनुस्वार इति प्रथमान्तमप्यनुवर्त्तमानमादेशापेक्षया-ऽर्थात् षष्ठ्यन्तं स्यादिति मत्वाह—अनुस्वारस्येति। तत्र च भाव्यमाना यमाः सवर्णपरिभाषया अनुस्वारस्यैव सवर्णा भवन्तः सर्वेऽपि सर्वत्र प्राप्ताः, तत्रास्येति प्रत्यच्चार्थाभिधायीदम्। शब्दो नन्तरं यपं परामृश्य सवर्णपरिभाषया एकत्वमापद्य यपस्य सवर्णान् यमान् विधत्त इति मनसि कृत्वाह—यस्य यपस्य सवर्णा इति। अस्य यपस्य सवर्णा यमा अनुस्वारस्य भवन्तीति योजना।

( ख ) भावादिति। 'अमङ्णना' अनुनासिका इति शास्त्रात्।

(ग) अयमाशयः—असिद्धं बहिरङ्गमन्तरङ्गे इति रेफाद्याश्रयेऽन्तरङ्गे णत्वे कार्य्ये यपाश्रयस्य बहिरङ्गस्य यमादेशस्य नस्यासिद्धत्वेन स्थानिनो भावान्न भवति। प्रकृतिप्रत्ययाश्रितत्वेन वा णत्वस्यान्तरङ्गत्वम्।

सवर्णे यमजातीयस्यानुस्वारसदृशस्य विधानेन वचनस्य चरितार्थत्वात् ॥ यत्तु यमोऽस्येति सूत्रं युक्तम् । अनुस्वारेण झसे हसे इति वाऽऽक्षेपणीयम् ॥ अनुस्वारस्य सदृशझसहसयोः सवर्ण आदेशो भविष्यतीति व्यर्थमिह यपे इति । शषसहेषु तु नातिव्याप्तिः, तेषां यमे सवर्णाभावादिति । तत्रेदमवधेयम् । हसाक्षेपेणैव तदन्तर्गतस्य झसस्यापेक्षस्याशक्यत्वात्। किं च अनुवृत्तिलब्धेनानुस्वारेण हसाक्षेपे पदान्तस्याक्षेपाच्च ॥ २८ ॥

**वा पदान्तस्य** ॥ पदान्ते वर्तमानस्यानुस्वारस्य यमा वा भवन्ति यपे परे ॥ अस्य यपस्य सवर्णाः ॥ त्वङ्करोषि–त्वं करोषि । तन्तनोति–तं तनोति । सय्यँन्ता–संयन्ता ॥ सव्वँत्सरः-संवत्सरः । यल्ँलोकम्–यंलोकम् ॥२९॥

( सु० ) **वा पदान्तस्य** ॥ अत्रानुस्वारस्यानुनासिका एव यमा वा स्युः ॥

( त० ) वेति ॥ द्वितीयसूत्रोपन्याससामर्थ्यादेतत्पदान्तविषयमित्याशयेनाह–**पदान्तेवर्तमानस्येति** ॥ २९ ॥

**मो राजि समः क्वौ** ॥ क्विबन्ते राजतौ परे समो मस्य म एव स्यात् (क) ॥ सम्राट् ॥ ३० ॥

( सु० ) **मो राजि समः क्वौ** ॥ क्विबन्ते राजतौ परे समो मस्य म एव ॥ मकारस्य मकारवचनमनुस्वारनिवृत्त्यर्थम् ॥ राजतौ किम् । गमादीनां जमस्य इति मलोपे ह्रस्वस्य इति तुक् । संगत् ॥ सम इति किम् । इदं राट् ॥ क्विबन्ते इति किम् ॥ संराजितव्यम् । संराजते । राजृ दीप्तौ इति । संपूर्वादस्माद्वर्तमाने क्विप् । षत्वडत्वचपत्वानि । सम्राट्।३०

**(यवलमनपरे हकारे मस्य यवलमना वा)** किं ह्यः-किय्ँह्यः । किं ह्वलयति–किव्ँ ह्वलयति । किं ह्लादयति–किल्ँह्लादयति । किं ह्मलयति–किम्ह्मलयति । किं ह्नुते–किन्ह्नुते ॥ ३१ ॥

( सु० ) **यवलमनपरे हकारे मस्य यवलमना वा** ॥ यश्च वश्च लश्च मश्च नश्च ते यवलमनाः यवलमनाः परे यस्मात् सः यवलमनपरस्तस्मिन्यवलमनपरे हकारे मस्य यवलमना वा भवन्ति ॥ 'ह्वल ह्मल संचलने' । 'ह्नुङ् अपनयने' ॥ ३१ ॥

( त० ) वेति व्यवस्थितो विकल्प इत्यभिप्रेत्याह—**यवलमनपरे** इति ॥ हकारे इति विशेष्यम् । यश्च वश्च लश्च मश्च नश्च ते परे यस्य स तथा तस्मिन् । **किं ह्य इति** ॥ ह्योऽतीतेऽह्नि । **किं ह्वलयतीत्यादि** ॥ 'ह्वल ह्मल चलने ।' 'ज्वलह्वलह्मलनमामनुपसर्गाद्वा' इति मित्त्वाद्ध्रस्वत्वम् ॥ 'ह्नुङ् अपनयने' । अदादिः । 'ह्लादी सुखे' ॥ कुर्वन्तीत्यत्र नस्य णत्वं तु 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यसिद्धत्वान्न ॥ वेति व्यवस्थितविभाषाश्रयणात् शसे

---

(क) **मोराजि** । म इति प्रथमान्तम् । मोऽनुस्वार इत्यतो न इति स्थानषष्ठ्यन्तमनुवर्तते । सम इति अवयवषष्ठी । प्रत्ययग्रहणपरिभाषया क्विग्रहणेन क्विप्प्रत्ययान्तलाभः । तदाह–**क्विबन्त इत्यादिना** । **म एवेति** । नत्वनुस्वार इत्यर्थः । मस्य मविधानमनुस्वारनिवृत्त्यर्थमिति भावः । अनुस्वारप्रकरणे क्वचित्–[ ॐछन्दसि ] छन्दसि अनुस्वारः ॐकारमापद्यते शषसहरेफेषु परतः । इं सः । इॐ सः । तं रविः । त ॐ रविः । इति दृश्यते ।

चपस्य द्वितीया वा । टनात्सस्य वा धुट् । शसे ङ्णोः कुक्टुकौ वा । पकारे परे नॄन्नकारस्य नुस् वा इत्यादि संगृहीतम् ॥ ३१ ॥

**(शसे चपस्य द्वितीया वा)** वथ्सरः—वत्सरः । अफ्सरः—अप्सरः॥

( सु० ) **शसे चपस्य द्वितीया वा** ॥ वर्गप्रथमानां द्वितीया भवन्ति शसे परे ॥३२॥

**( न पदान्ते )** तत्साधुः ॥ ३३ ॥

( सु० ) न पदान्ते ॥ पदान्ते स्थितानां वर्गप्रथमानां द्वितीया न भवन्ति ॥३३॥

**( कुक्टुक्वर्जितस्य विभक्तौ न )** भवत्सु ॥ ३४ ॥

( सु० ) **कुक्टुक्वर्जितस्य विभक्तौ न** ॥ चपस्य विभक्तौ द्वितीया न स्युः कुक्टुकोश्च द्वितीयाः स्युर्विभक्तौ परे ॥ ३४ ॥

**( टनात्सस्य वा धुट् )** षट्त्सन्तः । षट् सन्तः । सन्त्सः—सन्सः॥३५॥

( सु० ) **टनात्सस्य वा धुट्** ॥ टश्च नश्च तयोः समाहारः टनं तस्मात् । टकार-नकाराभ्यां परस्य सकारस्य धुट् वा स्यात् ॥ धुटश्चपत्वेन तकारः ॥ ततः शसे चपस्येत्य-नेन तकारस्य थो न चपत्वस्यासिद्धत्वात् । षट्त्सन्तः ॥ ३५ ॥

**( शसे ङ्णोः कुक्टुकौ वा )** प्राङ् षष्ठः—प्राङ्क्षष्ठः—प्राङ्ख्-षष्ठः । सुगण् साधुः—सुगण्ट् साधुः—सुगण्ठ् साधुः ॥ ३६ ॥

( सु० ) **शसे ङ्णोः कुक्टुकौ वा** ॥ ङकारणकारयोः कुक्टुकावागमौ वा स्तः शसे परे ॥ कुगभावे प्राङ् षष्ठः । कुगागमे प्राङ्क्षष्ठः । कुको द्वितीये प्राङ्ख् षष्ठः ॥३६॥

( त० ) ङ् च ण् च ङ्णौ तयोः । ङस्य कुक् णस्य टुक् भवतीत्यर्थः, वर्ग्यत्वात् ॥३६॥

**( पकारे परे नॄन्नकारस्य नुस् वा )** ॥ ३७ ॥

( सु० ) **पकारे परे नॄन्नकारस्य नुस् वा** ॥ नॄनित्यस्य नकारस्य नुस् आदेशः स्याद्वा पकारे परे ॥ अकार उच्चारणार्थः तेन नॄः पुनाति इत्यादि सिद्ध्यति ॥ ३७ ॥

**स्रोर्विसर्गः** ॥ सकाररेफयोर्विसर्गो भवति रसे पदान्ते च (क) ॥३८॥

( सु० ) **स्रोर्विसर्गः** ॥ स् च र् च स्रौ तयोः स्रोः । स्रोर्विसर्गः स्यात् रसे पदा-न्ते च ॥ धात्वधातुसाधारणमिदम् ॥ पदान्ते किम् । स्यात् । ब्रूयात् । पयसी । वारी ॥ रसे किम् । चातुर्यम् ॥ सुप्प्रत्यये परे रस्य विसर्गो न चतुर्ष्विति निर्देशात् । तेन गीर्षु वार्षु पूर्षु इत्यादि सिद्ध्यति । नार्पत्यः भार्गवः इत्यादौ तु बहिरङ्गाया वृद्धेरसिद्धत्वान्न विसर्गः (ख) । वर्ष्मे वर्त्मेत्यादौ कर्तृसाधनयोरिति निर्देशान्न विसर्गः ॥ ३८ ॥

( त० ) **स्रोर्विसर्गः** ॥ पदान्ते वर्तमानयोः स्रोर्विसर्गः स्यात् । धात्वधातुसाधा-रणमिदम् । तेन अबिभः देवः प्रातरित्यादि सिद्धम् । अव्ययादित्यस्य परत्वात्सिलुकि

---

( क ) **सोर्विसर्ग इति** । अत्र वर्सा रसे इत्यतः रसे पदान्ते चेत्यधिकारश्च नाम्नोऽधातोश्चेति पदा-न्यनुवर्त्तन्ते । ततश्चाधातो रसे पदान्ते च धातोश्च पदान्त एव विसर्ग इति विवेकः ततश्चाचका अबिभ-इत्यादौ भवति नहि सोर्बिभर्तीत्यादौ । यद्वा—धातोश्च झसे इत्यत्र धातोरिति योगविभागे स्रोर्विसर्गः पदान्ते चेति सम्बन्धादेतदवसेयमिति **वासुदेवः** । अधातोरसे पदान्ते चेति कुत्रापि पाठः ०व० ।

( ख ) **न विसर्ग इति** । अन्तरङ्गे विसर्गे कर्त्तव्ये बहिरङ्गवृद्धेरसिद्धत्वमतो विसर्गप्रतिषेधः ।

नात्र रसपरत्वम् ॥ पदान्ते किम् । धुर्यात् । पयसी । नाम्नश्च रसपरयोः स्रोर्विसर्गः स्यात् । तेन वेधोभ्यां दोःर्ष्वित्यादि सिद्धम् ॥ सौ तु सिलोपात् प्रथमं रत्वाद्विसर्गे कृते तस्य हसपरत्वाभावेन सिलोपाभावे नित्यं विसर्गद्वयश्रवणप्रसङ्गः । अथ वेधोभ्याम् इत्यत्र द्वयोः सकारयोरेफो विसर्गो भविष्यति सत्त्वजातेराश्रयणादिति चेत् । शृणु । प्रियचत्वाः गीरित्यादौ रसपरयोरेकजात्यभावादुक्तदोषतादवस्थ्यमिति केचित् । तन्न 'प्रायशो इश्य-ताम्' इति वचनात् ॥ क्वचित्पर्वेणापि परबाध इष्टसिद्ध्यर्थम् ॥ रसे किम् चीवरान् । वस्तेः । क्वचित्क्विब्विशिष्टस्य नामसंज्ञा भवति लुप्तेऽपि क्विपि एकदेशविकृतन्यायेन ना-मत्वमस्ति । तेन सुवोभ्यामित्यादौ विसर्गः सिध्यति । स् च र् च स्रौ तयोः । अत्र रेफो निर्दिष्टो न तु रेफभूत ऋकारः । रेफस्थानिकविसर्गस्य रादेशविधायकस्य र इति सूत्रस्य वैयर्थ्यापत्तेः कर्तृकार्ययोरित्यादिनिर्देशाच्च । न ह्यत्र ऋकारस्य विसर्गो निर्दिष्टः । प्रातः पाशमित्यादावुभयथा विसर्गः । नामसंज्ञाप्रवृत्तिकाले रेफस्य सुपि न विसर्गः चतु-र्ष्विति ज्ञापकात् । तेन गीर्ष्वित्यादि सिद्ध्यति । नार्पत्य इत्यत्र तु बहिरङ्गाया वृद्धेरसि-द्धत्वान्न विसर्गः । वर्ष्मं इत्यादौ न विसर्गः कर्तृसाधनयोरिति निर्देशादिति दिक् ॥३८॥

**कुप्वोः ≍क≍पौ वा ।** कवर्गपवर्गसम्बन्धिनि खसे परे विसर्गस्य ≍क≍पौ वा भवतः ॥ कपावुच्चारणार्थौ । नॄं≍पाहि—नॄंः पाहि—नॄन् पाहि (क)॥३९॥

इति हससन्धिः ॥ ५ ॥

( सु० )कुप्वोः ≍क≍पौ वा ॥ आदेशनिमित्तयोर्यथाक्रममत्रास्ति । आदेशे ककारपकारावुच्चारणार्थौ । केवलयोर्जिह्वामूलीयोपध्मानीययोरुच्चारणसम्भवात् । किं च ककारखकारयोः परतः ≍ कः स्यात् । पकारफकारयोश्च ≍ पः स्यात् ॥ कुप्वोरिति किम् । कश्चारः ॥ वाग्रहणात्पक्षे विसर्गः । विसर्जनीयस्य स इत्यस्यापवादोऽयम् । उप-ध्मानीये नॄं ≍ पाहि । विसर्गे नॄः पाहि । नभावे नॄन्पाहि ॥ ३९ ॥

इति सुबोधिन्यां हससन्धिः ॥ ६ ॥

( त० ) कुप्वोः ≍क≍ पौ वेति ॥ कुश्च पुश्च कुपू तयोः अत्रादेशनिमित्तयोर्य-थाक्रमम् । आदेशे कपावुच्चारणार्थौ केवलयोरुच्चारणासम्भवात् । कखयोः ≍ कः । पफ-योः ≍ पः । अन्यत्रोत्तरविधिर्बाधनात ॥ ३९ ॥

श्रीविद्यानगरस्थायी पौत्रो रामकरस्य हि । हससंधेर्व्यधाद्व्याख्यां स हि लोकेशसंज्ञकः ॥

इति तत्त्वदीपिकायां हससन्धिः ॥ ६ ॥

# अथ विसर्गसन्धिः ॥ ६ ॥

**विसर्जनीयस्य सः** ॥ खसे परे ॥ कस्तनोति (ख) ॥ १

---

( क ) कुप्वोः किम् , कश्चारः । विसर्जनीयस्य किम् , नृसिंहं पश्य । कटं करोतीति ।

इति चक्रधराख्यटिप्पण्यां हससन्धिः ।

( ख ) विसर्जनीयस्येति । आसन्धिसमाप्तीदं षष्ठ्यन्तमधिक्रियते । अब्परस्य विसर्जनीयस्योत्व-रेफलोपश्चादिविशेषविधेः परिशेषत्वात् खसपरत्वोक्तिः । विसर्गस्येति विहाय यद्विसर्जनीयस्येत्युक्तं तत्प-

( सु० ) **विसर्जनीयस्य सः** ॥ विसर्गस्य सकारः स्यात् खसे परे ॥ कस्तनोतीत्यत्र विसर्गस्य सत्त्वे कृते तस्य पुनर्विसर्गादेशो न असिद्धत्वाद्विधिसामर्थ्याद्वा ॥ १ ॥

( त० ) **विसर्जनीयस्य स इति** ॥ आसंधिसमासीदं षष्ठ्यन्तमधिक्रियते । परिशेषात् खसे एवास्य प्रवृत्तिः । अन्यत्र तूत्तरसूत्रैस्तत्र तत्र बाधः ॥ विसर्गस्य स इति नोक्तम् । पर्यायशब्दानां गौरवलाघवयोरनपेक्षणात् ॥ यत्तु प्राचामुपहासार्थं विसर्जनीयादिग्रहणं प्राञ्चो लाघवं न जानन्तीत्युक्तम् । तत्रेदमवधेयम् । प्राञ्चोऽत्र के विवरणकर्तारः सूत्रकर्तारो वा । आद्ये सूत्रस्थगौरवेण तेषामुपहासासंभवात् । अन्ते सरस्वत्याः सूत्रकर्तृत्वेन तदुपहासे प्रत्यवायसंभवात् । 'न निन्देन्मनसा वाचा सर्वव्याधिपराङ्मुखः ।' इति निषेधदर्शनात् । अः सः इति सूत्रणीये यद्विसर्जनीयस्येत्युक्तं तत्संज्ञापूर्वकत्वेन सस्यानित्यताबोधनार्थम् । तेन कः साधुरित्यादि सिद्धम् । ननु कुप्वोः ≍क≍ पावित्यस्य वैकल्पिकत्वात् पक्षे सत्त्वं कुतो नेति चेन्न । शेषाः कार्ये' इति निर्देशेन ≍ क ≍ पाभ्यां मुक्ते पक्षे सत्त्वप्रवृत्त्यभावस्य ज्ञापनात् । अत्र वेत्यनुवृत्तस्य व्यवस्थितविभाषाश्रयणात् शसे वा सकारः ॥ १ ॥

**( शसपरे खसे विसर्जनीयस्य विसर्ग एव )** कः त्सरुः । घनाघनः क्षोभणः(क) ॥ २ ॥

( सु० ) **शसपरे खसे विसर्जनीयस्य विसर्ग एव** ॥ शसः परो यस्मात्स शसपरस्तस्मिन् शसपरे खसे विसर्जनीयस्य विर्जनीय एव भवति न त्वन्यत् ॥ यदि तु शसखरे खसे नेत्येवोच्येत तर्हि प्रकृते सत्त्वे निषिद्धेऽपि ≍क≍ पौ स्याताम् । विसर्गवचनात्तु विकारमात्रमपि निषिध्यते । तेन वासः क्षौमम् अद्भिः प्सातमित्यादौ विसर्ग एव ।२।

( त० ) **शसपरे खशे** इत्यादि ॥ शसः परो यस्मात् सः शसपरः तस्मिन् ॥२॥

**( शसे वा )** कश्शूरः-कः शूरः । कष्षण्ढः-कः षण्ढः । कस्साधुः-कः साधुः(ख)॥ ३ ॥

( सु० ) **शसे वा** ॥ षसे परे विसर्जनीयस्य विसर्जनीय एव वा भवति ॥ पक्षे सः । कः शूरः । कस् शूरः । श्चुत्वं कश्शूरः । कः षण्ढः । कश् षण्ढः । ष्टुत्वं कष्षण्ढः॥३॥

**(खपपरे शसे विसर्गस्य लोपो वा )** हरिस्फुरति-हरिः स्फुरति-हरिस्स्फुरति । कुप्वोः ≍ क ≍ पौ वा । कः करोति-क ≍ करोति । क ≍ पचति-कः पचति ॥ ४ ॥

( सु० ) **खपपरे शसे विसर्गस्य लोपो वा** ॥ खपः परो यस्मात्सः खपपरः तस्मिन्खपपरे शसे विसर्जनीयस्य लोपो वा भवति ॥ वाग्रहणात्पक्षे शसे वेति विसर्गो सत्त्वे

---

र्यायशब्दानां गौरवलाघवचर्चा नाद्रियते इति ज्ञापनार्थम् । द्वौ बिन्दू विसर्गः । तदुक्तम्—

शृङ्गवद्बालवत्सस्य कुमारीस्तनयुग्मवत् । नेत्रवत्कृष्णसर्पस्य स विसर्ग इति स्मृतः ॥

( क ) इह यथायथं सत्त्वं जिह्वामूलीयश्च नेति कौमुदी । अयमर्थः-कः त्सरुरित्यत्र सत्त्वं घनाघनः क्षोभण इत्यत्र कुप्वोरिति जिह्वामूलीयश्च नेति । तथाच-सत्त्वस्य कुप्वोरित्यस्य चायमपवाद इत्युक्तं भवति।

(ख) शसेवेति । विसर्जनीयस्य शसषे परे वा विसर्गो भवति इति विवरणस्य प्रा० ग्रा० पु० पाठः ।

च त्रैरूप्यम् । हरिस्फुरति-हरिः स्फुरति-हरिस्स्फुरति ॥ ४ ॥

( त० ) खपरे इति ॥ खपः परो यस्मात्सः खपपरः तस्मिन् । एतत्सर्वं व्यवस्थितविभाषाश्रयणादेव । कुप्वोः ≍क≍प वाविति व्याख्यानं पूर्वोक्तमेव ॥ ४॥

**(वाचस्पत्यादयो निपातात्सिध्यन्ति)** वाचस्पतिः । बृहस्पतिः । तस्करः(क) । कौतस्कुतः । कान्कान्-कांस्कान् । कस्कः । भास्करः । पयस्पाशम् । यशस्कल्पम् । यशस्कम् । यशस्काम्यति । सर्पिष्पाशम् । सर्पिष्कल्पम् । सर्पिष्कम् । सर्पिष्काम्यति । नमस्करोति-नमः करोति । पुरस्करोति । निष्प्रत्यूहम् । आविष्कृतम् । तिरस्कर्ता-तिरःकर्ता । द्विष्करोति-द्विः करोति । त्रिष्करोति-त्रिः करोति । चतुष्करोति-चतुः करोति । चतुष्कपालम् । सर्पिष्करोति-सर्पिः करोति । धनुष्करोति-धनुः करोति । सर्पिष्कुण्डिका । अयस्कारः । अयस्कामः । अयस्कुम्भः । अयस्पात्रम् । अयःसहिता कुशा-अयस्कुशा । अयस्कर्णी । अधस्पदम् । शिरस्पदम् ॥ आकृतिगणोऽयम् ॥ अविहितलक्षणः सकारो वाचस्पत्यादिषु द्रष्टव्यः ॥ ५ ॥

( सु० ) **वाचस्पत्यादयो निपातात्सिध्यन्ति** ॥ सिद्धस्वरूपोच्चारणं निपातस्तस्मादेते शब्दाः सिद्धिं यान्ति ॥ वाचः पतिरित्यत्र षष्ठ्या अलुक् । निपातनाद्विसर्गस्य सत्त्वम् । वाचस्पतिः । तत् चौर्यं करोतीति तकारस्य सत्त्वं निपातनात् । तस्करः ॥ बृहतां पतिरिति । निपातनात् तकारस्य सत्त्वम् । बृहस्पतिः ॥ कुतः कुत आगत इत्यत्र 'त्यतनौ' इत्यनेनाव्ययात्त्यप्प्रत्यये प्राप्ते गणपाठसामर्थ्यादण्प्रत्ययष्टिलोपश्च । निपातनाद्विसर्गस्य जिह्वामूलीयाभावः । कौतस्कुतः ॥ कान्कानिति । अत्र एकः किंशब्दः प्रश्ने । द्वितीयो निन्दार्थे । सागमाभावोऽत्र भिन्नार्थत्वात् । गणे चाम्रेडितस्यैव ग्रहणम् । कान् कुत्सितान् पश्यसीत्यर्थः । कांस्कान् इति । अत्र आम्रेडितत्वात्तु पूर्वनकारस्य सगागमो भवति निपातनात् । कांस्कान् कान् कान् पश्यतीत्यर्थः॥कः क इति कस्कः । जिह्वामूलीयाभावोऽत्र ॥ भासः करोतीति भास्करः जिह्वामूलीयाभावः । कुत्सितं पय इति पयस्पाशम् । कुत्सायामिति पाशः ॥ ईषन्न्यूनं यश इति यशस्कल्पम् । ईषदसमाप्ताविति कल्पः । कुत्सितं यश इति कुत्सितेऽर्थे कः । यशस्कम् ॥ आत्मनो यश इच्छतीति । काम्यच्चेति काम्यप्रत्ययः । यशस्काम्यति इत्यादौ विसर्गस्य जिह्वामूलीयोपध्मानीयाभावो निपातनात ॥ कुत्सितं सर्पिरिति सर्पिष्पाशम् ॥ ईषन्न्यूनं शर्पिरिति सर्पिष्कल्पम् ॥ कुत्सितं सर्पिरिति सर्पिष्कम् ॥ आत्मनः सर्पिरिच्छतीति सर्पिष्काम्यति । इत्यादौ विसर्गस्य षत्वं निपातनात् ॥ नमस्करोति-नमः करोति । इत्यत्र विकल्पेन सकारविसर्गौ निपातनात् । पुरस्करोतीत्यत्र जिह्वामूलीयाभावः ॥ निष्प्रत्यूहम् , आविष्कृतम् , दुष्कृतमित्यादौ विसर्गस्य षत्वं निपातनात् ॥ तिरस्कर्ता-तिरः कर्तेत्यत्र वि-

( क ) तद्बृहतोः कारपत्योश्चोरदेवतयोः सुट् तलोपश्चेति सारस्वतादौ दृश्यते ।

कल्पेन सकारविसर्गौ ॥ द्वौ वारौ करोतीति द्विष्करोति-द्विः करोति ॥ त्रीन् वारान् करोतीति त्रिष्करोति-त्रिः करोति ॥ चतुरो वारान् करोतीति चतुष्करोति-चतुः करोति । द्वित्रिचतुर्भ्यः इति सुः ॥ चतुर्षु कपालेषु संस्कृत इत्यर्थे अण् । द्विगुसमासेऽणो लुक् च । चतुष्कपालः-चतुः कपालः ॥ सर्पिष्करोति-सर्पिः करोति ॥ धनुष्करोति-धनुः करोति । इत्यादौ विकल्पेन विसर्गस्य षत्वविसर्गौ निपातनात् ॥ सर्पिषो घृतस्य कुण्डिकेति सर्पिष्कुण्डिका । नित्यं षत्वमत्र ॥ अयसः कार इत्ययस्कारः ॥ अयसः कामः इत्ययस्कामः ॥ अयसः कुम्भ इत्ययस्कुम्भः ॥ इत्यत्र विसर्गस्य जिह्वामूलीयाभावः ॥ अयसः पात्रमित्ययस्पात्रमित्यत्रोपध्मानीयाभावः ॥ अयः सहिता कुशेत्ययस्कुशा । वेदे औदुम्बरशङ्कुं कुशेति व्यवहरन्ति । अयोविकारे तु कुशीति ॥ अय इव कर्णौ यस्याः सा अयस्कर्णी । नासिकोदरेतीप् । अत्र जिह्वामूलीयाभावः ॥ पदस्याध इत्यधस्पदं शिरसः पदमिति शिरस्पदमित्यत्रोपध्मानीयाभावः ॥ आकृत्या स्वरूपेण गण्यते यः स आकृतिगण इति ॥५॥

(त०) अत्रापि वेत्यस्य व्यवस्थितत्वात् अनेकार्थलाभ इत्याशयेनाह-**वाचस्पत्यादय इति** । बृहस्पतिरित्यत्र तकारस्य सकारः, तस्कर इत्यत्र दकारस्य ॥ एवमन्येऽपि॥५॥

**रोऽरात्रिषु** ॥ अह्नो विसर्जनीयस्य पदान्ते रो भवति न तु रात्र्यादिषु ॥ अहर्गणः । अहरहः । अरात्रिषु किम् । गतमह्नो रात्रिरेषा । अहोरात्रः । अहोरूपम् । अहोरथन्तरम् (क) ॥ ६ ॥

( सु० ) **रोऽरात्रिषु** ॥ पदान्तेऽहन्शब्दस्य विसर्गस्य रः स्यात् रात्र्यादिवर्जितेषु परतः ॥ अरात्रिष्विति बहुवचनमादिशब्दार्थे । तेन रात्रिरात्ररूपरथन्तराणि रात्र्यादयः ॥ अह्नां गण इत्यहर्गणः । अहः इति नस्य रः ॥ अहः अहः इत्यहरहः । वीप्सायां द्वित्वम् ॥ अहश्च रात्रिश्चानयोः समाहार इत्यहोरात्रः । समासान्तोऽप्रत्ययोऽत्र । 'रात्राह्नाहान्ताः' इति पुंस्त्वम् । अह्नो रात्रिरेषा । इदमह एषा रात्रिरस्तीत्यर्थः । प्रशस्तमह

---

( क ) **रोऽरात्रिषु** । अत्राह इत्यतोऽह इत्यनुवर्त्तते । पदान्ते चेत्यतः पदान्ते इति चेति मत्वाह—अह्नो विसर्जनीयस्य पदान्ते इति । ननु यदि पदान्त इत्यनुवर्त्तते तर्हि अवसानेऽहः इत्यत्रापि प्राप्नोति । न च पुनः रेफस्य विसर्गादेशो भविष्यतीति वाच्यम् । एवमहर्गण इत्यादावपि विसर्गादेशे रेफविधानं व्यर्थं स्यात् । अह इति सत्वेनैव सिद्धत्वात् । नाप्येतत्कृतरेफविसर्गस्य विध्यन्तरबाधनार्थत्वमिति वाच्यम् । यं विधिं प्रति उपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते इति विसर्गादेशं प्रति उपसर्गोऽनर्थक इति तमेव बाधते सत्वादीनां पुनर्निमित्तमेवेति बाधते । अथवा—

यद्येवानिष्टं स्यात्तर्हि विसर्गप्रकरणान्ते नाह्नो रात्रिष्विस्येव ब्रूयात् । तस्माद्रेफविधानसामर्थ्याच्छ्रवणमेवेति प्रसज्जेदिति चेदुच्यते । इहारात्रिष्विति पर्य्युदासो नञ् । यदुक्तम्—

प्राधान्यन्तु विधेर्यत्र प्रतिषेधे प्रधानता, पर्य्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् । इति ॥

ततश्च नञिव प्रयुक्तमन्यसदृशार्थे तथा ह्यर्थगतिरिति न्यायेन रात्र्यादिसदृशे पदान्ते परे रो भवतीति नोक्तदोषः । तत्रापि लाघवार्थमरात्राविति वाच्ये बहुवचननिर्देशो रूपरथन्तरयोरपि ग्रहणायेति सर्वं मत्वाह—रात्र्यादिष्विति । रात्र्यादिवर्जितेषु पदान्तरेषु परत इत्यर्थः । ननु चैवमपि हे दीर्घाह्नो ग्रीष्मेत्यत्रापि स्यात् । मैवम् । गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्यय इति न भविष्यति । अह्नो बहुव्रीहौ गुणीभूतत्वात् । सत्वमप्येवं न स्यादिति चेन्मैवम् । अयं हि न्यायः पदकार्य्येष्वेव न नामकार्येषु । सत्वं च नामकार्य्यमिति । एतत्त्वोक्तमोदिति सूत्रे कैयटेन । एवं गां वाहीकमानयेति पूर्वं क्रियाभिसम्बन्धापेक्षया विभक्त्युत्पन्नायां वाक्यीयात्तु न्यायात्सामानाधिकरण्याद्गौणार्थप्रादुर्भावो भवतीति पदकार्य्येष्वेवायं न्यायो न प्रातिपादिककार्य्येष्विति ।

इत्यहोरूपम् , प्रशंसायामिति रूपः । अहोरूपम् । गुणवाचको रूपशब्दोऽप्यत्र ॥ रथन्तरं सामवेदसंज्ञा । अहोरथन्तरम् । एषु विसर्गस्य उत्वं तत ओत्वम् ॥ पदान्ते किम् । अहोभ्याम् ॥

( त० ) रोऽरात्रिष्विति ॥ अरात्रिष्विति बहुवचनात् रात्र्यादिर्गृह्यते ॥ अहोरात्र इति ॥ एकदेशविकृतस्यानन्यवत्त्वाद्रात्रशब्दस्यापि ग्रहणम् (क) । रात्राह्नाहान्ताः पुंसि इति नियमात्पुंस्त्वम् । गतमहो रात्रिरेषेति मुख्यः प्रयोगः ॥ ६ ॥

**अतोऽत्युः** । अकारात्परस्य विसर्जनीयस्योकारो भवत्यति परे । कोऽर्थः (ख) ।७।

( सु० ) अतोऽत्युः ॥ आदवे लोपश् इत्यस्यापवादोऽयम् । अतः परस्य विसर्गस्य उत्वं स्यादिति ॥ अत इति किम् अग्निरत्र । तपरः किम् । देवा अत्र ॥ सुस्रोतः३ अत्र । दूराद्धाने इति प्लुतः ॥ अतीति किम् । देव इह ॥ तपरः किम् । देव आगतः ॥ तिष्ठतु पय अ३ग्निदत्तेत्यत्र गुरोरनृत इति प्लुतः ॥ विसर्गस्य उत्वे ओत्वे च एङोतोऽतः' इत्यल्लोपः । कोऽर्थः ॥ ७ ॥

( त० ) अतोऽत्युरिति ॥ अत इति किम् । हरिरत्र ॥ तपरः किम् । देवा अत्र ॥ अतीति तपरः किम् । देव आगतः ॥ विसर्गस्येति किम् । राममनु । 'आदवे लोपश्' इत्यस्यापवादोऽयम् ॥ ७ ॥

**हवे** ॥ अकारात्परस्य विसर्जनीयस्योकारो भवति हवे परे । देवो याति । मनोरथः ८

( सु० ) हवे ॥ अत इत्यनुवर्तते । अतःपरस्य विसर्गस्य उत्वं स्यात् हवे 'आदवे लोपस् इत्यस्यापवादोऽयम् ॥ अतः किम् । वायुर्वन्द्यः ॥ तपरः किम् । वेधा वन्द्यः ॥ हवे किम् । देवः पश्यति ॥ ८ ॥

( त० ) हवे इति ॥ लोपशोऽपवादः ॥ अतः किम् । भानुर्वन्द्यः । तपरः किम् । वेधा नम्यः । हवे किम् । रामः कर्ता ॥ अत्र लघुभाष्यम्-अतोऽत्युवे उरित्येकयोगो न कृतोऽस्यानित्यत्वज्ञापनाय । तेन उषर्बुध इत्यादि सिद्धम् । अत्रेदमवधेयम् । 'कुत्वो ᳲ क ᳲपौ वा' इत्यस्य व्यवस्थितत्वाश्रयणेनैव वाचस्पत्यादीनां सिद्धत्वेनोषर्बुध इत्यत्रापि रत्वसिद्धेरनित्यत्वज्ञापनस्यानुचितत्वात् । किञ्च ज्ञापितेऽप्यस्यानित्यत्वे 'आदवे लोपश्' इत्यस्य प्राप्तौ रेफार्थयत्नस्य त्वयाऽप्यभ्युपगमात् ॥ ८ ॥

**आदवे लोपश्** ॥ अवर्णात्परस्य विसर्जनीयस्य लोपश् भवत्यव परे (ग) ॥ देवा अत्र । वाता वान्ति । देवा इह ॥ ९ ॥

---

( क ) केचित्तु । रात्र्यादिगणे रात्रशब्दं पठन्ति । तेन 'अहो रात्र' इति सिद्धम् ।

( ख ) अत इति । यद्यपि कः अर्थ इत्यादावादवे लोपश् इति लोपशपि प्राप्नोति, तथापि 'सावकाशनिरवकाशयोर्निरवकाशो विधिर्बलवान्' इत्युक्तविधेर्निरवकाशत्वादुत्वम् । उत्वे चान्तरङ्गत्वादोकारैकादेशे पश्चादेङोतोऽत इत्यलोपः ।

(ग) आदिति । अत्राकारोऽक्षरसमाम्नाये पठितत्वाद्दीर्घोच्चारणसामर्थ्यात्प्रयत्नाधिक्याद्वा न भेदग्राहक इति तस्य तपरत्वानुपपत्तेरकारस्य पञ्चम्यन्तस्येदं ग्रहणमित्यभिप्रेत्याह—अवर्णादिति । अत्र माधवः—

आदिति किम् । न चेकारादिनिवृत्त्यर्थमिति वाच्यम् । नामिनो र इति रेफेण बाधितत्वात् । नापि व्यञ्जननिवृत्त्यर्थम् । असम्भवाद् व्यञ्जनेभ्यः परस्य विसर्गस्य । एवं तर्हि अतोऽत्युरित्यतोऽनुवृत्तस्य तपराकारस्य निवृत्तेः स्पष्टीकरणार्थमित्यभिप्रेत्याकारमुदाहरति—देवा अत्रेत्यादि । अत इत्यनुवृत्तौ दीर्घस्या-

( सु० ) आद्बे लोपश् ॥ आदिति पञ्चम्यन्तम् । न तु तपरत्वम् । दिव औ इत्यादिनिर्देशात् ॥ अबे किम् । देवाः सन्ति ॥ ९ ॥

( त० ) आद्बे लोपशिति ॥ नन्वाद्ग्रहणं किमर्थम् । न चेकारादिनिवृत्त्यर्थं 'नामिनो रः' इति रेफेण बाधितत्वात् । न च हसव्यावृत्त्यर्थं हसाद्विसर्गस्यासम्भवात् । तस्मादुत्तरार्थमेव॥ नन्वबग्रहणं किमर्थम् । न च हबग्रहणाननुवृत्त्यर्थम् । व आह पूर्वं उपधे त्यादिनिर्देशैस्तज्ज्ञापनात् ॥ नाप्युत्तरार्थम् । असंदेहार्थं लाघवार्थं तत्रैवाकरिष्यत् ॥ नाप्य वसानबाधनार्थं ज्ञापकादेव तत्राप्यस्याप्रवृत्तेः ॥ तथा हि । यत् आप इति सिलोपं शास्ति तज्ज्ञापयति नानेनावसाने लोपश् भवतीति । अन्यथा सेर्विसर्गलोपशोः कृतयोर्गङ्गेत्यादिसिद्धौ किं सिलोपविधानेन । ननु लोपशि सति गङ्गाऽत्रेत्यादौ संधिर्न स्यादतो लोपविधानं न ज्ञापकमिति चेन्न । यस्मिन् स्वरे परे लोपश् तेन सह संधिर्नेति ज्ञेयम् । वस्तुतोऽवसानेऽतिप्रसङ्गवारणार्थमेवाब्ग्रहणम् ॥ ननु 'आद्योऽबे' इत्येव सूत्र्यतां स्वरे यत्वं वेति तु न कर्तव्यम् । देव इहेत्यादौ यकारे 'य्वोर्लोपश् वा' इत्यनेन लोपशि कृते रूपसिद्धेः । न च तत्रायाद्यनुवर्तनादस्य कथं लोपश् इति वाच्यम् ॥ यत्पूर्वमवर्णं गृहीत्वा अय् इत्यादिरूपसम्भवात् । लक्षणप्रतिपदोक्तयोः इति परिभाषायास्तु अनित्यत्वात् । उच्यते । भोस इत्यत्रापि यो वेत्यनुवर्तेत । ततश्च भो इहेत्यादि न सिद्ध्येत् ॥ ९ ॥

( स्वरे यत्वं वा ) देवायिह ॥ १० ॥

( सु० ) स्वरे यत्वं वा ॥ लोपशो विकल्पेनापवादोऽयम् । अवर्णात्परस्य विसर्गस्य यत्वं वा स्यात् ॥ पक्षे लोपश् । स्वरे किम् । रामश्चतुरः ॥ १० ॥

( त० ) स्वरे यत्वं वेति ॥ अवर्णात्परस्य विसर्जनीयस्य स्वरे यत्वं वेत्यर्थः ॥ १० ॥

**भोसः** ॥ भोस् भगोस् अघोस् इत्येतस्य विसर्जनीयस्य लोपश् भवत्येव परे ॥ भो हरे । भगो नमस्ते । अघो याहि ॥ ११ ॥

**स्वरे यत्वं वा** ॥ भोस्–भगोस्–अघोस् विसर्गस्य स्वरे यत्वं वा भवति ॥ भोयेहि । भगोयेहि । अघोयगच्छत् ॥ १२ ॥

( सु० ) भोसः ॥ भोस् भगोस् अघोस् इति सकारान्ताः निपाताः सन्ति । तत्राद्यन्ताभ्यां प्रत्याहारो 'भोस' इति गृहीतः । भोसः इति पष्ठ्यन्तम् । भोस् भगोस् अघोस्

---

ग्रहणादत्र न स्यात् । अत्रोभयत्राप्यनेन विसर्गलोपशि आद्यं लोपशीति न सवर्णे दीर्घः । ननु चेदमबग्रहणं पूर्वसूत्रतो हबग्रहणाननुवृत्त्यर्थं खसे वा लोपशोऽप्रसक्तार्थमवसाने वोत्तरार्थं वा । नाद्यः । भुव आह इति निर्देशात्तन्निवृत्तेः । नापि द्वितीयः । सत्वस्य निर्विषयत्वप्रसङ्गात् । न च तृतीयः । ज्ञापकात् । तथा हि । यदयमपि इयाबन्तात्सिलोपः शास्ति तज्ज्ञापयत्याचार्यो नावसाने विसर्गलोपश् प्रवर्त्तते इति । अन्यथा तत्रापि सेर्विसर्गलोपशोः कृतयोः गङ्गेत्यादिसिद्धेः सिलोपविधानं व्यर्थं स्यात् । ननु यदा लोपश् स्यात् तदा गङ्गात्रेत्यादौ लोपशि पुनर्न सन्धिरिति सन्धिर्न स्यात् । लोपे तु सन्धिर्भवत्येवेति सन्ध्यर्थत्वाल्लोपस्याज्ञापकत्वमिति तृतीयः पक्षः प्रमाणमिति चेन्न, सन्धिप्रकरणादेवाऽवसानेऽप्रवृत्तेः । तुर्य्योऽपि न यतोऽसंदेहार्थं लाघवार्थं चोत्तरत्रैवाकरिष्यत् । एवं तर्हि द्वितीयपक्ष इव प्रमाणम् । ।ननु चोक्तमनवकाशत्वात्सत्वं बाधकं भविष्यतीति । मैवम् । अत्र ह्यबग्रहणे सति तत्र परिशेष्यात् खस इति लभ्यते । अन्यथा बहुतरावकाशं तत्स्यादिति खसव्यावृत्त्यर्थमबग्रहणं संस्थितम् ।

एषां विसर्गस्य लोपश् स्यादवे ॥ अवे किम् । भोस्तपस्विनः ॥ स्वरे यत्वं वा ॥ भोस्-भगोस्अघोसां विसर्गस्य यत्वं वा भवति स्वरे । पक्षे लोपश् ॥ ११-१२ ॥

( त० ) भोस इति ॥ षष्ठ्येषा न तु पञ्चमी । भोसशब्दस्य सान्तत्वेन ततः परस्य विसर्गस्याभावादित्यभिप्रेत्याह—भोस्भगोस्अघोसूइत्येतस्येति ॥ भोस्भगोस्-अघोस्इत्येतस्मात्परस्येति तु प्राचः प्रमाद एव । भोस इत्यत्र निपातभवच्छब्दयोरपि सामान्येनानुकरणम् । तथा च भो देव भो लक्ष्मि, भो विद्वन् इत्यादि सिद्धम् । न च भोस इत्यत्र भोस्मात्रग्रहणात् भगो इह अघो याहीत्यादावव्याप्तमिति वाच्यम् । प्रत्याहाराश्रयणेनाव्याप्तिवारणात् ॥ एवं च विभोरिदमित्यादावतिप्रसङ्गवारणं च सम्भवति । तस्य प्रत्याहारेऽनन्तर्भावात् ॥ अत्र लघुभाष्यम् । ननु अभोसोऽवे लोपश्' इत्येकयोग एव लाघवाय कर्तुमुचितः । उच्यते । नञ् समासोऽत्र प्रतीयेत । भोसव्यतिरिक्ताच्छब्दात्परस्येति । अथैतद्दोषवारणाय अभोसेरवे लोपशिति सूत्रणीयम् । तदर्द्धमात्रालाघवेऽपि वैरूप्यं दोषः । भोसोऽवयवोऽवर्णात्पर इति सूत्रभेदे तु नान्यं दोष इति सूत्रभेद एवाश्रितः। अत्रेदमवधेयम् । आद्भोसोऽवे लोपशिति सूत्रणीयम् । तथा च—नञ्समासभ्रमवैरूप्यदोषयोरसम्भव एव । आदित्यस्य पञ्चम्यन्तत्वात् । भोस इत्यस्य षष्ठ्यन्तत्वाच्च भोसोऽवयवोऽवर्णात्तु पर इत्यस्यार्थस्य सुलभत्वात् । एवं च स्वरे यत्वं वेत्यस्याद्भिरुक्तिश्चेति महल्लाघवम् १२

**नामिनो रः** । नामिनः परस्य विसर्जनीयस्य रेफो भवत्यवे परे ॥ अग्निरत्र । पटुर्वक्ता (क) ॥ १३ ॥

**उषसो बुधे** । उषसो विसर्जनीयस्य रेफो भवति बुधे परे ॥ उषः बुधः—उषर्बुधः ॥ १४ ॥

( सु० ) **नामिनो रः** ॥ नामिन इति किम् । रामो वन्द्यः ! । अवे किम् । अग्निः करोति ॥ १३-१४ ॥

( त० ) **नामिनो रः** इति ॥ ननु नामिन इति किमर्थम् । अवर्णाल्लोपशादिविधानेन हसाद्विसर्गासंभवेन च तस्यैव परिशेषात् । यत्तु नामिन इति योगविभागे आदवे लोपशित्यतोऽवे लोपशिति चानुवर्तते । क्वचिन्नामिनः परस्य विसर्गस्यावे लोपश् । तेन 'सेमां भूम्याददे' इत्यादि सिद्धमित्याहुः (ख), तन्न । समामित्यादेश्छान्दसत्वात् । छन्दसि दृष्टानुविधिरित्यस्योक्तत्वात् । 'सेमां भूम्याददे' इत्यत्रापि भूमिशब्दस्य कृतन्तत्वेन कृदिकारादिति ईपि कृते 'हसेपः' इति सिलोपे इष्टसिद्धेः । उच्यते । 'नामिनोरः' इत्यत्र

(क) **नामिन इति** । अत्र प्रसादः—यद्यपि हसेभ्यो विसर्जनीयस्यासम्भवादवर्णात्परस्य चोत्वलोपशोः स्मृतत्वात् परिशेषादेव नामिन इति सिद्धौ नाम्युपादानमपार्थकम् । तथापि रेफप्रकृतिकस्य खपे वेत्यत्र नामिन एव यथा स्यान्न प्रातः प्रातरित्यादावित्याद्यर्थम् । यत्तु नामिग्रहणात् अत्र प्रथमैकवचनान्तत्वमुत्तरत्र षष्ठ्येकवचनान्तत्वमवसीयत इति । तदसत् । तदुपादानेऽपि सन्देहसत्त्वाद्व्याख्यानतो विशेषप्रतिपत्तेश्च तुल्यत्वात् प्रातः प्रातरित्यादौ कल्पनान्तरापाताच्च ।

( ख ) **आहुरिति** । अनुभूतिस्वरूपाचार्यादय इति शेषः । तथा च सारस्वते सूत्रम्—

**क्वचिन्नामिनोऽवे लोपश्** । नामिनः परस्य विसर्जनीयस्य क्वचिल्लोपश् भवत्यवे परे । भूमिः—आददे=भूम्याददे इति ।

योगविभागार्थं नामिग्रहणम् । तथा च वाक्यभेदेन व्याख्यानम् । नामिन इत्येको योगः । तत्र खपे वेति चानुवर्त्य र इति षष्ठ्यन्तं च कृत्वा वाक्यभेदेन व्याख्येयम् ॥ १३-१४ ॥

**( रेफप्रकृतिकस्य खपे वा रेफः )** गीः पतिः गीर्पतिः गी ≍ पतिः (क) ॥ १५ ॥

( सु० ) **रेफप्रकृतिकस्य खपे वा रेफः** ॥ रेफः प्रकृतिर्मूलकारणं यस्य स रेफप्रकृतिकस्तस्य रेफप्रकृतिकस्य विसर्गस्य रकारो वा भवति खपे परे ॥ वाग्रहणात् पक्षे विसर्गोपध्मानीयौ ॥ १५ ॥

( त० ) **रेफप्रकृतिकस्य खपे वेति** ॥ रेफः प्रकृतिर्यस्य सः तथा तस्य । वस्तुतस्तु रेफप्रकृतिकस्येति नोचितं वक्तुम् । र इति सूत्रार्थेनैव तद्गतार्थम् ॥ १५ ॥

**( अहन् )** अहर्पतिः–अहः पतिः–अह ≍ पतिः ॥ १६ ॥

( सु० ) **अहन्** ॥ अहन्शब्दस्य विसर्गस्य रो भवति ॥ रोऽरात्रिष्विति रत्वे विसर्गे च कृतेऽयं विधिः प्रवर्तते । अहर्पतिः–अहः पतिः–अह≍पतिः ॥ १६ ॥

**रः** ॥ रेफसंबन्धिनो विसर्जनीयस्य रेफो भवत्यबे परे ॥ प्रातरत्र । अन्तर्गतः (ख) ॥ १७ ॥

( सु० ) **रः** ॥ षष्ठ्यन्तमिदम् । रेफस्य स्थाने विहितो यो विसर्जनीयस्तस्य रो भवत्यबे परे ॥ अबे किम् । प्रातःकालः । रेफप्रकृतिकस्येति किम् । रामो नम्यः ॥ १७ ॥

( त० ) **र इति** ॥ षष्ठ्येषा न तु पञ्चमी ॥ १७ ॥

**रि लोपो दीर्घश्च** ॥ रेफस्य रेफे परे लोपो भवति पूर्वस्य च दीर्घः ॥ पुना रमते । हरी राजते । भानू रम्यः । शंभू राजते (ग) ॥ १८ ॥

( सु० ) **रि लोपो दीर्घश्च** ॥ र इति षष्ठ्यन्तमनुवर्तते । रि इति सप्तम्यन्तम् । रो लोपः स्याद्रेफे परे ॥ चकारो विधेययोर्लोपदीर्घयोः समुच्चयार्थः । तेन पूर्वस्वरस्य दीर्घश्च ॥ रीति किम् । प्रातर्वायुः ॥ र इति किम् , मनोरथः ॥ १८ ॥

( त० ) **रि लोपो दीर्घश्चेति** ॥ रि इति सप्तमी । अत्र र इति षष्ठ्यन्तमनुवर्तते इत्यभिप्रेत्याह–**रेफस्येति** ॥ रीति सप्तमीनिर्देशाल्लोपनिमित्ताद्रेफात्पूर्वस्येत्याशयेनाह–**पूर्वस्येति** ॥ चकारो विधेययोर्लोपदीर्घयोः समुच्चयस्य द्योतकः ॥ १८ ॥

---

(क) **रेफेति** । रेफप्रकृतिकस्येत्यत्र वाशब्दस्य व्यवस्थितात्व्यवस्थितार्थत्वेन चिर्कीः करोतीत्यादावनतिप्रसङ्गः ।

( ख ) **रः** । अत्र नामिनो र इत्यतो र इति प्रथमान्तानुवृत्तौ पुना र इति निर्देशात् षष्ठ्यर्थं विज्ञायति इत्यत आह–**रेफसम्बन्धिन इति** । रेफस्थाने आदेशसम्बन्धेन विहितस्येत्यर्थः । तत्रापि पूर्वेणैव सिद्धत्वादनन्यर्थोऽयमारम्भ इति मत्वोदाहरति–**प्रातरत्रेत्यादि** । रः किम् । पयोत्र । 'रः' इत्यत्र वेत्यनुवर्त्तते, उत्तरसूत्राच्चेति च । तत्राऽबे चेति सम्बन्धे चादन्यत्रापि लब्धम् । तत्रापि चेति सम्बन्धः । ततश्च रेफप्रकृतिकस्य खपे वेति वार्त्तिकं गतार्थम् । वार्तिके रेफकृतिकस्येति व्यर्थं र इत्यनेनैव गतार्थत्वात् । खपे वेति विवक्षितं तदप्युक्तयुक्त्या गतार्थमिति रघुनाथः ।

( ग ) **रिलोप इति** । रीति सप्तमीनिर्देशो लोपनिमित्तात् रेफात्पूर्वस्य स्वरस्य दीर्घार्थः ऊ रसे इति निर्देशोऽप्यत्रानुकूलः ।

**सैषाद्धसे** ॥ सशब्दादेषशब्दाच्च परस्य विसर्जनीयस्य लोपो भवति हसे परे ॥ स चरति । एष हसति(क) ॥ १९ ॥

( सु० ) **सैषाद्धसे** ॥ सश्च एषश्च तयोः समाहारः सैषं तस्मात् । अनञ्समासेऽककारात्सैषात् परस्य विसर्गस्य लोपः स्यात् । हसे परे । स इति एष इति च कृतात्वसत्वस्य तच्छब्दस्य एतच्छब्दस्य चानुकरणम्(ख) । अनुकार्यानुकरणयोर्भेदेऽर्थवत्त्वाद्विभक्त्युत्पत्तौ सत्यां द्वन्द्वे विभक्तिलोपे च कृते नामत्वात् ङसि परतः स्मटोऽभावः । द्वन्द्वे सर्वादीनां न सर्वकार्यमित्युक्तत्वात् ॥ अककारात् ॥ किम् । एषको रुद्रः ॥ अनञ्समासे किम् असः शिवः ॥ हसे किम् । एषोऽत्र ॥ १९ ॥

( त० ) **सैषाद्धसे** इति । सश्च एषश्च तयोः समाहारः सैषं तस्मात् । स इति तच्छब्दस्य कृतात्वसत्वस्यानुकरणम् । एष इत्येतच्छब्दस्य । अनुकार्यानुकरणयोर्भेदादर्थवत्त्वम् । स्मटोऽभावो द्वन्द्वे सर्वादीनां सर्वकार्याभावज्ञापकः । स धातुरित्यादिज्ञापकात् तच्छब्दस्यैवानुकरणम् । तत्साहचर्यादेषशब्दोऽप्येतच्छब्दस्यैव विकृतनिर्देशात्प्रथमान्तादन्यत्र न । असः शिवः इत्यादौ तु संज्ञापूर्वको विधिरनित्य इत्यनित्यत्वान्न ॥ १९ ॥

**( सशब्दाद्विसर्गस्य लोपः स्वरे लोप एव पादपूरणं चेत् )**

सैष दाशरथी रामः सैष राजा युधिष्ठिरः ।
सैष कर्णो महात्यागी सैष भीमो महाबलः ॥ २० ॥

इति विसर्गसंधिः ॥ ६ ॥

( सु० ) **सशब्दाद्विसर्गस्य लोपः स्वरे लोप एव पादपूरणं चेत्** ॥ स इति शब्दस्य विसर्गस्य लोपःस्यात् स्वरे परे । चेद्यदि लोपे सत्येव पादः पूर्येत ॥ पादः श्लोकचतुर्थांश इति ॥ पादपूरणमिति किम् । स एवमुक्त्वा ॥ लोप एवेत्यवधारणात् अन्यथा पादपूरणे लोपो न । 'सोऽहमाजन्मशुद्धानाम्' इति(ग) ॥ स एष रामोऽस्ति । कीदृशः । दशरथस्यापत्यं दाशरथिः । अत इञनृषेरितीञ् ॥ स एष युधिष्ठिरः । कीदृशः । राजते इति राजा ॥ स एष कर्णः कीदृशः । महांश्चासौ त्यागश्च महात्यागः । महात्यागोऽस्ति यस्य स महात्यागी । 'मान्तोपधाद्वत्विनौ' इतीन् । स एषः भीमः । कीदृशः । महद् बलं यस्य स महाबलः । अइकौ चेत्यप्रत्ययः॥२०॥ इति सुबोधिन्यां विसर्गसंधिः॥६॥

( त० ) रि लोपो दीर्घश्चेति सूत्रे लोपशोऽनुवर्तनात् रि लोपो दीर्घश्चेति लोपग्रहणमुत्तरार्थमित्याशयेनाह—**सशब्दाद्विसर्गस्य लोपः स्वरे लोप एव पादपूरणं चे-**

---

( क ) **सैषादिति** । स च एषः च सैषं तस्मात् । अत्र यद्यपि तदेतदोर्ग्रहणे विभक्तिलोपे निमित्ताभावे नैमित्तिकस्याप्यभावात्तदेतदोर्हसे इति स्यात्, तैरेवैरित्यादावपि लोपप्राप्तिश्च सकारएषशब्दमात्रग्रहणे सो नः पुंसः एषणं एट् तस्य एषः इत्यादावपि लोपप्रसङ्गस्तथापि किलातपरसः कृतस्येत्यादिनिर्देशाज्ज्ञापकात्तद् एव सोऽत्र तत्साहचर्याच्चैषोऽप्येतद् इति विज्ञायते । एषको रुद्र इत्यादावेतच्छब्दपरत्वाभावान्न लोपः । वानुवृत्तेरसः शिव इत्यादौ नञ्समासेऽपि न । इति **वासुदेवः** । संज्ञापूर्वकविधेरनित्यत्वादसः शिवः एषकोरुद्र इत्यादौ न । इति केचित् । ( ख ) तद्भिन्नत्वे सति तत्सदृशकरणम् ।

( ग ) श्लोकोऽयं कालिदासस्य रघुवंशे, सो यथा—
सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम् । आसमुद्रक्षितीशानामानाकरथवर्त्मनाम् । ( कुलकम् ) ।

दिति ॥ तथा च 'सैष दाशरथी रामः' इत्यादौ लोपे जाते संधिः सिद्ध्यति । लोपशि तु न स्यात् । लोप एवेत्यवधारणादन्यथापि पादपूरणे लोपो न । तेन 'सोऽहमाजन्मशुद्धानाम्' इत्यादि(क) सिद्धम् ॥ २० ॥

श्रीविद्यानगरस्थायी लोकेशकरसंज्ञकः। विसर्गसन्धेः कृतवान् व्याख्यां भाष्यानुसारिणीम् (ख)॥

इति तत्त्वदीपिकायां विसर्गसंधिः ॥ ६ ॥

---

# अथ स्वरान्तपुँल्लिङ्गाः ॥ ७ ॥

**( अविभक्ति नाम )** विभक्तिरहितं धातुवर्जितं चार्थवच्छब्दरूपं नामोच्यते(ग) ॥ १ ॥

**( सु० ) अविभक्ति नाम** ॥ विभक्तेरन्यदित्यविभक्ति । अन्यच्छब्देन शब्दरूपं विशेष्यं गृह्यते । तत् क्लीबम् । तस्य विशेषणमिदम् । सूत्रे विभक्तिशब्देन तन्त्रादिना विभक्तिः विभक्त्यन्तं चेत्युभयमुच्यते । विभक्तिशब्देन सह नञ्तत्पुरुषः । नञ् तु द्विधा । तथा हि "द्वौ नञौ च समाख्यातौ पर्युदासप्रसज्यकौ । पर्युदासः सदृग्ग्राही प्रसज्यस्तु निषेधकृत् ॥ १ ॥ प्राधान्यं तु विधेर्यत्र प्रतिषेधेऽप्रधानता । पर्युदासः स विज्ञेयो यत्रोत्तर-

(क) सम्पूर्णश्लोकस्तु प्राक् द्रष्टव्यः ।　　(ख) क्वचिदनुगामिनीमिति पाठः ।

इति चक्रधराख्यटिप्पण्यां सन्धिप्रकरणं समाप्तम् ।

(ग) अथ शब्दाः द्विविधाः । स्वरान्ताः हसान्ताश्च । ते पुनस्त्रिविधाः । पुंलिङ्गाः स्त्रीलिङ्गाः नपुंसकलिङ्गाश्च । तत्र प्राथम्यादुपजीव्यप्रक्रियात्वाच्च अकारान्तादिक्रमेणादौ स्वरान्तान् पुंलिङ्गान् प्रतिपादयितुमाह—**अथ स्वरान्तपुंलिङ्गा इति** । अथेति संधिप्रकरणकथनानन्तरम् । **अविभक्तीति** । ननु अविभक्ति' इति कथं विगृह्यम् । नास्ति विभक्तिर्यस्योत्पत्तौ करणत्वेन आहोस्विन्नास्ति विभक्तिर्यस्योत्पत्तौ कार्य्यत्वेन । तत्राद्ये पक्षे गङ्गेत्यादावेव स्यात् । आबाद्युत्पत्तौ विभक्तिनिरपेक्षत्वात् ग्रामप्राप्त इत्यादौ तु तत्सापेक्षत्वान्न स्यात् । न च समासत्वाद्भविष्यतीत्यपि वाच्यम् । एवं हि समासग्रहणस्य वाक्यव्यावृत्तये नियमार्थता भज्येत । तस्मान्नाद्यः पक्षः । नापि द्वितीयः, भवतीत्यादावपि प्रसक्तात् । ततश्च तिवाद्यभिहितैकत्वादिसंख्यायामप्यव्यये इवैकवचनं स्यात् । एवं तर्हि विग्रहः करिष्यते नास्ति विभक्तिर्यस्मिन्नाश्रयत्वेन विभक्त्याश्रयो यन्नास्तीत्यर्थः । इत्यभिप्रेत्याह—**विभक्तिरहितमिति** । अत एव धातूनां व्यावृत्तिः तिवादिविभक्त्यन्तत्वात्तेषाम् । हन्तेरहन्नित्यादावपि भूतपूर्वगत्यानाविभक्तित्वमिति मत्वाह—**धातुवर्जमिति** । धातुसंज्ञां वक्ष्यति । तत्राविभक्तीति नञ् नञिव युक्तन्यायेन विभक्तितुल्यमर्थवदेव संज्ञि प्रत्याययतीत्याह—**अर्थवदिति** । अभिधेयवदित्यर्थः । तेनाभावशशविषाणादीनामप्यभिधेयवत्त्वात्संज्ञा सिद्ध्यति । अभिधेयचातुर्विध्यं तु जातिगुणक्रियाद्रव्यभेदेन प्रपञ्चितम् । महाभाष्यादेरवगन्तव्यम् । **शब्दरूपमिति** । शब्दशास्त्रत्वात्प्रतीतमित्यर्थः । एतदपेक्षमेवाविभक्तीति नपुंसकम् । अविभक्तीति किं काण्डे । अन्यथा(१) अत्र संज्ञायां पुनः संख्याकर्माद्यर्थायोगाद्विभक्तेरनुत्पत्तावपि संज्ञाश्रयो नपुंसकस्य ह्रस्वः स्यात् । धातुवर्जितमिति किम् । अहन् । अत्र हन्तेर्दिवादावटो यदागमस्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्त इत्यनेन धातुग्रहणेन ग्रहणादसंज्ञायां नलोपाभावः । अर्थवत्किम् । धनम् । अत्र नान्तावयवस्यानर्थकत्वादसत्यां संज्ञायां नलोपो न । वर्णानामानर्थक्यन्तु महाभाष्ये । अनर्थकास्तु प्रतिवर्णमर्थानुपलब्धेरित्यादिना ग्रन्थेन सुविशदं प्रत्यपादि । तत्तदोऽवगन्तव्यम् । विस्तरभयादत्र नोक्तम् । इति विवरणकारः ।

(१) काण्डे कुड्ये । अत्र भाष्ये विभक्त्यन्तं शक्यमकर्त्तुं काण्डे कुड्ये कथं न भवति । कृत्तद्धितग्रहणार्थं नियमार्थं भविष्यति । कृत्तद्धितस्यैव प्रत्ययान्तस्य प्रातिपदिकसंज्ञा भवति । एवं च विभक्त्यन्तपदाभावेऽपि काण्डे इत्यत्र दूषणमेव नास्ति विवरणोक्तिश्चिन्तनीया ।

पदेन नञ् ॥ २ ॥ अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ॥ प्रसज्यस्तु स विज्ञेयः क्रियया सह यत्र नञ्(क) ॥ ३ ॥" एवं हि विभक्तिभिन्नं विभक्त्यन्तभिन्नमर्थवच्छब्दरूपं संज्ञि । नाम च संज्ञा । विभक्त्यन्तभिन्नमिति कथनेन धातूनां व्यावृत्तिः कृता तेषां तिबादिविभक्त्यन्तत्वात् । तच्छब्दरूपं नाम प्रातिपदिकमुच्यते । कीदृशं तत् । अविभक्ति । पर्युदासोऽत्र नञ् गृह्यते । विभक्तिसदृशं विभक्तिभिन्नमित्यर्थः । विभक्तिसदृशमिति कथनेनार्थवदेवागतम् ॥ पुनः कीदृशम् । विभक्त्यन्तभिन्नमिति कथनेन धातुवर्जितमित्यागतम् ॥ पुनः कीदृशम् । अर्थवत् । अत्रार्थशब्दोऽभिधेयवचनो न तु धननिवृत्तिप्रयोजनवचनः । यथा-अर्थवान् धनवानित्यर्थः । मशकार्थो धूमः मशकनिवृत्तये इत्यर्थः । कोऽर्थः किं प्रयोजनमित्यर्थः । तत्राभिधेयं तु चतुर्विधं जातिगुणक्रियाद्रव्यभेदात् । जातिशब्दा यथा—गौः अश्वः इत्यादयः । गुणशब्दा यथा—शुक्लः कृष्णः इत्यादयः । क्रियाशब्दा यथा—पाचकः गन्तेत्यादयः । द्रव्यशब्दा यथा—डित्थं कपित्थमित्यादयः ॥ ननु वन्ध्यापुत्राभावशशविषाणगगनकुसुमादीनामर्थाभावादेषां नामसंज्ञा न स्यादिति चेदुच्यते । अभावोऽपि पदार्थान्तरत्वेनाभिधेयत्वादभावशब्दस्य सिद्धा संज्ञा । वन्ध्यादिशब्दार्थः पुत्रादिशब्दार्थश्च प्रसिद्ध एव । तयोः संसर्गमारोप्य शब्दप्रयोगसंभवात्तेषामप्यस्ति ॥ विभरहितमिति किम् । हरिषु । करोषि । सुप्सिपोर्मा भूत् । पदादित्वात्सस्य षो न स्यात् ॥ विभक्त्यन्तरहितमिति किम् । देवौ । भवन्ति । अत्र द्वित्वाद्यनभिधानेऽप्यव्ययादिवदेकवचनं स्यात् ॥ धातुवर्जितमिति किम् । अहन्नित्यत्र 'नाम्नो नो लोपश् , इत्यनेन लोपश् स्यात् । अहन्नित्यत्र अह इत्यनेन सत्वं तु न तस्य लाक्षणिकत्वात् ॥ अर्थवदिति किम् । धनं वनमित्यादौ प्रतिवर्णं संज्ञा मा भूत् ॥ अत्र वार्तिकम् । कृत्तद्धितसमासाश्चेति(ख) । चकारोऽनुक्तसमुच्चयार्थः । तेन निपातस्यानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्येति ॥ १ ॥

---

(क) द्वाविति । "उभौ नञौ समाख्यातौ (नकारौ द्विविधौ ज्ञेयौ) पर्युदासप्रसज्यकौ ॥। पर्युदासः सदृग्ग्राही निषेधार्थः प्रसज्यकः ॥" इति कुत्रचित् पाठः ॥ अप्रधान्यमिति । "अप्रधान्यं विधेर्यत्र प्रतिषेधे प्रधानता । प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ।" इति पाठान्तरम् ।

अत्र वासुदेवः—इत्युक्तदिशा नामसंज्ञाविधेः प्राधान्यादुत्तरपदयुक्तत्वाच्चात्र पर्युदासः । ततश्च नञिव युक्तमन्यसदृशेऽर्थे इति नञ्युक्तविभक्तेरर्थवत्तया सदृशोऽर्थवति विभक्तिभिन्ने वर्तमानत्वाद्विभक्तिरहितमर्थवदित्युक्तम् । विभक्तीनां प्रत्ययान्तत्वात्प्रत्ययग्रहणेन तदन्तस्येति विभक्त्यन्तभिन्नमित्यर्थः । तेन च कुण्डे वृक्षान् अहन् इत्यादौ विभक्त्यन्तत्वेन नामत्वाभावाद् भस्वनलोपादि नेति ।

(ख) कृत्तद्धितेति । अत्र सिद्धान्तरत्नावली—

कृत्तद्धितसमासश्चेषां द्वन्द्वसमासः । समासश्चेति चकारोऽनुक्तसमुच्चयार्थः । तनैतेऽपि नामसंज्ञा भवन्ति इति वक्तव्यम् । ननु किमर्थमिदं नामसंज्ञा तु पूर्वेणैव सिद्धा न सिद्ध्यति तत्र कृत्सु क्रियावन्तानां धातुत्वानपायात् अत एव हेसोमपा इति भिलोपो न । स्वार्थतद्धितानामपि गुणीभूतार्थवत्त्वात् । तथाहि चोर एव चौरः । स्वार्थेऽण् । आदिवृद्धिः अत्र हि चोरशब्दस्य साक्षादर्थवत्त्वम् । चौरशब्दस्य तु चोरशब्दस्मरणद्वारकमिति गौणमुख्यन्यायेन चोरशब्दस्यैव पूर्वेण संज्ञा स्यात् न चौरशब्दस्येति विध्यर्थं कृत्तद्धितग्रहणम् । समासेष्वपि भूतपूर्वविभक्त्या अविभक्तित्वाभावात् । अत एव पञ्चाम्नोति पदान्ताश्रयो न लोपः । नन्वेवमपि अव्ययीभावादिति विभक्तिलुग्विधानानाज्ज्ञापकात्समासे नामसंज्ञा भविष्यति । एवमपि नियमार्थं समासग्रहणम् । अर्थवत्समुदायनां मध्ये समासस्यैव यथा स्यात्तेन वाक्यस्यार्थवतोऽपि न भवति । अस्य विस्तरस्तु तत्त्वदीपिकायां द्रष्टव्यः ॥

( त० ) अविभक्ति नामेति ॥ विभक्तेरन्यदिति अविभक्ति । विशेष्यं तु शब्दस्वरूपम् । तन्त्रादिना विभक्त्यन्तमपि लब्धम् ॥ ननु सूत्रे अविभक्तीत्येतावन्मात्रमर्थवद्ग्रहणं कुतो लब्धमिति चेत्, उच्यते । "द्वौ नञौ च समाख्यातौ पर्युदासप्रसज्यकौ । पर्युदासः सदृग्ग्राही प्रसज्यस्तु निषेधकृत् ॥ प्राधान्यं तु विधेर्यत्र प्रतिषेधेऽप्रधानता । पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥ अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता । प्रसज्यस्तु स विज्ञेयः क्रियया सह यत्र नञ् ॥" इति । तथा च पर्युदासोऽत्र नञ् गृह्यते । ततश्च विभक्तेरर्थवत्त्वात् तत्सदृशमर्थवदेव संज्ञि उपपततीत्यर्थवल्लाभः ॥ तन्त्रादिलब्धविभक्त्यन्तपर्य्युदासाद्वा तु पर्युदासोऽपि ॥ अर्थवदिति किम् । धनं वनमित्यत्र प्रतिवर्णं संज्ञा मा भूत् । तस्यां सत्यां स्याद्युत्पत्तौ नलोपः प्रसज्येत ॥ ननु च एकवर्णानामप्यर्थदर्शनादेतीत्यादाविव देवादिष्वपि वर्णा अर्थवन्तः कथं न । तथा च प्रत्याहाराह्निके अर्थवन्तो वर्णा इति भाष्येपि श्रीमत्पतञ्जलिनोक्तम् । उदाहृतं च कूप इति ककारे सति कश्चिदर्थो गम्यते । यूप इति यकारे अर्थान्तरम् । तेन मन्यामहे । यः कूपे कूपार्थः सः ककारस्य यो यूपे यूपार्थः स यकारस्येति । तथा ब्राह्मण इत्युक्ते योऽर्थो गम्यते नासौ बकारादीनामन्यतमापायेऽपि गम्यते । येषां च संघातो यत्कार्यं करोति ते प्रत्येकमपि तत्कुर्वन्ति । यथा तिलानां खारी तैलमुत्पादयति प्रत्येकं च तिलाः । ये तु यस्मिन् प्रत्येकमसमर्थास्तेषां समुदायोऽपि तत्रासमर्थः । यथा प्रत्येकं सिकतास्तैलं नोत्पादयन्ति तेषां खार्यपि । अतः संघातार्थवत्त्वाच्चार्थवन्तो वर्णाः तत्कथमर्थवद्ग्रहणे सत्यपि तेषां निवृत्तिरिति चेत् । उच्यते । अनर्थका वर्णाः प्रतिवर्णमर्थानुपलब्धेः । नहि ब्राह्मण इत्यत्र ब्रा इत्युक्ते कश्चिदर्थो गम्यते । अतो धात्वादीनामेकवर्णानामर्थवत्त्वादन्येऽपि वर्णा अर्थवन्त इत्युनुपलब्धिबाधितमेतत् । किं च कूपो यूप इत्यन्वयव्यतिरेकाभ्यां ककारयकारयोरर्थवत्त्वादन्येषामपि वर्णानामानर्थक्यमभ्युपगतं न । अथ तेषामप्यर्थवत्त्वम् । भूयिष्ठः कूपे यूपार्थः स्यात् कूपार्थश्च यूपे । यत्र भूयसामर्थानामन्वयो व्यतिरेकस्तु कस्यचित् तत्रार्थानामपि भूयसामनुवृत्तिर्व्यतिरेकस्तु कस्यचित् यथा देवदत्त गामानय शुक्लां देवदत्त गामानय कृष्णामिति । अतः संघाता एव तेनार्थेनार्थवन्तः संघातार्थवत्त्वाच्चेति हेतुरनैकान्तिक इति शङ्का । तैलाभिनिर्वर्तिसंघातेन दीपो न प्रत्येकम् । रथावयवैश्चक्रादिभिः संहतैः व्रजिक्रिया । किं चार्थवतां विपर्यासे अर्थप्रत्ययस्याविपर्यासः । आहर पात्रं पात्रमाहरेति । अपाये चापायः । गामानय शुक्लां शुक्लां गामानयेति । उपजने चोपजनः । गामानय शुक्लामिति ॥ वर्णेषु नैवम् । हिनस्ति इति सिंहः । हन्ति, हतः, घ्नन्ति । भविता । अतः संघाता एवार्थवन्तः ॥ विभक्तिरहितमिति किम् । हरिषु करोषि । सुप्सिपोर्मा भूत् । पदादित्वात्सस्य षो न स्यात् ॥ विभक्त्यन्तरहितमिति किम् । देवाः । भवन्ति । अत्र द्वित्वाद्यनभिधानेऽप्यव्ययादिवच्चैकवचनं स्यात् ॥ धातुवर्जितमिति किम् । अहन् नलोपश् स्यात् ॥

यत्तु प्राचोक्तम्—अथ विभक्तिर्विभाव्यते । तत् व्याख्यातृभिश्च व्याकृतं संधिप्रकरणकथनानन्तरं ये विधयो वक्ष्यन्ते तेषां विभक्तिसंज्ञा स्यात् । सा च विभाव्यते प्रस्तूयते तत्प्रकरणमारभ्यत इति विभक्तिशब्दावृत्त्या योज्यम् । स्वमते शब्दार्थयोरभेदोपचारादित्यर्थः । अभेदोपचाराच्च द्वितीयो विभक्तिशब्दः संज्ञिवचनः । आद्यः संज्ञावचनः । महासंज्ञाकरणं तु विभ-

ज्यन्ते विविच्यन्ते संख्याकर्मादयोऽर्था अनयेति विभक्तिः इत्यन्वर्थसंज्ञाविज्ञानार्थम् ॥ तेनागमादीनामत्र वक्ष्यमाणानामपि विभक्तिसंज्ञा नेति । तन्न, वार्तिकं दृष्ट्वा सूत्रकृतः प्रवृत्त्ययोगात् ॥ अन्ये तु योगिकार्थेनैव सिद्धमित्याहुः । विभज्यते प्रकटीक्रियते कर्तृकर्माद्यर्थोऽनया सा विभक्तिः ॥ अतिप्रसक्तं योगमात्रं कृदादौ यद्यपि तथापि स्यादिषु तिबादिषु च योगरूढिः ॥ यच्च कृत्तद्धितसमासाश्चेति वार्तिकम् । चकारो नामसंज्ञानुकर्षणार्थः । अत्र तद्व्याख्यातारः । ननु किमर्थमिदं नामसंज्ञा तु पूर्वेणैव सिद्धा । न सिद्ध्यति । तत्र कृत्सु क्विबाद्यन्तानां धातुत्वानपायात् । अत एव हे सोमपा इति घिलोपो न स्वार्थतद्धितानामपि गुणीभूतार्थवत्त्वात् । तथाहि । चोर एव चौरः । स्वार्थेऽण् । अत्र हि चोरशब्दस्य साक्षादर्थवत्त्वम् । चौरशब्दस्य चोरशब्दस्मरणद्वारा गौणमुख्यन्यायेन चोरशब्दस्यैव पूर्वेण संज्ञा स्यान्न चौरशब्दस्येति विध्यर्थं कृत्तद्धितग्रहणम् । समासेष्वपि भूतपूर्वविभक्त्या अविभक्तित्वाभावात् । अत एव पञ्चाग्नीति पदान्ताश्रयो नलोप इत्याहुः । अत्रेदं वक्तव्यम् । पञ्च नव दधि मधु इत्यादीनामविभक्तिकत्वेन नामत्वानपायात्कथं पदत्वम् । अत्र यदि विभक्तिसत्त्वसमये एव प्रवृत्ता पदसंज्ञा लुप्तायां विभक्तौ एकदेशविकृतन्यायेन प्रकृतिभागेऽपि साऽस्तीति ब्रूषे तर्हि प्रकृतेऽपि समं क्विबादिसत्त्वसमये प्रवृत्ता नामसंज्ञा लुप्तेऽपि तस्मिन्प्रतिभागेऽपि साऽस्तीति तुल्यम् । यदि च लुप्ते प्रत्यये प्रत्ययलक्षणेन पदसंज्ञां स्वीकरोषि तदपि समं समाधानम् । यदपि स्वार्थतद्धितानामपीत्यादि तदपि न गौणत्वासंभवात् । स्वार्थोपसर्जनार्थान्तराभिधायित्वं गौणत्वम् । तच्चात्र न संभवति । न हि चौरचोरशब्दयोरर्थो भिन्नो येनैकोऽपरत्र गौणो भवेत् । यदपि अत्र चोरशब्दस्य साक्षादित्यादि तदपि न । नहि पर्यायाणां परस्परस्मरणद्वारा स्वार्थबोधकत्वं क्वचित्स्वीक्रियते । व्याकरणानभिज्ञस्यापि शक्तिग्रहे सति ततो बोधो जायते । अन्यथा ज्ञानं ध्यानमित्यादौ पुरः स्वार्थिकत्वेन गौणत्वादिकं स्यात् । यदपि समासेष्वपि भूतपूर्वविभक्त्येत्यादि तदपि न अवयवानां विभक्त्यन्तत्वेऽपि समुदायस्यातथात्वात् । यस्माद्विभक्तिर्विधीयते तद्विभक्त्यन्तम् । सा चावयवेभ्यो विधीयते न समुदायात् । अन्यथा समासवत् वाक्यस्यापि विभक्त्यन्तत्वेन पूर्वेण प्राप्तिविरहादेव तत्र नियमानुपयोगात् । यदि नन्वेवमपि अव्ययीभावादिति विभक्तिलुग्विधानाज्ज्ञापकात्समासे नामसंज्ञा भविष्यति । एवमपि नियमार्थं समासग्रहणम् । अर्थवत्समुदायानां मध्ये समासस्यैव यथा स्यात् । तेन वाक्यस्यार्थवतो न भवतीति । तदपि न । उक्तरीत्या समासस्याविभक्त्यन्तत्वेन ज्ञापकोपन्यासवैयर्थ्यात् । अन्यथा समासवद्वाक्यस्यापि विभक्त्यन्तत्वेन समासेष्वपि भूतपूर्वविभक्त्या अविभक्तित्वाभावादित्यनेन विध्यर्थतायास्त्वयैवोक्तत्वात् पूर्वापरविरोधः नियमफलाभावेन समासग्रहणवैयर्थ्यात् । नियमस्तत्र क्रियते यत्र सर्वत्र प्राप्तिर्भवति । अत्र तु तव मते वाक्ये प्राप्तिर्नास्ति वाक्यस्य चेत्प्राप्तिर्भवति तर्हि समासपदं व्यर्थम् । तस्मात्पूर्वेणैव सिद्धे वार्तिकमिदं न कार्यम् ॥ १ ॥

## ( तस्मात् ) ॥ २ ॥

( सु० ) तस्मात् ॥ अधिकारोऽयम् । 'धातोः' इत्यतः प्राक् स्यादयोऽणादयश्च प्रत्यया नाम्नः पराः स्युः ॥ तस्मादिति पञ्चमी । इयं न विश्लेषावधौ विश्लेषस्यासं-

भवात् । किंतु ऋतेआदिषु दिक्शब्दपाठाद्दिग्योगलक्षणा पञ्चमी । तत्र परः पूर्वो वा इत्यनियमेनाध्याहारे प्रसक्ते बहुर्वा उक्तेऽर्थे स च प्रयोगे वेत्यनेन बह्वोः पूर्वत्वस्य नियतत्वादन्यः प्रत्ययः पर एवेति परशब्दोऽध्याहार्यः ॥ २ ॥

(त०) तस्मादिति ॥ अधिकारोऽयं प्राग्धातोः । तथाच स्यादयोऽणादयश्च प्रत्यया नाम्न एव परे बोध्या इति। ननु धातोरित्यग्रिमाधिकारात् ततः प्राक्तनानां प्रत्ययानां नाम्नः परत्वमवधेयमेवेति किं तस्मादित्यनेनेति चेन्न किंपरिमाणमिति वक्तव्ये किंदघ्नमित्यपि स्यात् इति निराकरणाय तस्मादित्यस्यावश्यकत्वात् । अथ न केवलः प्रत्ययः प्रयोक्तव्य इति नियमेन तद्वारणसंभवादिति चेत् एतस्यापि तन्मूलकत्वादित्यवधेहि(क) । तस्मादिति पञ्चमी न विश्लेषावधौ विश्लेषस्यात्रासंभवात् । किंतु ऋतादिमध्ये दिक्शब्दस्य पाठात्तद्योगे । तत्र च पूर्वः परो वेति नियमाभावेऽपि परशब्द एवाध्याहार्यः समानाद्धेर्लोप इति निर्देशात् । तच्छब्दस्य पूर्वपरामर्शित्वान्नाम्नः परामर्शः ॥ २ ॥

**सि औ जस्, अम् औ शस्, टा भ्याम् भिस्, ङे भ्याम् भ्यस्, ङसि भ्याम् भ्यस्, ङस् ओस् आम्, ङि ओस् सुप्** ॥ नाम्नः पराः स्यादयः सप्त विभक्तयो भवन्ति ॥ ३ ॥

( सु० ) सि औ जस् १ अम् औ शस् २ टा भ्यां भिस् ३ ङे भ्यां भ्यस् ४ ङसि भ्यां भ्यस् ५ ङस् ओस् आम् ६ ङि ओस् सुप् ७ ॥ सिप्रत्ययस्येकारोऽस्त्वसोः साविस्यादौ विशेषणार्थः । जस्शसोर्जकारशकारौ जसीशसोरित्यनयोर्विषयविभागार्थौ ॥ टाप्रत्ययस्य टकारः टेन टा ना टौसोः टाङ्योरित्यादौ भेदकः ॥ ङेङसिङस्ङीनां ङकारस्तु ङितीत्यादौ विशेषणार्थः । ङसेरिकारो ङसिरदिति विशेषणार्थः सुप्प्रत्ययस्य पकारः प्रत्याहारार्थस्तेन सिप्प्रत्याहारो यथा स्यात् ॥ स्यादित्यादिभेदतो विभक्तिर्द्विधा । तत्र सिऔजसीत्यादीनां सप्तानां त्रिकाणां प्रथमादयः सप्तम्यन्ताः प्राचां संज्ञास्ताभिरिहापि व्यवहारः । तेषु त्रिकेषु त्रीणि त्रीणि वचनानि एकश एकवचनद्विवचनबहुवचनसंज्ञकानि सन्ति ॥ ३ ॥

( त० ) सिऔजस् इत्यादि ॥ सेरिकारोऽस्त्वसोः सावित्यादौ सोरित्युक्ते सकारादिलाभसंभवात् । न चेष्टापत्तिः, वेधःसु इत्यादावपि दीर्घत्वप्रसङ्गात् । न च श्रवणार्थः गुण इत्यादिलिङ्गात् । एतेन सेरिकार उच्चारणार्थ इत्युक्तिः प्रत्युक्ता, स् इत्यनेनाप्युच्चारणसंभवात् ॥ ३ ॥

(क) मतमिदं माधवस्य, तथाच रत्नावल्याम्—

ननु यदि प्रकृतं नाम तत एव सिद्धेः किं तस्मादित्यनेन । न च वाच्यं तत्प्रथमान्तमिह चोपयोगः पञ्चम्यन्तस्येति । अर्थवशाद्विभक्तिविपरिणामात् ङुण् इत्यत्राम इत्यनुवृत्तस्यामीतिवत् । उच्यते । तदनुवृत्तौ हि तस्य स्वरूपपरत्वादिहापि तत्स्वरूपप्रतीतिः स्यात् । एवमपि स्पष्टत्वात् नाम्न इति वाच्यम् । स्वरूपप्रतीतिरपि पुनर्नामग्रहणान्न भविष्यति । ज्ञापकाच्च यदयं रः संख्याया इत्याह तज्ज्ञापयति । नात्र स्वरूपग्रहणमिति । अन्यथा नामशब्दादेव स्यादय इति रेफान्तसंख्याया आमो नुड्विधानं व्यर्थं स्यात्, अत एव षष्ठीभ्रान्त्या आदेशो अपि स्यादयो न भविष्यन्ति । किञ्च स्वरूपग्रहणं संज्ञाविधानवैयर्थ्यप्रसङ्गाच्च न भविष्यतीति । तस्मादिति व्यर्थमिति चेन्न । ज्ञापनार्थत्वात् । इह शास्त्रीयसंज्ञातोऽन्यत्र स्वरूपमेव शब्दस्य ग्राह्यं नार्थ इति । तेन सखिपत्योरीगित्यादौ तदर्थानां मित्रभर्त्रादीनां ग्रहणं न भवति ।

**एकत्वद्वित्वबहुत्वेषु** ॥ एकवचनद्विवचनबहुवचनानि ॥ सोर्विसर्गः । देवः ॥ ४ ॥

( सु० ) **एकत्वद्वित्वबहुत्वेषु** ॥ एकत्वद्वित्वबहुत्वशब्दा इह संख्यापराः सन्ति, तेन बहु पर्वत इति वैपुल्यवाचिनो ग्रहणं न । आश्रयद्रव्यगतेषु एकत्वद्वित्वबहुत्वेषु सत्सु एकवचनद्विवचनबहुवचनसंज्ञकाः प्रत्ययाः भवन्ति । उच्यतेऽनेनेति वचनम् । एकस्य वचनमेकवचनम् । द्वयोर्वचनमिति द्विवचनम् । बहूनां वचनमिति बहुवचनम् ॥ ४ ॥

( त० ) एकवचनादिसंज्ञानामन्वर्थतामाश्रित्याह—एकत्वेत्यादि ॥ तथा च एकं वक्ति एकवचनम् । द्वौ वक्ति द्विवचनम् । बहून्वक्ति बहुवचनम् ॥ यद्वा उच्यत इति वचनम् । एकस्य वचनमिति ॥ जसो जकारस्य फलमाह—जसो जकार इति ॥ तथा च शसः शकारोऽपि शसीति विशेषणार्थः । वस्तुतस्तु एकतरो न पठितुं योग्यः एकेनैव द्वितीयवारणात् ॥

**( सरूपाणामेकशेष एकविभक्तौ )** देवौ । देवाः(क) ॥५॥

( सु० ) **सरूपाणामेकशेष एकविभक्तौ** ॥ एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते ॥ रूप्यते बोध्यते इति रूपमर्थः । समानं रूपं येषां ते सरूपाः । सहादित्वात्समानस्य सादेशः । तथा समानं रूपं स्वरूपं येषां ते सरूपाः सरूपाश्च सरूपाश्चेति सरूपास्तेषामित्येकशेषेण व्याख्यानम् ॥ एकविभक्ताविति विभक्तिसारूप्ये उपलक्षणं न त्वेकशेषे निमित्तम् । एवं च नैमित्तिकत्वेनान्तरङ्गोऽयमेकशेषः स्याद्युत्पत्तेः प्रागेव प्रवर्तते । यद्येतन्नारभ्यते तर्हि प्रत्येकं विभक्तिः स्यात् द्वन्द्वश्च प्रवर्तेत । आरब्धे त्वेकशेषो भवति न तु द्वन्द्वः अनेकपदाभावात् ॥ ननु स्याद्युत्पत्तेः प्रागेकशेषप्रवृत्तौ शिष्यमाणं यत्प्रातिपदिकं तदेकमेवार्थं बोधयतीति द्विवचनाद्युत्पत्तौ देवौ देवा इत्यादि न सिध्येत् । उच्यते । शिष्यमाणो लुप्यमानार्थं कथयति । एकशेषस्य वृत्तिषु पाठात् । परार्थाभिधानं वृत्तिरिति ॥ अत एव लुप्तेऽपि प्रत्यये लिट् धुक् इत्यादौ कर्ता प्रतीयते ॥ एकस्यां विभक्तौ परतः सरूपाण्येवेति किम् । मातृशब्दयोर्जननीपरिच्छेत्तृवाचिनोर्नैकशेषो भवति । मातृभ्यां मातृभिरित्यादौ सारूप्येऽपि औजसादिषु वैरूप्यात् ॥ नन्वेवं पयः पयो नयति देवदेव इत्यादावतिप्रसङ्गः स्यात् । सहविवक्षायामेकशेषः प्रवर्तते इतरेतरयोगे द्वन्द्वस्य विषये इत्यर्थो नान्यत्र ॥ ५ ॥

**अमृशसोरस्य** ॥ समानादुत्तरयोरमृशसोरकारस्य लोपो भवति ॥ देवम् । देवौ । शसः शकारः शसीति विशेषणार्थः ॥ ६ ॥

( सु० ) **अमृशसोरस्य** ॥ समानाद्धेर्लोपोऽधातोरित्यतः समानादिति लोप इति अधातोरिति चानुवर्तते अधातोः समानात्परयोरमृशसोरकारस्य लोपः स्यात् ॥ अधातोरिति किम् । श्रियं भ्रुवमित्यादावियुवौ । सेनान्यं खलप्वमित्यादौ य्वौ । सोमपामित्यादौ सवर्णदीर्घः ॥ समानादिति किम् । रायम् । ग्लावम् ॥ ६ ॥

---

( क ) देवाः इति । छन्दसि देवासः ।'अकाराज्जसोऽसुक्क्वचिद्वक्तव्यः' इति वार्त्तिकं सारस्वतादौ दृश्यते । असुकः कित्त्वादन्तविधौ 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते'' इति पदत्वाद्विसर्गः । सामान्यतो विधावप्यावन्ते वा रूपे विशेषाभावेऽपि कित्करणं मध्यविधि निरासार्थम् । न च विधानसामर्थ्यादेव मध्ये न स्यादिति वाच्यम् । तस्य संयोगान्तलोपविधेर्दीर्घविधेर्वा निवर्त्तकत्वप्रसङ्गात् ।

(त०) **अम्शसोरस्येति** ॥ अत्र समानाद्वेर्लोपोऽधातोरिति सूत्रात्समानलोपावनुवर्तेते इत्याशयेनाह-**समानादिति** ॥ समानादिति किम् । रायम् । अत्र स्याद्यधिकारस्य वामो ग्रहणादधातोरिति नानुवर्त्यम् । अतोऽचिनवमित्यादौ नातिव्याप्तिः ॥ अस्येति किम् । षष्ठीनिर्दिष्टत्वेनान्त्यस्य मा भूत् ॥ न च 'सो नः पुंसः, इत्यत्र सकारस्य नत्वविधेर्लिङ्गान्नान्त्यस्य विधिरन्यथा शसः सकारस्यान्त्यत्वेन लोपे तदभावान्नत्वासंभवः स्यादिति वाच्यम् , तत्र 'सो नः पुंसः, इत्युक्त्या ज्ञापनासंभवात् । नहि तत्र शसो न इत्युक्तं येन ज्ञापकं स्यात् । न च सो न इत्यत्रापि शसः सकारस्यैव ग्रहणमिति वाच्यम् । न हि शस्येव सकारो नान्यत्रेति नियमोऽस्ति येन ज्ञापकमिदं स्यात् ॥ यत्तु लघुभाष्यम् । अत्र 'आदवे लोपश्' इत्यतो आदित्यस्यानुवृत्तेरस्येति व्यर्थमिति कश्चित् इति । अत्रेदमवधेयम् । आदित्यस्य पञ्चम्यन्तत्वेन षष्ठ्यर्थालाभात् । अथार्थवशाद्विभक्तिविपरिणामेन षष्ठ्यर्थलाभः । विभक्तिविपरिणामे त्वर्थलाभस्यातिक्लिष्टत्वेऽन्त्यस्येत्यस्यैवावश्यकत्वात् ॥६॥

**सो नः पुंसः** ॥ पुंल्लिङ्गात्समानादुत्तरस्य शसः सकारस्य नकारादेशो भवति न स्वम्शसीत्यात्वे ॥ ७ ॥

(सु०) **सो नः पुंसः** ॥ पुंल्लिङ्गात्समानान्नाम्नः परस्य शसः सस्य नः स्यात् ॥ शस इत्युनुवृत्तम् । लिङ्गं नामार्थं इति मते पुंस इति पञ्चमी । पुंल्लिङ्गात्समानान्तान्नाम्न इति । यदा तु लिङ्गं प्रत्ययार्थस्तदा पुंस इति षष्ठी । समानान्तान्नाम्नः परस्य पुंसो वाचकस्य शसः सस्य नः स्यादिति ॥ उक्तं च—"एकं द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथा । नामार्थ इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः" ॥ इति ॥ स्वार्थद्रव्यलिङ्गसंख्याकारकात्मकः पञ्चको नामार्थः । उक्तपञ्चसु पूर्वस्य पूर्वस्य नामार्थत्वे परः परो विभक्त्यर्थो ज्ञेयः । शब्दप्रवृत्तिनिमित्तः स्वार्थोऽस्ति । स्वार्थश्चानेकविधः स्वरूपजातिगुणक्रियाद्रव्यसंबन्धभेदात् ॥ स्वरूपं यथा । डित्थः । यदा शब्दरूपेण विशिष्टा जातिः कथ्यते गौरिति तदा गोशब्दस्य स्वरूपं स्वार्थोऽस्ति विशेषणत्वात् । जातिस्तु द्रव्यं भवति विशेष्यत्वात् । यदा जात्या विशिष्टो गुणः कथ्यते पटस्य शुक्लो गुण इति तदा जातिः स्वार्थो भवति विशेषणत्वात् । शुक्लो गुणो द्रव्यं भवति विशेष्यत्वात् । यदा गुणेन विशिष्टं द्रव्यं कथ्यते शुक्लः पट इति । यदा विशेषणभूतो गुणः स्वार्थो भवति विशेष्यभूतं पटादिकं द्रव्यं भवति । यदा तु द्रव्यमपि द्रव्यान्तरस्य विशेषणं भवति यष्टीः प्रवेशयेत्यादौ तदा यष्ट्यादिकं द्रव्यं विशेषणत्वमापन्नं स्वार्थो भवति । पुरुषादिविशेष्यं द्रव्यं भवति । दण्डीत्यादौ दण्डपुरुषसंबन्धः स्वार्थो भवति । दण्डीति द्रव्यं विशेषणं भवति । पाचक इत्यादौ क्रिया स्वार्थो भवति । पुरुषो द्रव्यं भवति । किं च-"शब्दस्य यत्र विश्रान्तिर्वाच्यं द्रव्यं तदिष्यते ।" पर्यवसानभूमिरित्यर्थः ॥ तच्चानेकप्रकारम् । जातिगुणक्रियाद्रव्यस्वरूपमिति । गौः शुक्लः पाचकः डित्थः । लिङ्गं स्त्रीत्वादिः । संख्या एकत्वादिः । कर्मादयः कारकविशेषाः । तत्र स्वार्थो विशेषणम् । द्रव्यं तु विशेष्यमिति निर्गलितार्थः ॥ 'आम्शसि' इति सूत्रेणौकारस्य स्थाने आत्वे कृते सति 'सो नः पुंसः' इत्येतत्सूत्रं न प्रवर्तते इत्यर्थः ॥ कुतो न । उच्यते । पदविभागात् । यथा स् १ ओ २ न् ३ अः ४ पुंसः ५ इति पञ्च पदानि छित्त्वा पुंल्लिङ्गात्समानाच्छसः सस्य न्

स्यात् ओकारसंबन्धिनोऽवर्णात्तु विसर्गः स्यादिति व्याख्येयम् । अतो गाः पश्येत्यादौ नत्वं न ॥ पुंलिङ्गादिति किम् । बुद्धीः । समानादिति किम् । रायः । ग्लावः । लोपविषये एवास्य प्रवृत्तिः । समानादमूशसोरल्लोपस्यानिषेधात् ॥ अत एव बहुश इत्यत्र नत्वं न । स्याद्यधिकाराद्वा ॥ ७ ॥

( त० ) सो नः पुंस इति ॥ पञ्चमीत्याशयेनाह-पुँलिङ्गादिति ॥ तथा च समानान्तान्नाम्न इति बोद्धव्यम् । यद्वा पुँल्लिङ्गात्समानादित्येकं पदम् । पुंलिङ्गमततीति पुँल्लिगात् स चासो समानश्चेति स तथा तस्मादित्यर्थः ॥ तत्राम्शसोरित्यतः शसः इत्यनुवृत्तं यद्यपि समासान्तर्गतं तथापि नामोऽनुवृत्तिस्तत्र तस्यासंभवादित्याह शस इति ॥ ननु गा इत्यत्र नत्वं कुतो न । अमूशसोरित्यात्वेन समानात्परत्वादिति चेत् । अत्र केचित् सो न इत्यावर्त्य शसो नकारस्य सकार इति व्याख्येयम् । इष्टसिद्ध्यर्थमिदम् । तेन गा इत्यादि सिद्धम् ॥ यद्वा आवृत्त्या लब्धं यत्सो न इति सूत्रं तत्र शसो नस्येत्यनुवर्तते । स् इत्यविभक्तिको निर्देशः । ओरिति षष्ठी । ततश्च ओकारसंबन्धी योऽवर्णः तस्मात्परो यः शसः सकारस्तस्य नकार आदेश भवतीत्यर्थो लभ्यतेऽतो नातिप्रसङ्गः ॥ यद्वा स ओ न् अः पुंस इति पञ्च पदानि छित्वा पुंलिङ्गात्समानात् शसः सस्य नकारः । ओकारसंबन्धिनोऽवर्णात्तु विसर्ग इति व्याख्येयम् । अत्रेदं वक्तव्यम् । गा इत्यत्र नत्ववारणे सन्निपातपरिभाषयैव सिद्धे तदर्थमेतावदावृत्त्याद्यनुसरणक्लेशेन किम् । न च तानित्यादावपि सन्निपातपरिभाषया निषेध इति वाच्यम् । कानित्यादिलिङ्गेन त्यदादिषु शसो नत्वविधौ परिभाषानाश्रयणात् ॥ यद्वा त्यदादेष्टेरः स्यादावित्यत्रादिपदगृहीतस्य शसो निमित्तत्वे लाक्षणिकत्वेनामूशसोरित्यत्र शसः साक्षाच्छ्रवणेन निमित्तत्वे प्रतिपदोक्तत्वात् लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणात् ॥ किंच परिभाषाश्रयणस्येष्टसिद्ध्यर्थत्वात् तानित्यादावनाश्रयणात् ॥ यच्च पुंस्त्वादिविचारे "स्तनकेशवती स्त्री स्याल्लोमशः पुरुषो भवेत् । उभयोरन्तरं यच्च तदभावे नपुंसकम्" इति लक्षणे खट्वावृक्षादावव्याप्तिवारणाय चेतनेषु स्तनादिमद्व्यक्त्यादिस्त्रीत्वाभिव्यञ्जकम् । अचेतनेषु तु सर्वत्रोपदेश एवाभिव्यञ्जकः । उपदेशस्तु लिङ्गानुशासनादिष्वित्युक्तम् । तत्रापि चेतनाचेतनविषयविभागो व्यर्थः । अतिप्रसक्तस्य दारशब्दस्य स्त्रीवाचकस्य स्तनकेशवत्त्वस्य व्यञ्जकस्य सत्त्वेऽपि स्त्रीत्वादर्शनात्सर्वचेतनाचेतने उपदेश एव स्त्रीत्वादिव्यञ्जक इत्यलमिति विस्तरेण ॥ ७ ॥

**शसि** ॥ शसि परे पूर्वस्य दीर्घो भवति । यदादेशस्तद्वद्भवति । न तु वर्णमात्रविधौ । देवान् (क) ॥ ८ ॥

( सु० ) **शसि** ॥ दीर्घश्रुत्योपस्थितस्य स्वरस्येति पदस्य नाम्नो विशेषणत्वात्तदन्तविधिः । पूर्वस्य स्वरान्तस्य नाम्नो दीर्घः स्यात् शसि परे ॥ 'सो नः पुंसः' इति नत्वे दीर्घत्वम् । पूर्वं नत्वं ततो दीर्घत्वं पश्चादल्लोपः वैपरीत्यं वा ज्ञेयम् ॥ शसि किम् । हरिभिः ॥ स्वरस्य किम् । लिहः ॥ ननु इह शस्परत्वाभावात्कथं दीर्घः । उच्यते ।

( क ) शसीति । तस्मिन्निति निर्दिष्टे पूर्वस्य । यद्यप्यत्र सामान्येनोक्तं तथापि स्वरस्यैव । अचश्चेति नियमात् । अतोऽनडुह इत्यादौ नातिप्रसङ्गः । वर्णमात्राश्रितविधेरन्यत्र यदादेशस्तद्वद्भवति, इति, एकदेशविकृतमनन्यवद्भवतीति च शसोऽल्लोपे नकारादेशे च तत्कार्यं स्यादेवेति वासुदेवः ।

यस्य स्थाने आदेशः यदादेशः स तेन स्थानिना तुल्यं तद्वत् स्थानिवद्भवतीत्यर्थः। स्थानिवर्णाश्रयविधौ कर्तव्ये न भवति। अस्य व्याख्यानं परिभाषाप्रकरणे उक्तम् ॥ ८ ॥

( त० ) शसीति ॥ दीर्घश्रुत्योपस्थितेन स्वरेण नाम्नो विशेषणात्तदन्तविधिः। पूर्वं दीर्घः। पश्चादल्लोपः। वैपरीत्यं वा। उभयथा वैलक्षण्यं नास्ति ॥ एवं 'सो नः पुंसः' इति नत्वेऽपि ज्ञेयम् ॥ ८ ॥

**टेन** ॥ अकारात्परष्टा इनो भवति ॥ टकारष्टेनेति विशेषणार्थः। देवेन ॥९॥

( सु० ) टेन ॥ पदद्वयमपि प्रथमान्तं संकेतितम्। अतः परष्टा इनः स्यात् ॥ अतः किम्। कर्त्रा। भवता ॥ तपरः किम्। हाहा ॥ टा किम्। देवैः ॥ ९ ॥

( त० ) टेनेति ॥ टा इन इति च्छेदः। पदद्वयमपि लुप्तप्रथमान्तम्। अत्रात इत्यनुवर्त्तते ॥ टा इति किम्। देवैः ॥ अतः किम्। पित्रा। तपरः किम्। हाहा ॥ ननु टानेत्येव सूत्र्यताम्, किम् एकारेण, एग्रहणं चानुवर्त्त्यं एनेति रूपसिद्धेरिति चेन्न। लाघवे विशेषाभावादित्युक्तं कैश्चित्। तन्न ए इत्यनुवृत्त्या गौरवस्य जागरूकत्वेन विशेषाभावादित्युक्तेरपार्थत्वात्। न च एनेत्येव सूत्र्यताम्। आ इन इति च्छेदः स्यादधिकाराच्च नातिव्याप्तिः। आमि तु नुटा बाधान्नातिप्रसङ्ग इति वाच्यम्। स्पष्टार्थत्वाट्टकारस्य ॥९॥

**अद्भि** ॥ अकारस्यात्वं भवति भकारादौ स्यादौ ॥ देवाभ्याम् ॥ १० ॥

( सु० ) अद्भि ॥ अकार आकारो भवति भादौ स्यादौ च ॥ आदिति किम्। हरिभ्याम्। तपरत्वमुत्तरार्थम् ॥ भीति किम्। देवस्य ॥ स्यादौ किम्। देवभवनम्। बहुत्वे तु परत्वादेत्वं भवति। देवेभ्य इति ॥ १० ॥

( त० ) अद्भीति ॥ अत्रादिति प्रथमान्तम्। भीति सप्तम्यन्तम्। तत्र भकारादाविति व्याख्येयम्। अदिति न स्वरूपग्राहकम्, आद्यन्ताभ्यामिति लिङ्गात्। तेन महद्भ्यामित्यत्रात्वं न ॥ अदिति किम्। हरिभ्याम् ॥ भीति किम्। देवस्य ॥ ननु रैस्मीत्यतो भीति सिद्धे किं भग्रहणेनेति चेन्न। एकयोगनिर्दिष्टत्वेन सकारस्यानुवृत्तिः स्यादिति तन्निरासार्थं भीत्यस्यावश्यकत्वात् ॥ भ्यामो मस्य च नेत्वं इदुद्भ्यामिति लिङ्गात् ॥ स्यादौ किम्। देवभवम् ॥ १० ॥

**ऽभ्यः** ॥ अकारात्परस्य भिसो भकारस्य अकारादेशो भवति ॥ देवैः। डकारो डित्कार्यार्थः(क) ॥ ११ ॥

(सु०) ऽभ्यः ॥ 'एस्भि बहुत्वे, इत्यस्यापवादोऽयम्। भ् भि अः इति पदच्छेदः। भि इत्येकदेशद्वारेण भिस एवानुकरणम्। अत इत्यनुवृत्तम्। अतो भिसो भकारस्याकारः स्यात् ॥ स्यादावित्यधिकारात् स्यादिसम्बन्धी भिस् गृह्यते। तेन ब्राह्मणभिस्सेत्यादौ नातिप्रसङ्गः ॥ ११ ॥

( त० ) ऽभ्य इति ॥ भ् भि अः इति छेदः ॥ अत इति पूर्वसूत्रादनुवर्तते। भीति

---

(क) देवैरिति। छन्दसि देवभिरिति। तथा च सारस्वते वार्त्तिकम्—

'अकारस्य भिसि च्छन्दस्येकारो वा वक्तव्यः' इति। ननु देवैरित्यत्रासिद्धं बहिरङ्गमन्तरङ्ग इति न्यायेन अन्तरङ्गे एकारे क्रियमाणे बहिरङ्गोऽकारादेशोऽसिद्धः स्यादिति चेन्न, नाजानन्तर्य्ये बहिरङ्गत्वक्लृप्तिरिति प्रतिषेधात्। अन्तरङ्गत्वेनादौ प्रत्ययकार्य्यम्।

भिस एकदेशानुकरणम् । नामैकदेशग्रहणे नामग्रहणम् । यथा भीमो भीमसेन इति ॥ यत्तु-भ्य इति चतुर्थीपञ्चम्योर्बहुवचनस्य ग्रहणम् । अद्भि' इत्यस्मादकारात्परत्वात् 'हसेर्हः हसः' इति द्वित्वम् 'झबे जबाः' इति भस्य बः । तथा चातः परस्य भ्यस एवाकारादेश इत्यर्थो लभ्यते ॥ यद्वा भ् भ्यः इति छेदः ॥ अकारात्परस्य भ्यसो भकारस्याकार इत्यर्थोऽस्तु । आकारो वास्त्वित्यतोऽनुवर्तते । एवं भ्यसो ग्रहणे व्याख्यायमाने 'भिस् भिस्' इति सूत्रं व्यर्थं स्यात् । ननु तर्हि भि अ इति छित्त्वा भकारे परे पूर्वस्य अत एव भवति । तस्यादेशान्तरं न भवतीति व्याख्यानमस्तु । यद्वा भि इत्येकदेशद्वारेण भिस् एवानुकरणम् । ततश्च भिसि परे अत एवेत्यर्थोऽस्तु । मैवम् । आद्ये पक्षे भीति व्यर्थं स्यात पूर्वसूत्राद-नुवृत्तेः सत्त्वात् । द्वितीये तु भागैरिति निर्देशो नोपपद्यते । इत्याद्युक्तम् । तत्रेदमवधेयम्। भकारस्य द्वित्वे द्वितीयसूत्रस्यैकारस्य निमित्तत्वे बहुस्थलेऽतिप्रसङ्गः स्यात् । किंच-भागैरिति लिङ्गस्यैव विद्यमानत्वेनव 'भिस्' 'भिस्' इति निर्देशपर्यन्तानुधावनस्य क्लिष्टत्वात् । अवर्णविधानसामर्थ्यात्सवर्णदीर्घं बाधित्वाप्येत्वमेव । अन्यथा 'समानाद्धेर्लोपः' इत्यतो लोपमनुवर्त्य लोपमेव व्यधास्यत् ॥ ननु भिभ इति सूत्रमस्तु आकारो वास्त्वित्यतोऽनुवर्तते । तथा च भिसो भकारस्यात्वेऽपि रूपसिद्धेः ॥ यद्वा भ इत्येवास्तु भि इति पूर्वसूत्रा-दनुवर्तनीयम् । तच्च रूपपरम् । इत्थं च भि इति समुदाये यो भः स आकारो भवतीत्यर्थः ॥ अत्रार्थे भागैरिति लिङ्गदर्शनम् । उच्यते । इमौ यकाराकारौ योगविभागेन स्यादिप्रकरणं भित्त्वान्यस्माद्विधीयेते । अतः प्रौढः स्वैरी वापयतीत्यादि सिद्धम् । पादेर्युक् गवादेरिति च न वक्तव्यं भवति ॥ ११ ॥

ङे अक् ॥ अकारात्परस्य ङे इत्येतस्यागागमो भवति ॥ देवाय । देवाभ्याम् (क) ॥ १२ ॥

( सु० ) ङे अक् ॥ ङे इत्यविभक्तिको निर्देशः । अतो ङे इत्यस्याक् स्यात् ॥ किस्वादन्ते ॥ अत इत्यनुवृत्तेर्नेह । वातप्रम्ये ॥ तपरत्वान्नेह । हाहै ॥ अथ अकि कृते 'एदोतोऽत' इत्यकारस्य लोपस्तु न । विधानसामर्थ्यादपदान्तत्वाद्वा न हि अकि कृते एतः पदान्तत्वं संभवतीति ॥ १२ ॥

( त० ) ङे अगिति ॥ अत्र ङे इत्यविभक्तिको निर्देशोऽसंदेहार्थः ङेरित्युक्तौ चतुर्थी-सप्तम्येकवचनयोः संदेहः स्यात् । वस्तुतस्तु ङेरित्युक्तिरपि न्याय्या । आम्ङेरित्यादौ चतुर्थ्येकवचनसंदेहनिराकरणाय व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणमित्यस्या-श्रयणीयत्वात् । ङकारो व्यर्थः स्याद्यधिकारेणैवातिप्रसंगवारणादित्याहुः । वस्तुतस्तु स्पष्टार्थमुपात्तत्वान्न व्यर्थता । अत इत्यनुवृत्तेर्वातप्रम्ये इत्यादौ न ॥ ङे इति किम् । देवौ, देवे ॥ 'एदोतोतः' इत्यनेन लोपस्तु न । एतोऽपदान्तत्वात् । अग्विधानसामर्थ्या-दित्युक्तिस्तु निर्मूला प्राप्तलोपे विधानसामर्थ्यावलम्बनस्योचितत्वादिह तु पदान्तत्वाभावे प्राप्तेरेवासंभावात् ॥ १२ ॥

---

( क ) अगिति । क आगमसूचनार्थः । टित्कितावाद्यन्तयोर्वक्तव्याविति । 'एदोतोत' इति लोपस्तु देवायेत्यत्र न अकि कृते एतः पदान्तत्वाभावादिदमवधेयम् । यदि च व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणमित्याश्रियेत तर्हि ङेरगित्यपि न्याय्यमेव ।

**एस्भि बहुत्वे ॥ अकारस्यैत्वं भवति सकारभकारादौ विभक्तौ बहुत्वे सति ॥ देवेभ्यः ॥ १३ ॥**

( सु० ) ए स्भि बहुत्वे ॥ अकार एकारो भवति बहुत्वे वर्तमानेषु सकारभकारादिषु स्यादिषु परेषु ॥ अकार इति किम् । हाहाभ्यः ॥ बहुत्वे किम् । देवस्य ॥ स्यादिष्विति किम् । पचध्वम् ॥ १३ ॥

( त० ) ए स्भि बहुत्वे इति ॥ स्भीति सप्तम्यन्तम् । स् च भ् च स्भ् तस्मिन् स्भि । अतः किम् । हरिभ्यः ॥ तपरः किम् । हाहाभ्यः ॥ स्भीति किम् । देवानाम् ॥ ननु स्भीति किम् । न च देवानामित्यत्रातिप्रसङ्गः । तत्र परत्वान्नामीति दीर्घेण बाधात् । देवानित्यादौ तु शसीत्यनेन । अथ देवा इत्यत्रातिप्रसङ्गः स्यादिति चेन्न । तद्वारणाय रैस्भीति सूत्रात् भीत्यस्यानुवृत्तेः सत्त्वात् अथानन्तरत्वादद्भीत्यतो भीत्यस्यैवानुवृत्तिः स्यादिति चेन्न, इच्छार्थेष्विति ज्ञापकात् ॥ अथवा देवा इत्यत्रापि सवर्णदीर्घः पूर्वोऽपि 'झवे जबाः' इत्यादिनिर्देशेन क्वचित्पूर्वेणापि परबाधस्येष्टसिद्ध्यर्थमभ्युपगमात् । तस्माद्व्यर्थं स्भीति । अत्राहुः । देवपूजा इत्यादौ पूर्वपदस्थस्यैव वारणाय स्भीत्यावश्यकमिति तन्नेति वृद्धाः । विहितविशेषणाश्रयणात् । नाम्नो विहिते बहुत्वे वर्तमाने पर एत्वमित्यभ्युपगमात् । अन्ये तु बहुत्वविशेषणार्थं पुनः स्भीत्युक्तम् । तेन बहुत्वे वाच्ये सति विहितो यः सकारो भकारश्च तस्मिन् परतो नाम्नोऽत एत्वम् । तेन सोमं सुनोतीति सोमसुत् तमाचक्षते सोमसयन्ति ते सोमस इत्यत्र नेत्याहुः । तन्नेति नव्याः स्याद्यनुवृत्त्यैतद्वारणसंभवात् । अत्रोच्यते–रैस्भीत्यत्र नकारोऽपि द्रष्टव्यो नादावपि स्यादावात्वमित्यर्थः । तथा च श्रियाणामिति ( पराणामि ) सिद्ध्यति । अत्रार्थे इदं स्भिग्रहणमेव लिङ्गम् । यदि तस्याप्यत्रानुवृत्तिः स्यात्तदा देवानामित्यत्राप्येत्वं स्यात् । नामीति तु हरीणामित्याद्यर्थं स्यात् । ततस्तन्निवृत्त्यर्थं पुनः स्भिग्रहणस्यावश्यकत्वात् ॥ १३ ॥

**ङसिरत् ॥ अकारात्परो ङसिरद्भवति ॥ देवात् , देवाभ्याम् , देवेभ्यः॥**

( सु० ) ङसिरदिति ॥ आदन्तान्नाम्नः परो ङसिरत् स्यात् ॥ अतः किम् । वातप्रम्यः, ग्लावः ॥ तपरः किम् । हाहाः ॥ ननु ङसेरदादेशे कृते 'यस्य लोपः' इत्यतो लोपः स्यात् । उच्यते–स्यादौ 'यस्य लोपः' इत्यस्याभावो ज्ञापितोऽकारविधानेन । अन्यथा ङसिस्त इत्यवक्ष्यत् ॥ यद्वा तद्धितप्रकरणादीपीति सूत्रारम्भाच्च नात्र यस्य लोपः(क)। देवादित्यत्र 'वाऽवसाने' इति जबत्वचपत्वे 'हसेऽर्हे हसः'' इति दतयोर्द्वित्वे रूपचतुष्टयं बोध्यम् १४

( त० ) ङसिरत् ॥ अत्राप्यत इत्यनुवर्तते । अतो वातप्रम्य इत्यादौ न । तपरत्वात् हाहा इत्यत्र न । अत्रापि ङकारो व्यर्थ इत्युक्तिः पूर्वोक्तयुक्त्यैव निरसनीया । न चाति कृते 'यस्य लोपः' इत्यनेनाकारस्य लोपोऽस्त्विति वाच्यम् । अकारोच्चारणसामर्थ्यात्स्यादौ न 'यस्य लोपः' इति प्रवर्तते । अत्राहुः । कार्ये ''सिस्योः' 'शेषाः' इत्यादिनिर्देशात् तद्धितप्रकरणाद्वा यस्य लोपो न । एवं स्थिते लाघवे विशेषाभावात् ङसिस्त इति न सूत्रि

(क) वासुदेवस्यापि मतमेतत् । तदाह प्रसादे–अद्विधानसामर्थ्यात्समानादित्यादिनिर्देशात्तद्धितप्रकरणत्वाद्वानुवृत्तेश्च विभक्तिस्वरे यस्य लोप इत्यलोपाभावः' । वावसाने इत्यत्र वाशब्दस्य व्यवस्थितार्थत्वाद्देवादित्यादौ तदभावः ।

तम् । तत्रोच्यते । सेरत इत्येव सुवचम् । न च देव इत्यत्राव्याप्तिस्त्वन्यादेरिति लिङ्गेनातिव्याप्तिवारणात् । न चामर्थं तदिति वाच्यम् । छ इत्यादिलिङ्गात् । अथ देवस्येत्यत्रातिप्रसङ्गः तत्र ङस् स्येति विशेषसूत्रेण बाधात् इकारसंहितानुकरणसंभवात् ॥ १४ ॥

**ङस् स्य** ॥ अकारात्परो ङस् स्यो भवति ॥ देवस्य ॥ १५ ॥

( सु० ) **ङस् स्य** ॥ अतो ङस् स्यः स्यात् । अत इति किम् । वातप्रम्यः ॥ तपरः किम् । हाहाः ॥ १५ ॥

( त० ) **ङस् स्येति** पदद्वयमिति प्रथमान्तम् । अतः किम् । वातप्रम्यः ॥ तपरः किम् । हाहाः ॥ अत्राहुः । स्वरादित्यादिलिङ्गात्तदन्तलाभः । आदिति लिङ्गाच्च तल्याप्तीति ज्ञापकद्वयबलमाश्रित्य देवस्य अस्येत्यादिसिद्धिरिति । वस्तुतस्तु तदन्तलाभाय तल्लाभाय च ज्ञापकद्वयानुसरणक्लेशोऽपार्थ एव, देवस्येत्यादौ ङसोऽतः परत्वसम्भवात् । न च विहितविशेषणादतोऽविहितत्वाभावेन देवस्येत्यादिसिद्धिर्न स्यादिति शङ्कनीयं तस्येत्यादिसिद्ध्यर्थं विहितविशेषणानाश्रयणात् ॥ १५ ॥

**ओसि** ॥ अकारस्यैत्वं भवति ओसि परे ॥ देवयोः ॥ १६ ॥

( सु० ) **ओसि** ॥ अत एकारः स्यादोसि परे ॥ अत इति किम् । हर्योः ॥ तपरः किम् । हाहौः ॥ ओसि किम् । देवस्य ॥ १६ ॥

( त० ) **ओसि** ॥ अत्रापि स्याद्यधिकारादेव ओस्त्र इत्यादौ नातिप्रसङ्गः ॥ मा ङसः ओघः ॥ अत इति किम् । भान्वोः ॥ तपरः किम् । हाहौः ॥ ओसीति किम् । देवस्य॥१६॥

**नुडामः** ॥ समानादुत्तरस्यामो नुडागमो भवति पुंसि तु ह्रस्वादेव ॥१७॥

( सु० ) **नुडामः** ॥ आमो नुडिति कर्तव्ये नुटः पूर्वोच्चारणं प्राथम्यार्थम् । यत्र नुडन्यच्च प्राप्नोति तत्र प्रथमं नुडेव भवति । तेन स्त्रीणां वारीणामित्यादावुभयप्रसङ्गे परावियनुमौ बाधित्वा नुडेव(क) । अत एव प्राक् प्रायशो दृश्यतामित्युक्तेर्बीजम् । तत्र क्वचित्पूर्वेणापि नुटा परस्य बाधः क्रियत इति तदर्थः । किंच मण्डूकप्लुत्या 'ङ्णो ह्रस्वात्' इति सूत्राद् ह्रस्वादिति पदं पुंस इति चात्रानुवर्त्य वाक्यभेदेन संबध्यते । समानादित्यनुवृत्तं समानान्तान्नाम्न आमो नुट् स्यात् । पुंल्लिङ्गे तु ह्रस्वान्तान्नाम्न एव परस्यामो नुट् न दीर्घान्तान्नाम्न इत्यर्थः(ख) ॥ समानादिति किम् । रायाम् । भवताम् ॥ ह्रस्वान्तात् किम् । हाहाम् । पुंस इति किम् । वातप्रम्याम् ॥ नाम्न इति किम् । कारयांचकार ॥ पचतितरामित्यत्र तुकारानुबन्ध आम् ज्ञेयः । न नुट् 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति वचनात् । ङेरादेशस्यामस्तु न नुट् परत्वेनायङ्भ्यां बाधनात् स्त्रियामित्यादिनिर्देशाच्च ॥ १७ ॥

( त० ) **नुडामः** ॥ नुट् आम इति छेदः ॥ अत्र समानादित्यनुवर्तते । तेन रायामित्यादौ न । अत्राहुः । अत्राधातोरित्यनुवर्तनीयं श्रियामित्याद्यर्थं तत्र परेणेया बाधात् ।

---

(क) 'अनुवाद्यमनुक्त्वा तु, न विधेयमुदीरयेदिति'न्यायेन पूर्वमामो विधानं युक्तमित्याशङ्कते—आमो नुडित्यादिना । नुटः नुडागमस्य, पूर्वोच्चारणं प्रथमविधानम्, प्राथम्यार्थं यत्र कार्यद्वयप्राप्तिरस्ति तत्रादौ नुट् कार्य्यं इत्येवमर्थमित्यर्थः। उक्तं व्याचष्टे—यत्रेति । लक्ष्यं दर्शयति—तेन स्त्रीणां वारीणामिति।

( ख ) पुंलिङ्गभिन्ने तु लयादौ समानादुत्तरस्यामो नुडागमो भवतीत्यर्थः ।

( सु० ) घौ ॥ इदुदन्तस्य एओ भवतः घौ परे ॥ कृताकृतप्रसङ्गित्वेन नित्यत्वाच्च पूर्वमेत्वमोत्वं च ॥ ततः 'समानाद्धेः' इति धिलोपः ॥ इदुदन्तस्य किम् । हे ग्लौः ॥ तपरत्वं किम् । हे वातप्रमीः । हे हूहूः ॥ ४९ ॥

( त० ) घाविति ॥ अत्र एओ धिजसोरिति जस्भ्योरिति वा एकयोगो न कृतो यथाक्रमं स्थानिनोरादेशविधानशङ्कानिरासाय ॥ यत्तु योगविभागो विषयसप्तमीलक्ष्यार्थ इति तन्न विषये सप्तम्या अविधानादित्युक्तं तच्चिन्त्यम् । विषये सप्तम्या बहुस्थले दर्शनात् ॥ किं च यत्र प्रत्ययोत्पत्तेः पूर्वमेव कार्यं विधीयते तत्रैव विषयसप्तमीति व्यवहारः प्राचाम् ॥ यथाऽर्धधातुके 'ब्रूओ वच्' 'चक्षिङः ख्याञादयः' एवं वदता त्वया स्वयमेव विषयसप्तम्याः स्वीकृतत्वात् ॥ ४९ ॥

**टा नाऽस्त्रियाम्** ॥ इकारान्तादुकारान्ताच्च परष्टा ना भवत्यस्त्रियाम्(क) ॥ हरिणा हरिभ्याम् , हरिभिः ॥ ४६ ॥

( सु० ) टा नाऽस्त्रियाम् ॥ इदुद्भ्यां परष्टा ना स्यात् । स्त्रीलिङ्गे तु न ॥ किंच पुंसीत्युक्ते तु अदसष्टाप्रत्यये त्यदाद्यत्वे मत्वे च अम टा इति स्थिते इनादेशतः परत्वादन्तरङ्गत्वाच्च 'मादू' इत्युत्वे पुँल्लिङ्गे सिद्धममुनेति । क्लीबे त्वमुनेति न सिद्ध्यति । 'नामिनः स्वरे' इति नुमि कर्तव्ये उत्वस्यासिद्धत्वात् । अतोऽस्त्रियामित्युक्तम् ॥ इदुद्भ्यां किम् । गवा ॥ तपरत्वं किम् । वातप्रम्या । हूहा ॥ ४६ ॥

( त० ) टा नाऽस्त्रियामिति ॥ इदुद्भ्यामित्यत्राप्यनुवर्तते । अत्र अस्त्रियामिति नञं प्रश्लिष्य छेदः । नञः प्रश्लेषे च व्याख्यानमेव शरणमिति तु वृद्धाः ॥ ननु पुंसीत्येव किमिति न सूत्रितं लाघवात् । अत्राहुः । अमुना कुलेनेत्यत्र उत्वादन्तरङ्गत्वादिनादेशः स्यादतो नाम्यभावान्नुमावे रूपसिद्धिः स्यादित्यस्त्रियां ग्रहणसामर्थ्याद् दुर्बलमप्युत्वं प्रवर्त्य नाभावो भवतीत्युक्तं कैश्चित्तन्न, इनादेशत उत्वस्यान्तरङ्गत्वात् । अदसृशब्दमकारान्तात्परवर्णं ह्यपेक्षते उत्वम् । इनादेशस्तु नाम स्यादि अकार टाचतुष्टयापेक्षत्वेन बह्वाश्रयत्वात् बहिरङ्गः ॥ किंच कृतेऽपीनादेशे स्थानिवद्भावेन टात्वमाश्रित्य नाप्रवृत्तेरिति पूर्वपक्षस्योत्तरम् । उत्तरार्थमस्त्रियांग्रहणं सूत्रकृता कृतम् । कथम् मु इति सूत्रान्तरम् । मुशब्दात्परष्टा ना भवति मुशब्दश्चादस एव गृह्यते नान्यस्य पूर्वसूत्रेणैव सिद्धेः । तथा चात्र सूत्रे पुंसीत्यस्यानुवृत्तौ क्लीबे अमुनेति रूपसिद्धिर्न कर्तव्येति उत्वस्यासिद्धत्वात् । अस्त्रिया-

---

(क) अत्र माधवः । अत्र सेनेति निर्देशादस्त्रियामिति प्रश्लिष्टं नञस्तीति मत्वाह—अस्त्रियामिति । किमर्थमिदमुच्यतेऽस्त्रियामिति नापुंसीत्युच्येत । क्लीबेऽपीष्टत्वादमुनेति । नन्वत्र नामिनः स्वरे इति नुमि नाभावेऽपि समानमेवेति नुमेवास्तु । नैवम् । अमति ह्यस्त्रियां ग्रहणेऽमुनेत्यत्रादसष्टाप्रत्यये त्यदाद्यत्वे मत्वे च अमटेति स्थिते परत्वान्नित्यत्वाच्च 'माद्' इत्युत्वं प्राप्नोति । प्रकृतिप्रत्ययाश्रितत्वेनान्तरङ्गत्वादिनादेशश्च तत्र बलीयस्त्वादिनादेश एव स्यात् । यत उक्तम् । परं विदुः पूर्वपरोपपत्तौ परस्य नित्यस्य च नित्यमेव । नित्यान्तरङ्गोपगमेऽन्तरङ्गस्तस्मादिविधिः प्रातिपदो बलीयानिति । अत एव वक्षति-'अमुद्रि' इत्यात्वं पश्चादुकार इति । तदेवमिनादेशे पत्वे पश्चादुत्वं चामुनेति स्याद् इति कुत्र नुम् स्यात्। कुत्रतराम्र नाभावः । सति पुनरस्त्रियां ग्रहणे क्लीबे नुमा बाधितसकलविषयो नाभावः स्वसामर्थ्यात्तु दुर्बलमप्युत्वं प्रवर्त्य प्रवर्तते । तदेवं क्लीबे प्राक्प्रवृत्त्या जातदुर्बलमुत्वं पुंस्यपि प्रागेव प्रवर्तते ततो नाभावः । अत एव वक्षति, मत्वे उत्वे च कृते टानास्त्रियामिति ।

मित्यनुवृत्तौ तु नपुंसकेऽप्यस्य प्रवृत्तिरिति ॥ अत्रेदं वक्तव्यम् । मु इति सूत्रान्तरकल्पनापेक्षया अस्त्रियामित्यस्यैव तज्ज्ञापने लाघवात् ॥ इदुद्भ्यां किम् । गवा ॥ तपरत्वं किम् । हूहा ॥ टा किम् । हरिभ्याम् ॥ ४६ ॥

**ङिति ॥ इकारान्तस्योकारान्तस्य च ङिति परे एकार ओकारश्च भवति(क) ॥ हरये, हरिभ्याम् , हरिभ्यः ॥४७॥**

( सु० ) ङिति ॥ इदुदन्तस्य नाम्न एओ स्याताम् । ङ् इत् यस्य स ङित् तस्मिन् ङिति । ङिति स्यादौ ॥ ङिति किम् । हरिभ्याम् ॥ स्यादौ किम् । हरिरिवाचरतीति हरियति । आचारे क्विप् । ततः 'प्रत्ययान्तात्' इति स्त्रियामङ् । हर्या ॥ नाम्नः किम् । नुतः, नुवन्ति (ख) ॥ किंच ङ् चासौ इच्च ङित् तस्मिन् ङिति इति कर्मधारयकरणे इत्संज्ञकङकारादौ प्रत्यये परे इत्यर्थो भवति । तदा नाम्नः स्यादावित्येतयोरनुवृत्तिर्न कर्तव्येति । 'लित्पुषादेर्ङः' इत्यादौ ङप्रत्यये तु परत्वादियुवौ । अशिश्रियत्, अदुद्रुवदित्यादि ॥४७॥

( त० ) ङितीति ॥ अत्र 'इदुद्भ्याम्' 'एओ जसि' इति चानुवर्तते । तत्र विभक्तिविपरिणामेन व्याख्यानम् ॥ ङ् इद्यस्य स ङित् तस्यिन्ङिति ॥ ङिति किम् । हरिभ्याम् ॥ ङिच्च स्यादिरेव गृह्यते न त्वन्यः ॥ ४७ ॥

**ङस्य ॥ एदोद्भ्यामुत्तरस्य ङसिङसोरकारस्य लोपो भवति ॥ हरेः, हर्योः, हरीणाम् ॥ ४८ ॥**

(सु०) ङस्य ॥ एदोतोऽत इति सूत्रमनुवर्तते लोपश् इति च । एदोतः परस्य ङस्याकारस्य लोपश् स्यात् । ङकारस्य इत्संज्ञायामकारः परत्वेन लभ्यते ॥ एदोत इति किम् । रायः । ग्लावः ॥ अस्येति किम् । हरये । भानवे ॥ ङस्यातः किम् । हरयः । भानवः ४८

( त० ) ङस्येति ॥ ङकारग्रहणेन ङसिङसोर्ग्रहणम् ॥ ४८ ॥

**ङेरौ ङित् ॥ इदुद्भ्यामुत्तरस्य ङेरौ भवति स च ङित् ॥ ४९ ॥**

( सु० ) ङेरौ ङित् ॥ इदुद्भ्यां परस्य सप्तम्येकवचनस्य औः स्यात्स च ङित्संज्ञकः ॥ ननु 'ङेरौ' इत्येव वक्तव्यं किं ङिच्छब्देन । उच्यते । ङिद्ग्रहणम् 'ऋतो ङ डः' इत्यादौ ङिदित्यस्यानुवृत्त्यर्थम् ॥ इदुद्भ्यां किम् । रायि । गवि ॥ तपरत्वं किम् । वातप्रमी । हूहि ॥ ४९ ॥

( त० ) ङेरौ ङिदिति ॥ इदुद्भ्यां किम् । गवि ॥ तपरत्वं किम् । वातप्रमी ॥ ङेः किम् । हरिभ्याम् ॥ अमादावित्यादिनिर्देशेन च औ ङिदित्ययं नादेशः । अत एव ङेरित्यनेन चतुर्थ्येकवचनस्य न ग्रहः । न च ङिति टेरित्यत्र ङित्संज्ञकस्यैव ग्रहणं न तु यौगिकस्य कृत्रिमत्वात् । तथा च सेर्डाऽधेरित्यत्र डकारस्य ङित्संज्ञा न प्रयोजनाभावादिति चेत्सत्यम् स्त्रियामिति निर्देशेन 'कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणम् इत्यस्याप्रवृत्तेः । तथा हि । स्त्यायतेः ड्रटि स्त्रीति रूपं तच्चैवं न स्यात् ॥ ङेरौविरयेव किमिति न सूत्रितमिति चेन्न उत्तरार्थं ङित्करणम् । ऋतो ङ डरित्यादावावश्यकत्वात् । अथ तत्रापि ङौ इति-

---

( क ) ङितीति सूत्रस्य वृत्तौ स्यादावित्यधिकं ङितीत्यस्य विशेषणम् । टीकायां तस्य व्याख्यादर्शनात् । स्यादाविति विशेषणस्याभावे 'हर्या' इत्यादौ दोषापत्तेः ।

( ख ) नुतः, नुवन्तीत्यादौ इदुदन्तस्य नाम्नो विशेषणात् नोकारप्रसङ्गः ।

त्येव किमिति न कृतमिति वाच्यम् । ङावित्यत्र घेररित्यनुवर्त्तते । तथा च ङरि कृते ङरि-त्येवात्रानुवर्त्तते । तथा च ऋकारस्य ङरि कृते टिलोपे पितरीत्यादि रूपं न सिद्ध्येत् । अप् कर्त्तरीति लिङ्गेन तत्र टिलोपः स्यादिति न वाच्यम् । पञ्चस्विति सूत्रेऽपि ङरोऽनुवृत्तौ ज्ञापकाभावात् टिलोपे पितराविस्यादिरूपं न सिद्धेत् इति ङिदित्युक्तम् ॥ यदि तु ङिति प्रत्यये लोप इति व्याख्यायते तदा न कर्तव्यं भवति ॥ ४९ ॥

**ङिति टेः** ॥ ङिति परे टेर्लोपो भवति(क) ॥ हरौ, हर्योः, हरिषु ॥ एवमग्नि–गिरि–रवि–कविमुन्यादयः ॥ उकारान्ता विष्णु–वायु–भानु–गुर्वाद-योऽप्येवं ज्ञेयाः ॥ भानुः, भानू, भानवः ॥ ५० ॥

( सु० ) ङिति टेः ॥ नाम्नष्टेर्लोपः स्यात् ङिति परतः ॥ अव्ययानां टेर्लोपश्च । तद्धितस्य ये स्वरे च । तथा बहिर्भवो बाह्यः । पुनः पुनरेव पौनःपुन्यम् । ण्यः ॥ कुतः कुत आगतः कौतस्कुतः । कारकादित्यण् ॥ ५० ॥

( त० ) ङिति टेरिति ॥ ङ् इत् यस्य स ङित् तस्मिन् ङिति ॥ अत्राहुः । अत्र वाक्यार्थत्रयम् । नाम्नो लोपो भवति ङिति परे इत्येकम् । तथा च विंशतेः पूरण इति वाक्ये अप्रत्यये 'यस्य लोपः' इतीकारलोपेऽतो लोपे विंश इति सिध्यति । ततः टेः । नाम्नः तथा टेर्लोपो भवति यकारे स्वरे चेति द्वितीयम् । तथा च लघिष्ठः बहिर्भवो बाह्य इत्यादिसिद्धिः । ततः टेर्लोपो भवति ङितीति तृतीयम् । अत्र तद्धिते यस्वरे इति न सम्बध्यते विश्लेषावधावित्यादिनिर्देशात् । तत्र ङरौ ङिदिति न तद्धित इति । अत्रेदं संप्रधार्यम् । तृतीयवाक्ये नाम्न इति संबन्धे ग्लौ तितउरित्यादि न सिध्यति । तथा हि । स्त्यैधातोर्ङ् टि कृते टिलोपावसरे नामत्वाभावात् । तितउरित्यत्रापि तनोते र्डउः सवचेति डउप्रत्यये टिलोपावसरे धातुत्वानपायेन नामत्वाभावात् । तस्मादत्र न नाम न संबध्यते। किंतु ङितीति परसप्तम्या पूर्वमात्रमाक्षिप्यते तथा च सर्वत्र निर्वाह इति दिक् ॥ ५० ॥

**सेर्डाऽधेः** ॥ सखिशब्दात्तदन्ताच्च परस्य सेरधेर्डा भवति(ख) ॥ सखा ॥५१॥

( सु० ) सेर्डाऽधेः ॥ सखिशब्दात्सखिशब्दान्ताच्च नाम्नः परस्य सेर्डा स्यात् । 'ऐ सख्युः' इति सूत्रे विपरीतनिर्देशात्तदन्तग्रहणम्(ग) ॥ कीदृशस्य सेः । न धिः अधि-स्तस्याधेर्धिभिन्नस्येत्यर्थः ॥ समानं ख्यायते जनैरिति सखा । 'नीव्यादयः' इति निपात-नात्ख्याधातोरिप्रत्ययो या इत्यस्य निवृत्तिश्च ॥ तदन्ते तु शोभनः सखा सुसखा ॥ धौ तु "धौ" इत्येकारो न तु डा आधेरिति निषेधात् ॥ ५१ ॥

---

( क ) 'ङरौ ङित्' इति सूत्रे ङित्करणस्य फलं कथयति–**ङिति टेरिति** । टिरिति 'अन्त्यस्वरादिः' इति सूत्रप्रतिपाद्यो ज्ञेयः ।

( ख ) 'ऐ सख्युः' इत्यतः सख्युरिति षष्ठ्यन्तमनुवर्त्तमानं सेरित्यनेन सम्बन्धात्सखिशब्दार्थस्यैकत्वे वाच्ये विहितस्य सेरित्यर्थं प्रत्याययतीति मत्वाह **सखिशब्दस्येति** । तदर्थस्यैकत्वे विहितस्येत्यर्थः । तेन शोभनः सखा यस्य सः सुसखिरित्यत्र न भवति, अन्यपदार्थस्यैकत्वे सेर्विहितत्वात्। गौणमुख्यन्यायेन वात्र न भवति । अत एव च शोभनः सखा सुसखेत्यत्र भवतीति माधवः । अत एव 'तदन्तादि'ति चिन्त्यम् ।

( ग ) ननु सूत्रात्तदन्तसखिशब्दादिति नार्थोपलभ्यते वृत्तौ सः कुतः, इत्याशङ्कायामाह **ऐसख्युरिति**। 'सख्युरे' इति नोक्त्वा विधेयस्य पूर्वविधानादयमर्थो लभ्यत इति भावार्थः ।

( त० ) सेर्डाऽधेरिति ॥ अधेरिति छेदः धिभिन्नस्य सेर्डा भवतीत्यर्थः ॥ ऐ सख्युरित्यतः सख्युरित्यनुवर्तते । तच्च षष्ठ्यन्तमर्थवशाद्विपरिणम्यते । "सख्युयुरै" इति कर्तव्ये विपरीतनिर्देशात्तदन्तलाभ इत्यभिप्रेत्याह—तदन्तादिति ॥ सख्युः किम् । हरिः ॥ सेः किम् । सखिभ्याम् ॥ अधेः किम् । हे सखे ॥ ९१ ॥

**ऐ सख्युः** ॥ सखिशब्दस्य तदन्तस्याप्यैकारादेशो भवत्यधिषु पञ्चसु ॥ सखायौ, सखायः । सखायम् , सखायौ, सखीन् ॥ ५२ ॥

( सु० ) ऐं सख्युः ॥ तस्मादित्यनुवर्तते । तस्य सखिशब्देन विशेषणात्तदन्तविधिः सखिशब्दस्य सखिशब्दान्तस्य च नाम्नः ऐः स्यात् । पञ्चसुशब्दः प्राक् स्यादिष्वेव रूढः(क) । सौ तु परेण डादेशेन बाधितत्वादैर्न॥ अथवा सेर्डादेशे प्रकृतेरैत्वे च कृते टिलोपः । विशेषाभावात्तदन्ते सुसखायौ । सख्युरिति षष्ठीनिर्दिष्टत्वेनान्त्यस्येकारस्य ऐः। सखायौ॥९२॥

( त० ) ऐ सख्युरिति ॥ अत्राधेरित्युत्तरसूत्रादपकृष्यते । तथा चाधिप्रत्ययान्तस्य सखिशब्दस्यैकारादेशः पञ्चस्विति व्याख्येयम् । अथ औप्रभृतीनि पञ्च वचनानि कुतो न गृहीतानि इति न वाच्यं पञ्चसुशब्दः स्यादिष्वेव रूढ इति व्याख्यानात् ॥ यद्वा अधेरिति पर्युदासात्स्यादिग्रहः ॥ ९२ ॥

**सखिपत्योरीक्** ॥ सखिपतिशब्दयोरीगागमो भवति टाङेङिषु परतः दीर्घत्वान्ना न भवति ॥ सख्या । सख्ये ॥ ५३ ॥

( सु० ) सखिपत्योरीगिति ॥ एतयोरीक् स्यात् टाङेङिषु ॥ कित्त्वादन्ते । टाप्रत्यये ईका व्यवधानात् टा नाऽस्त्रियामिति न प्रवर्तते (ख) । सवर्णे दीर्घे यत्वे च सख्या । सख्ये । ङौ तु औत्वे टिलोपे च कृते पश्चादेकदेशविकृतमिति न्यायेनेग्यत्वे । सख्यौ ॥ सखिपत्योर्विशेषणस्य विवक्षणात् तदन्तविधिर्न । तेनातिसखिना भूपतिना इत्यत्र नेक् ॥९३॥

( त० ) सखिपत्योरीगिति ॥ अत्र ए टाङयोरिति पूर्वसूत्रात् टाङ्योरित्यनुवर्तते । तथा च टाङ्योरेवानेन ईक् । सख्ये इति सिद्ध्यर्थं तु 'ङे' इति सूत्रान्तरम् । तथा च ङयि परे सखिपत्योरीगागमो भवति इति तस्यार्थः ॥ दीर्घविधिर्नात्वादिप्रतिषेधार्थं इत्यभिप्रेत्याह—दीर्घत्वादिति ॥ यद्यपि ह्रस्वकरणेऽपि विधानसामर्थ्यान्नात्वादिप्रतिषेधो लभ्यते तथापि ङौ ह्रिः सवर्णदीर्घे सखी इत्येव स्यादिति दीर्घकरणात्प्रथममौत्वटिलोपयोः प्रसक्तयोः पश्चादेकदेशविकृतन्यायेन ईगागमे कृते सख्याविति रूपसिद्ध्यर्थं दीर्घविधानस्या-

---

( क ) रूढः । 'रूढः सङ्केतवन्नाम सैव संज्ञेति कीर्त्यते' । इति शब्दशक्तिप्रकाशिकायां जगदीशः । अत औप्रभृतीनि पञ्चवचनानि न ग्राह्याणि ॥ 'षष्ठीनिर्दिष्टस्यादेशस्तदन्तस्य ज्ञेय' इति वचनादादेशोऽन्त्यस्येकारस्य बोध्यः। सखिशब्दस्य वैदिकमते स्वयं विशेषः—'सखाया' इति। तथा च सूत्रम्—"द्विवचनस्यावा छन्दसि"। द्विवचनस्य औ आ भवति वेदे ॥

( ख ) अत्र माधवः । मूले—दीर्घत्वादिति । अयमाशयः—यदि ह्रस्व एवेक् क्रियते, तर्हि सखि इ टा इति स्थिते सवर्णदीर्घं बाधित्वान्तरङ्गत्वात् 'टा नाऽस्त्रियाम्' इति नाभावः प्राप्नोति। ईकि पुनःसत्यसति वा सवर्णदीर्घे सवर्णदीर्घत्वान्नास्ति नादेशः। अत्र कश्चित्—नैतत् सद्विचारयुक्तम्, इहापि परिभाषाया अनित्यत्वमाश्रियते ज्ञापकानुसारेण, तच्च ज्ञापकं 'कार्य्यायेत्', एतदर्थमेव सूत्रस्य गुरुकरणम्। अन्यथा कृत एवावक्ष्यत इति ।

वश्यकत्वात् । अत एव ईदिद्वा न कृतः । 'सखिपत्योर्या' इत्यपि न सूत्रितम् । सख्या सख्ये इति सिद्धावपि ङौ सख्यि इति रूपापत्तेः । अत्र नाम्नो विशेषणस्याभावान्न तदन्तलाभः ।९३।

ऋङ् ङे ॥ सखिपतिशब्दयोर्ऋगागमो भवति ङसिङसोरकारे परे(क) ॥ सख्यृ अस् इति स्थिते ॥ ५४ ॥

( सु० ) ऋङ् ङे ॥ सखिपत्योर्ऋक् स्यात् । ङा उपलक्षितः अः ङस्तस्मिन् ङे ॥९४॥

( त० ) ऋङ् ङे इति ॥ ऋक् ङे इति छेदः । ङे इति सप्तमी । ङोपलक्षितः अः ङः तस्मिन् ॥ तेन ङसिङसोरकारो लभ्यते ॥ 'ङङः' इति सूत्रयोगे ईगनुवृत्त्या ङितीत्येत्वस्य बाधे रूपसिद्धावपि गुरुकरणमागमजस्यानित्यत्वज्ञापनार्थम् । तेन 'सखिना वानरेन्द्रेणे' ति अन्यत्र पतिना सहेति च संगच्छते ॥ ङे किम् । सखीन् ॥ सखिपत्योः किम् । वातप्रम्यः९४

ऋतो ङ उः ॥ ऋकारान्तात्परस्य ङसिङसोरकारस्योकारो भवति । स च डित् ॥ सख्युः । ङेरौ डिदित्यौकारे कृते सखिपत्योरीक् । सख्यौ ॥ शोभनः सखा सुसखा, सुसखायौ, सुसखायः । सुसखीन् । सुसखये । सुसखेः । सुसखौ ॥ अतिशयितः सखा अतिसखा । परमः सखा परमसखा। सखीमतिक्रान्तोऽतिसखिः । इह डैत्त्व न । "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति" न्यायात् ॥ पतिः, पती, पतयः। पतिम् , पती, पतीन् । पत्या । पत्ये । पत्युः । पत्या ॥ ५५ ॥

( सु० ) ऋतो ङ उः ॥ डिदित्यनुवर्तते(ख) । ऋदन्तान्नाम्नः परो ङ उः स्यात् ॥ स च डित् । नाम्नः किम् । आरत् । डारति लिङ्गात्केवलादपि ऋत उर्भवति । ऋगागमे कृते यत्वोत्वटिलोपाः । सख्युः । तदन्ते यथा । शोभनः सखेति प्रादिसमासे तत्पुरुषे 'राजाहः सखिभ्य' इति टप्रत्ययो न पूजार्थोपपदे निषेधात् । इहैडात्वयोः प्रवृत्तिस्तदन्तग्रहणात् । सुसखिशब्दस्य पञ्चसु सखिवद्रूपम् । शेषं हरिवत् ॥ एवमतिशयितः सखेति अतिसखा । प्रादिसमासोऽत्र । परमः सखा यस्य स परमसखेति बहुव्रीहिः । कर्मधारये तु टप्रत्ययेन भाव्यम् । गौणत्वेऽप्यैडात्वे भवतः । अतिदध्नेत्यादावद्यान्ङनामितिवत् ॥ सखीमतिक्रान्तोऽतिसखिः । 'अत्यादयः क्रान्ताद्यर्थे' इति तत्पुरुषः अन्यार्थे इति ह्रस्वत्वेन सखिशब्दस्य लाक्षणिकत्वात् टप्रत्यय एडात्वे च न । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न तु लाक्षणिकस्येति परिभाषणात् । लक्षणं च प्रतिपदं च लक्षणप्रतिपदे लक्षणप्रतिपदाभ्यामुक्तौ लक्षणप्रतिपदोक्तौ तयोः । द्वन्द्वान्ते श्रूयमाणत्वादुक्तशब्दः प्रत्येकं संबध्यते । लक्षणोक्तः प्रतिपदोक्त इति । लक्षणेन सूत्रेणोक्तो लाक्षणिक इकः । प्रतिपदोक्तस्य झटिति बुद्ध्यारोहो लाक्षणिकस्य तु लक्षणानुसंधानद्वारेण विलम्बि

---

( क ) ऋङ्कारेति । अत्र यदि ङ इति चतुर्थ्येकवचनमभिप्रेतं स्यात्तर्हि ङ इत्यस्यानुवृत्तेरेव पुनर्ग्रहणं न कुर्यात् । तस्मात् ङकारोपलक्षितः अः ङस्तस्मिन् ङे इत्यभिप्रेत्याह—ङसिङसोरकारे इति।

( ख ) ङेरौ डित्' इत्यतोनुवर्त्तते । सूत्रं व्याचष्टे—ऋदन्तादिति ।

तो गुणयारोहो भवतीत्यर्थः(क) । क्लीबे तु पूर्वेणापि नुमा परत्वाण्णेर्त्वस्य बाधः क्रियते 'प्रायशो द्रवयता'मित्युक्तत्वात् । यथा प्रियसखिनी, प्रियसखीनि । पतिशब्दस्य टाङेङसिङसङिषु सखिवद्रूपम् । शेषं हरिवत् ॥ ९९ ॥

( त० ) ऋतो ङुः उरिति । अत्र नाम्न इति ऋदन्तस्य विशेषणम् । स्यादेरिति ङस्य । तेन आरन् कर्त्रे ङवते इत्यादौ नातिप्रसङ्गः, सख्युरित्यादिलिङ्गाद्यनुरूपकवचनस्यादेशे लोपं च न निर्देशशङ्का ॥ ऋतः किम् । ग्लावः ॥ ऋतो डरिति सूत्रणीये ङग्रहणं वर्णमात्रविधौ यदादेशस्तद्वद्भवतीति न प्रवर्तते इति ज्ञापनाय । तथा हि । ऋतः अः डरिति छेदः । असमोम्तु परत्वाद्गुण एव स्थानिवद्भावेन प्राप्तोऽपि पञ्चमुग्रहणसामर्थ्यान्न । अन्यथा अर्वात्येवोच्येत । तथा च शस्यतिप्रसङ्गः । तत्रापि परत्वाच्छसीति दीर्घेण भवितव्यम् । दीर्घे कृतेऽपि यदादेशस्तद्वदित्यनेनोत्वेन भाव्यम् । एवं चोत्वे कृते यदादेशस्तद्वदित्यम् शसोरन्येत्यलोपो भविष्यति । इत्थं च कृताकृतप्रसक्तित्वेन नित्यत्वादतः पूर्वमलोपो भविष्यति । तथा च शस्यपि नातिप्रसङ्गनिःशङ्केति तज्ज्ञापकफलकमेव ङकारग्रहणमिति वृद्धाः ॥ अतिसखिरिति ॥ अन्यार्थे इति ह्रस्वः । अतिसखेरिति भाष्यप्रयोगादीदूद्न्तस्येत्यादिना ओकार्ये न । लक्षणप्रतिपदोक्तयोरिति ॥ सूत्रानुसंबन्धद्वारेण कृतं लाक्षणिकम् । झटिति बुद्ध्यारोहणं प्रतिपदोक्तम् ॥ ९९ ॥

## ( पतिः समासे हरिवत् ) भूपतये ॥ ५६ ॥

( मु० ) पतिः समासे हरिवत् ॥ पतिशब्दस्य रूपं समासे हरिवत्स्यात् ॥ समासाभावे शसादौ सखिवत् । भुवः पतिः भूपतिस्तस्मै भूपतये । समासत्वादत्र नेक् । कथं 'सीतायाः पतये नमः' । पराशरश्चाह—'नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ । पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते' इति (ख) ॥ १ ॥ उच्यते । पतिशब्दोऽयमा-

( क ) लक्षणेति । प्रकृतेऽप्रातिसखिशब्दस्य रूपस्य सामान्यतश्शास्त्राद्दुर्ज्ञेयत्वादिति यावत् । सखिशब्दस्तु नैवम् । ननु लाक्षणिकस्यापि ग्रहणं कुतो नेत्यत आह—लक्षणेति ।

( ख ) श्लोकेऽस्मिन् केचिद्विवदन्ते । नन्वस्य कोऽर्थ इति । तथाच—पतौ भर्तरि, नष्टे स्वात्मगोपनं कृते सतीत्यर्थः । नशधातोरदर्शनार्थत्वात् । मृते प्रेते सति । प्रव्रजिते प्रव्रज्याश्रमं गते सति 'यदहरेव विरजेत् तदहरेव प्रव्रजेत्' इति श्रुत्या वयस्यस्त्रीसद्भावेऽपि प्रव्रज्याश्रयणे न दोषः । क्लीबे पुंस्त्वहीने च सति । समुच्चयार्थश्चशब्दः । नारीणां युवतीनां स्त्रीणाम् । आसु पञ्चसु निरुक्तासु आपत्सु । अन्यः पतिरपरो भर्ता विधीयते प्रशस्यते । इति मतं केषाञ्चिन्नादरणीयम्, अयुक्तिसहत्वात् । अनुशासनविरोधात् । अभिप्रायानभिज्ञानात् । स्मृत्यन्तरविरोधाच्च । किं तत्? तथाहि—तादृशनार्य्यो दानकर्तृभावाद्दानयोग्यताभाव इति युक्तिविरोधः । पतिशब्दस्य सप्तम्यां पत्याविति रूपविधानात् 'पतौ—भर्तरीति' अनुशासनविरोधः । पद्यमिदं पराशरस्य वाग्दानाभिप्रायकमिति प्रकरणाज्ञानादभिप्रायानभिज्ञानम् । "मृते जीवति वा पत्यौ या नान्यमुपगच्छति, सेह कीर्तिमवाप्नोति मोदते चोमया सह" ॥ इति याज्ञवल्क्योक्तिविरोधात् स्मृत्यन्तरविरोधः । सोऽयं वादो नैयायिकैः प्रधानवादवत् यावद्यावद्वाच्यते तावत्तावत् प्रमाणवृत्तं बाधत इति ।

तर्ह्यस्य कोऽर्थ इत्यपेक्षायामाहुर्गुरुचरणाः—पतिमाचष्टे इति पतयति पतयतीति पतिस्तस्मिन् पतौ पतिसदृशे येन सह पाणिपीडनाय वाग्दानं भूतं तस्मिन्नित्यर्थः । अथाऽपताविति वा । 'एदोतोऽत' इति अकारलोपः । नष्टे सति मृते सति प्रव्रजिते सति क्लीबे च सतीति पूर्वोक्त एवार्थः । एतासु पञ्चविधास्वापत्सु नारीणामन्यः पतिर्विधीयत इति न पूर्वदोषाणां प्रसरो विधवाविवाहस्य च । एवं सत्यपि सा पाणिग्रहणविधौ नातिप्रशस्तेति देशविशेषाचारोऽपि ।

ख्यातप्रत्ययान्तः । यथा नाम्नो णिर्बहुलमिति णिप्रत्यये टिलोपे धातोरित्यौणादिके इप्रत्यये णेरिति णिलोपे च निष्पन्नोऽयं पतिशब्दः ॥ पतिमाचष्टे इति पतयति पतयतीति पतिः । लाक्षणिकत्वादस्य सखिवद्रूपम् । एवं 'कृष्णस्य सखिरर्जुनः' इति भारते । 'सखिना वानरेन्द्रेण' इति रामायणे च बोध्यम् ॥ ५६ ॥

( **आगमजमनित्यम्** ) सखिना । पतिना ॥ द्विशब्दो नित्यं द्विवचनान्तः ॥ ५७ ॥

( सु० ) आगमजमनित्यम् ॥ आगमाज्जातमागमजं कार्यमनित्यमस्ति इति न्यायाद्वा सखिनेत्यादौ नेक् । अथ ऋङ् के इत्यत्र ङ उरिति सूत्रणीये ईगनुवृत्त्या क्ङिति त्वेत्वस्य बाधे रूपसिद्धावपि गुरुकरणमेतत्सत्त्वे ज्ञापकं बोध्यम् ॥ ५७ ॥

( **त्यदादेष्टेरः स्यादौ** ) द्वौ । द्वौ । द्वाभ्याम् । द्वाभ्याम् । द्वाभ्याम् । द्वयोः । द्वयोः ॥ ५८ ॥

( सु० ) त्यदादेष्टेरः स्यादौ ॥ त्यदादीनां दशानां टेरत्वं भवति स्यादिविभक्तौ (क) ॥ विभक्ताविति किम् । त्यद् । तत् ॥ स्यादौ किम् । तस्यापत्यं तादः । तमिच्छतीति तद्यति । यः ॥ टेः किम् । सः य इत्यादावत्वे सवर्णे दीर्घे च सा या इति स्यात् ॥ द्विशब्दस्यात्वे सति सर्ववद्रूपम् ॥ ५८ ॥

( त० ) त्यदादेष्टेरः स्यादाविति ॥ त्यदादेः किम् । मरुतौ ॥ स्यादौ किम् । तस्यापत्यं तादः । तमिच्छति तद्यति । अत्र स धातुरित्यादिलिङ्गेनैव टेरेवात्वसिद्धौ टेरिति ग्रहणं टेरपि क्वचिद्विधानार्थम् । तेन किम्शब्दस्याकसहितस्य त्यदाद्यत्वे क इत्येव रूपम् ५८

( **संज्ञोपसर्जनयोर्नात्वम्** ) द्विर्नाम कश्चित् । द्विः, द्वी, द्वयः ॥ द्वावतिक्रान्तोऽतिद्विः । प्राधान्ये तु परमद्वौ ॥ त्रिशब्दो नित्यं बहुवचनान्तः । त्रयः । त्रीन् । त्रिभिः । त्रिभ्यः । त्रिभ्यः । ॥ ५९ ॥

( सु० ) संज्ञोपसर्जनयोर्नात्वम् ॥ संज्ञायां गौणत्वे च त्यदादेरित्यत्वं न भवति सर्वाद्यन्तर्गणकार्यत्वात् । कस्यचित् पुरुषस्य द्विर्नाम तस्य हरिवद्रूपम् । गौणेऽतिद्विस्तस्यापि हरिवद्रूपम् । प्राधान्ये मुख्ये तु परमौ च तौ द्वौ च परमद्वौ । कर्मधारयः । सर्ववद्रूपम् ॥

**त्रेस्त्रयङ्** ॥ त्रिशब्दस्यायङ् आदेशो भवति नामि परे ॥ तदन्तविधिरत्र(ख) । क्विदन्तस्यैव वक्तव्यः । त्रयाणाम् । परमत्रयाणाम् । त्रिषु ॥ कतिशब्दो नित्यं बहुवचनान्तः ॥ ६० ॥

( सु० ) त्रेस्त्रयङ् ॥ आम इत्यनुवर्तते । तच्च सप्तम्या विपरिणम्यते । तस्मादिति च । तस्य नाम्नस्त्रेरिति विशेषणे विशेषणत्वात्तदन्तविधिः । त्रिशब्दस्य त्रिशब्दान्तस्य

---

(क) दशानामिति । त्यद्, तद्, यद्, एतद्, इदम्, अदस्, द्वि, किम्, युष्मद्, अस्मद् इति।

(ख) त्रेरिति । बह्वर्थत्वेऽप्यस्य निर्देशस्य स्वरूपपरत्वात् त्रेरित्येकवचनमिति मत्वाह—त्रिशब्दस्येति । यद्येवं प्रियास्त्रयो यस्य सः प्रियत्रिः प्रियत्रीणामत्रापि प्राप्नोति शब्दस्वरूपस्य सत्त्वात् । मैवम्, त्रेरिति षष्ठ्या आमीत्यनेनापि सम्बन्धात् ।

त्रयङ् स्यादामि । गुरुत्वात्सर्वादेशे प्राप्ते ङिदादेशः अन्तस्य स्थाने भवतीतीकारस्या-यङ् । त्रेरित्येकवचननिर्देशस्त्वनुकरणत्वात् । तदन्त–प्रियाश्च ते त्रयश्च प्रियत्रयस्तेषां प्रिय-त्रयाणाम् । गौणत्वे नेति कश्चित् । तारतरौणादिका ड्रिप्रत्ययः । डित्वाट्टिलोपे त्रिशब्दः॥६०॥

( त० ) त्रेस्त्रयङिति । ननु त्रिशब्दस्य बहुवचनान्तत्वात् कथं त्रेरिति चेत्सत्यम् । त्रिशब्दस्त्रित्वविशिष्टवाचको बहुवचनान्तः । अयं तु न त्रित्वविशिष्टवाचकः किंतु तदनु-करणेन गृहीतः । अनुकार्यानुकरणयोश्च भेदविवक्षाया इष्टत्वात् । प्रकृतिवदनुकरणमित्यस्य त्वनित्यत्वात् । एवं स्थिते त्रयाणामयङ् इत्युक्तौ त्रिशब्दसमानवचनाशङ्कायां तदुद्धरार्थम् अचतुर्णामित्यादिलिङ्गानुसरणं कृत्वा पुनर्गौरवदोषोद्भावनेन यथान्यासस्त्रस्थापनप्रयासो निजपाण्डित्यप्रख्यापनार्थेयति दिक् ॥ तदन्तविधिश्चत्रेति ॥ तस्मादित्यनुवृत्तेः त्रिशब्दा-न्तस्य नाम्न इति व्याख्यानात् । त्रयाणामित्यत्र तु व्यपदेशिवद्भावादित्यभिप्रायः ॥ ङिदन्तस्येति ॥ गुरुः शिच्चेत्यस्यापवादः ॥ ६० ॥

**डतेः ॥ संख्यावाचिनो डत्यन्ताज्जश्शसोर्लुक् ॥ प्रत्ययलोपे प्रत्यय-लक्षणम् ( क ) ॥ ६१ ॥**

( सु० ) डतेः ॥ किमः संख्यापरिमाणे डति चेति डतिः । संख्यापरिमाणे विहित इह गृह्यते पातेर्डतिरिति तु न संख्याया इत्यनुवृत्तेः ॥ ६१ ॥

( त० ) डतेरिति ॥ डत्यन्तान्नाम्न इति वाच्यम् । डतिप्रत्ययश्च शेषा निपात्याः इत्यादय इति गृह्यते । संख्याया इत्यनुवृत्तेः संख्यासंबन्धे च डतिर्गृह्यते न तु पातेर्डतिः पतिरिति ॥ कतेरिति तु न सूत्रितं पतिततानां ग्रहणार्थम् ॥ यत्तु कतेरित्येव युक्तं पतित-तानां लोकेऽदर्शनादित्युक्तं तत् प्रौढवादमात्रम् 'पतिति नागशीर्षणि' 'तति नाङ्कवेदना' इत्यादिषु दर्शनात् । बहुगणवतुडतिसंख्येति पाणिनिसूत्रेऽपि डतेरेव ग्रहणात् । कतीत्यत्र एओ जसीत्यस्य प्राप्तौ जसोऽत्राभावात् प्रत्ययलोपेऽपि प्रत्ययाश्रितं कार्यं भवतीति तत्प्राप्तिः यदादेशस्तद्वद्भवतीति सिद्धेः प्रत्ययलोप इत्याद्युक्तिर्नियमार्था । तेन यत्र प्रत्य-यस्यासाधारणं रूपं प्रयोजकं तदेव प्रत्ययलोपे सति भवति न तु प्रत्ययाप्रत्ययसाधारणम् । तेन शोभना दृषदोऽस्य सुदृषत् प्रासाद इत्यत्र अत्वसोः साविति दीर्घो न ॥ ६१ ॥

**( लुकि न तन्निमित्तम् ) कति । कति । कतीनाम् । कतिषु ॥ औडुलोमिः । औडुलोमी ॥ ६२ ॥**

( सु० ) कतीत्यत्र यदादेशस्तद्वदिति जसमाश्रित्य एओ जसीत्येत्वे प्राप्ते सत्याह–लुकि न तन्निमित्तम् ॥ लुक्शब्देन लुप्ते सति लुग्वन्निमित्तमाश्रित्य कार्यं न भवति-त्यर्थः ॥ शीङो गुणश्चतुर्षु' इत्यनेन ज्ञापितमिदम् । अन्यथा शेते इत्यादावदादेर्लुगिति लुप्तस्यापः 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति तद्भावेन गुणस्य सिद्धत्वाद्व्यर्थमिदं सूत्रं ततो ज्ञापयतीति । का संख्या येषां ते कति ॥ उडूनीव लोमानि यस्य स उडुलोमा । उडुलो-म्नोऽपत्यमौडुलोमिः । बह्वादित्वादिञ् ॥ ६२ ॥

(क) 'प्रसक्तादर्शनं लोपः' कतिशब्दस्य प्रथमाविभक्ति द्वितीयाविभक्तिबहुवचने जस् शसोर्लुकिकृते यदादेशस्तद्वद् भवतीति 'ए ओ जसी'ति न भवति । एवमन्यत्रापि बोध्यम् ।

( त० ) सिद्धान्तमाह—लुकि न तन्निमित्तमिति ॥ स प्रत्ययो निमित्तं यस्य तत्कार्यमिति शेषः । लुकि सति प्रत्ययाश्रितं कार्यं न भवति इत्यर्थः । एतद्बीजं तु शेते इत्यत्र शीङ इति सूत्रेण गुणकरणम् । अन्यथा अपो लुकि प्रत्ययलक्षणेन पित्वाद्गुण इत्यनेनैव गुणे सिद्धे यत्सूत्रान्तरप्रणयनं तज्ज्ञापयति-लुकि न तन्निमित्तमिति ॥ औडुलोमिरिति । बाह्वादिभ्येति इञ् । आदिस्वरस्य ञ्णिति चेति वृद्धिः । टिलोपः ॥६२॥

**( लोम्नोऽपत्येषु बहुष्वकारः )** उडुलोमाः । औडुलोमिम् । औडुलोमी, उडुलोमान् ॥ वातप्रमीः, वातप्रम्यौ, वातप्रम्यः । वातप्रमीम्, वातप्रम्यौ, वातप्रमीन् । वातप्रम्या ॥ एवं ययीपप्यादयः । क्विबन्तवातप्रमीशब्दस्यामि शसि ङौ च विशेषः । वातप्रम्यम् । वातप्रम्यः । वातप्रम्यि । य्वौ वेति यः ॥ बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी ॥ ६३ ॥

( सु० ) लोम्नोऽपत्येषु बहुष्वकारः । लोमन्शब्दान्तादप्रत्ययो भवति अपत्यानां बहुत्वे वाच्ये ॥ उडुलोम्नोऽपत्यानि उडुलोमाः । नो वेति टिलोपः । बहुत्वाभावे औडुलोमिशब्द इदन्तस्तस्य हरिवद्रूपम् । बहुत्वे तु उडुलोमशब्दोऽदन्तोऽन्य एव । तस्य इकारान्तेषु व्युत्पादनं प्रासङ्गिकम् । औडुलोमिशब्दस्य बहुत्वेऽदन्तत्वं भवतीति न भ्रमितव्यमिति ॥ अदन्तस्य तु देववद्रूपम् ॥ इति इदन्ताः ॥ वातं प्रमिमीते इति वातप्रमीः । 'वातप्रम्यादय इत्युणादिसूत्रेण माङ ईक् प्रत्ययः । आतोऽनपीत्यालोपः । स्वरादिविभक्तौ 'इ यं स्वरे' इति यत्वम् । अमिशसि च परत्वादमूशसोरित्यलोपः । वातप्रमीम् वातप्रमीन् । आमि तु दीर्घत्वान्न नुट् । वातप्रम्याम् । ङौ तु सवर्णे दीर्घः । वातप्रमी । एवं यात्यनेनेति ययीर्मार्गः । पाति लोकमिति पपीः सूर्यः । यापोरीक्प्रत्ययो द्वित्वं च निपातनात् । यदा वातं प्रमीनातीति मीञ् हिंसायाम् अस्मात् क्विपि वातप्रमीः । अथवा ईक्प्रत्ययान्ताद्वातप्रमीशब्दादाचारे यङन्तात्कर्त्तरि क्विप् क्रियते तदा क्विबन्तो वातप्रमीशब्दः । धातुत्वाद् य्वौ वेति यः । स्वरादिविभक्तौ परतः सर्वत्र प्रधीवत् ॥ बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी पुरुषः । पुंवद्भेतापो निवृत्तिः । अतिशयेन प्रशस्य इति ईयसुप्रत्ययं प्रशस्यशब्दस्य श्रादेशः । ऋन्नित इतीप् । अन्यार्थं इति ह्रस्वस्तु न ईयसुप्रत्ययान्तस्य बहुव्रीहौ नेति निषेधात् ॥ ६३ ॥

( त० ) बहुष्वकार इति । तथा च एकत्वद्वित्वयोरिदं न औडुलोमिशब्दः । बहुत्वे वकारान्तो भिन्न उडुलोमशब्दः । इकारान्तस्य बहुत्वेऽदन्तमिति न भ्रमितव्यमिति भावः । ययीपप्यादय इति ॥ यान्त्यनेनेति ययीर्मार्गः । पाति लोकमिति पपीः सूर्यः औणादिकौ ॥ क्विबन्तेत्यादि ॥ तथा च वातं प्रमिमीते इति वातप्रमीरिति क्विबन्तत्वे धातुत्वानपायेन य्वौ वेति य इति भावः । औणादिकस्य तु धातुत्वाभावात् य्वौ वेत्यस्याप्रवृत्तावपि अम्शसोरित्यस्य प्रवृत्तिः । ङौ तु सवर्णे दीर्घः सदृत्यस्येति रूपभेदः ॥ बहुश्रेयसीति ॥ समासाश्रितविधेरनित्यत्वान्न कः । ईयसोनेति निषेधान्न ह्रस्वः ॥६३॥

**( ईदूदन्तस्येयुवस्थानभिन्नस्य स्त्र्याख्यस्योपसर्जनत्वेऽपि स्त्रीकार्यं वक्तव्यम् )॥ ६४ ॥**

(सु० ) ईदूदन्तस्येयुवुस्थानभिन्नस्य स्त्र्याख्यस्योपसर्जनत्वेऽपि स्त्रीकार्यं वक्तव्यम् ॥ स्त्रियमाचष्टे इति स्त्र्याख्यः । चक्षिङो मूलविभुजादित्वात्कप्रत्यये ख्याञादेशे चातोऽनपीत्याल्लोपे रूपम् ॥ स्त्रियामिति वक्तव्ये आख्यग्रहणं नित्यस्त्रीत्वलाभार्थम् । तेन वृत्तेः प्राक् स्त्र्याख्यस्य नित्यस्त्रीलिङ्गस्य ईकारोकारान्तस्य नाम्नो गौणेऽपि स्त्रीलिङ्गकार्यं भवति ॥ स्त्र्याख्यस्येति किम् । ग्रामण्ये ॥ ६४ ॥

( त० ) स्त्र्याख्यस्येति ॥ स्त्रियमाख्यातीति स तस्य पूर्वं स्त्रीत्ववाचकस्येत्यर्थः ॥ इयुवुस्थानभिन्नस्य किम् । अतिश्रिये ॥ ६४ ॥

**हसेपः सेर्लोपः** ॥ हसान्तादीबन्ताच्च परस्य सेर्लोपो भवति ॥ बहुश्रेयसी, बहुश्रेयस्यौ ॥ ६५ ॥

( सु० ) हसेपः सेर्लोपः ॥ हसान्तादीबन्ताच्च नाम्नः सेर्लोपो भवति । हसश्च ईप् चानयोः समाहारो हसेप् तस्मात् ॥ ननु कौशाम्ब्या निष्क्रान्त इति निष्कौशाम्बिरित्यत्रातिव्याप्तिः स्यात् । 'अन्यार्थे' इति ह्रस्वे कृते एकदेशविकृतस्यानन्यत्वात् । उच्यते । ई ईप् इति प्रश्लिष्य दीर्घस्यैवेपो ग्रहणात् ईकाररूपादीपः सेर्लोप इति । ह्रस्वे कृते त्वीबन्तत्वेऽप्याकारान्तत्वं नास्तीति(क) ॥ सेरिति किम् । मरुतौ ॥ हसान्तात्प्रथमं सिलोपं पश्चात्कार्यान्तरं भवति । इतोऽदित्यनेनात्वे उपधादीर्घे नलोपे सेर्विसर्गे च कृते पन्थाः इति सिद्धम् । आ सावित्याकारविधानेन प्रथमं सिलोपस्य ज्ञापनात् ॥ ६५ ॥

( त० ) हसेपः सेर्लोपः इति ॥ हसश्च ईप् च एतयोः समाहारः हसेप् तस्मात् हसेपः ॥ ननु हसग्रहणं किमर्थं हसान्तात्संयोगान्तलोपे रूपसिद्धेरिति चेन्न वेधा इत्यत्र परत्वादपवादत्वाद्वा स्कोराद्योरित्यनेन सलोपे अत्वसोः साविति दीर्घासिद्धेः । अथ परं नित्यं च लोपं बाधित्वा निरवकाशत्वादत्वसोरित्यस्यैव प्रवृत्तिरिति चेत् मैवम् । शक्नोतीति शक् इत्यस्यासिद्धेः । संयोगान्तलोपं बाधित्वा स्कोराद्योरिति कलोपप्राप्तेः । तस्माद्धसग्रहणम् । अथ गङ्गामिच्छतीति गङ्गीयति । ततः क्विपि अल्लोपयल्लोपौ गङ्गीरिति । तत्रापि भूतपूर्वपकारमाश्रित्य ईपः सिलोपोऽस्त्विति न वाच्यम् । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति परिभाषया तद्ग्रहणात् ॥ ननु निष्कौशाम्बिरित्यत्र ह्रस्वत्वेऽपि ईपमाश्रित्य सेर्लोपोऽस्त्विति चेन्न । तत्र ई ईबिति प्रश्लिष्य दीर्घस्यैवेपः सर्वत्र ग्रहणात् । अत्र तस्मादित्यनुवृत्त्या स्याद्यनुवृत्त्या वा ईप्साहचर्याद्वा अभैत्सीदित्यादौ न लोपः ॥ ६५ ॥

**धौ ह्रस्वः** ॥ इयुवुस्थानवर्जितयोरीदूतोः स्त्रीशब्दस्य च स्त्रियां धौ परे ह्रस्वो भवति । ह्रस्वविधानसामर्थ्याद्धाविति न । हे बहुश्रेयसि । बहुश्रेयसीम् । बहुश्रेयसीन् ॥ ६६ ॥

---

(क) कौशाम्ब्या निष्क्रान्तो निष्कौशाम्बिः । अत्र प्रथमैकवचने 'हसेपः' इत्यादिना सिलोपमाशङ्कते—नन्विति । समासे विकृतत्वेऽपि स्वधर्मं न जहातीति तद्धेतुं कथयति—अन्यार्थे इति । समाधानायाह—उच्यत इति । समाधत्ते—ई ईबिति । अतिव्याप्तिं परिहरति—ह्रस्व इति । नन्वत्र 'ई ईप्' इति प्रश्लेषे कः प्रयोजकः ? विवक्षैव प्रयोजिका । तथाच प्रसादे—"अत्रापि ईरूपः इप् इति इप् विवक्षयेति ॥"

यद्यप्यत्र हसन्तात् संयोगान्तलोपेनापि सिद्धिस्तथापि 'कक् लौल्ये' इत्यादीनां ककारान्तानां क्विपि 'स्कोराद्योश्चेति' विशेषस्य कलोपविधेः प्रसङ्गेनानिष्टं स्यात् ।

( सु० ) ह्रस्वः॥ स्त्रियां वर्तमानयोरीदूतोः स्त्रीशब्दस्य च ह्रस्वो भवति ॥ वेयुव इत्यपकृष्य व्यवस्थितविकल्पं चाश्रित्य वाक्यभेदेन व्याख्येयम्। तेन इयुव स्थानिनोरीदूतोर्घौ न ह्रस्वः ॥ हे बहुश्रेयसि इत्यत्र ह्रस्वे कृते घाविति गुणो न ह्रस्वविधिसामर्थ्यात्॥६६॥

( त० ) घौ ह्रस्व इति ॥ अत्र वेयुव इत्यतो वा इति इयुव इति चानुवर्त्य वा इत्यस्य व्यवस्थितत्वमाश्रित्य सर्वत्र निर्वाहः। तथा च इयुवस्थानवर्जितयोरीदूतोः स्त्रीशब्दस्य च धातुवर्जितस्य चेत्यादिलाभः । तेन हे श्रीः । हे स्त्रि । हे ग्रामणि । हे अतिचमु । इत्यादावव्याप्त्यतिव्याप्तिपरिहारः सिद्ध्यतीति ध्येयम् ॥ ६६ ॥

ङितामट् ॥ स्त्रियामीकारान्तादूकारान्ताच्च ङितामडागमो भवति ॥ बहुश्रेयस्यै । बहुश्रेयस्याः । बहुश्रेयसीनाम् ॥ ६७ ॥

( सु० ) ङितामट् ॥ य्वोरित्यनुवर्तते । इदुद्भ्यामिति परत्वाद्विकल्पेन बाधनाद्दीर्घयोरेव ईदूतोर्ग्रहणम । स्त्रियामीदूदन्तात्परेषां ङेङसिङसङीनामट् स्यात् ॥ "यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते" इति परिभाषया स्याद्यत्वाद्भवात् । तेन स्वरादौ स्यादौ परतो विधीयमानावियुवौ य्वौ च भवतः । यथा । श्रियै । भुवै । प्रध्यै । वर्षाभ्वै ॥ स्त्रियां किम् । वातप्रम्ये । हूह्वे । आमि तु नुट् । बहुश्रेयसीनाम् ॥ ६७ ॥

( त० ) ङितामडिति ॥ ङ् इत् येषां ते ङितस्तेषाम् ॥ नन्वटः स्यादित्वाभावेन कथं तस्मिन् इयुवौ य्वौ चेति चेत्सत्यम् । 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' इति परिभाषयाऽपि स्यादिग्रहणेन ग्रहणसंभवात् । अत्र स्त्रियामिति निर्देशो मानम्॥ अत्र च दीर्घौ ईदूतौ ग्राह्यौ इदुद्भ्यां परत्वाद्विकल्पेन बाधात् । नन्वतिलक्ष्म्य कथमत्र समासस्य स्त्रियामभावादिति चेन्न, अवयवस्य स्त्रियां वर्तमानत्वेनैवेष्टसिद्धेः॥ स्त्रियां किम् । वातप्रम्ये ॥ य्वोः किम् । मात्रे ॥ ६७ ॥

स्त्रियां योः ॥ इवर्णान्तादुवर्णान्ताच्च स्त्रियां वर्तमानात्परस्य ङेरामादेशो भवति । बहुश्रेयस्याम । अनीबन्तत्वान्न सिलोपः । अतिलक्ष्मीः । घौ ह्रस्वः हे अतिलक्ष्मि । शेषं बहुश्रेयसीवत् । सुश्रीः ॥ ६८ ॥

( सु० ) स्त्रियां योः ॥ इश्च उश्चानयोः समहारो युस्तस्मात् योः । समाहारे नपुंसकत्वस्यानित्यत्वात्पुँल्लिङ्गनिर्देशः । आगमशास्त्रस्यानित्यत्वाद्वा न नुम् (क) अथवा इना सहित उरिति युः । शाकपार्थिवादित्वान्मध्यमपदलोपः । स्त्रियामिवर्णोवर्णान्तात्परस्य ङेराम् स्यात् ॥ स्त्रियां किम् । वातप्रमौ । हूह्वि ॥ योरिति किम् । गवि । किंच अडागमाभावे आमोऽप्यभाव इति यद्वृत्तौ पठ्यते तस्यायमाशयः । तथा हि । मत्यां मताविस्यादिषु स्त्रियां योरित्यनेन नित्यमामि कृते इदुद्भ्यामित्यादिविकल्पेनाट् क्रियते । अडागमाभावे तु स्थानिवद्भावेनामो ङित्वात् ङेरौ ङिदित्यनेन औत्वटिलोपौ भवतः । अट्पक्षे तु तेन व्यवधानादौत्वाभाव इति । तेनाडामोः सहैव प्रवृत्तिर्भवति ॥ बहुश्रेयसी ङि इत्यत्र ङेरामादेशे कृते नुट् न परत्वेनाटा बाधनात् । बहुश्रेयस्याम् ॥ 'लक्षेर्मुट्' चेत्यौणादिक ईप्रत्ययान्तो लक्ष्मीशब्दः । लक्ष्मीमतिक्रान्त इत्यतिलक्ष्मीः । 'अन्यार्थे' इति ह्रस्वो न, स्त्री-

( क ) नुमिति । 'आगमजमनित्यम्, इत्युक्तत्वात्।

प्रत्ययान्तत्वाभावात् । हसेप इति सेर्लोपोऽपि न, ईप्प्रत्ययान्तत्वाभावात् । सुष्ठु श्रीर्यस्येति सुश्रीः । ईबन्तत्वाभावान्न सिलोपः ॥ ६८ ॥

( त० ) स्त्रियां योरिति ॥ इश्च उश्च एतयोः समाहारः युः तस्मात् योः । आगमजस्यानित्यत्वान्न नुम् ॥ स्त्रियां किम् । वातप्रमीः ॥ योरिति किम् । गवि ॥ ६८ ॥

**य्वोर्धातोरियुवौ स्वरे** ॥ धातोरिवर्णोवर्णयोरियुवौ भवतः स्यादौ स्वरे परे ॥ सुश्रियः । एवं सुधीयवक्र्यादयः ॥ सेनान्यः ॥ ६९ ॥

( सु० ) य्वोर्धातोरियुवौ स्वरे ॥ यत्वाद्यपवादोऽयम् । इश्च उश्च यू तयोर्य्वोः । व्याख्यानतो विशेषप्रतिपत्तिर्नहि संदेहादलक्षणमिति परिभाषया य्वोरिति ह्रस्वयोरिह ग्रहणे सावर्ण्याद्दीर्घयोश्च ॥ नाम्नो धातोरिवर्णोवर्णयोरियुवौ भवतः स्यादौ स्वरे ॥ धातोः किम् । वातप्रम्यौ । हूह्वौ । स्यादौ किम् । श्र्यर्थम् । भ्र्वर्थम् ॥ ननु सुश्रिये इत्यादौ वेयुव इत्यनेनाट्कथं न क्रियते । ईदूदन्तस्य स्त्र्याख्यस्येत्युक्तत्वादिति चेन्न । इयुवोर्निमित्तभूतयोरीदूतोर्गौणे स्त्रीकार्यं न वक्तव्यं स्त्रीशब्दं विना ॥ सुष्ठु धीर्यस्येति सुधीशब्दस्य च नेति निषेधात् य्वौ वेति न प्रवर्तते (क) ॥ एवं क्रीणातीति यवक्रीः । क्विबन्तः ॥ सेनां नयतीति सेनानीः । क्विबन्तः ॥ ६९ ॥

( त० ) य्वोर्धातोरियुवौ स्वरे इति ॥ धातोः किम् । वातप्रम्यौ ॥ य्वोः किम् । विश्वपौ ॥ स्वरे किम् । सुश्रीभ्याम् ॥ स्यादौ किम् । श्र्यर्थम् । भ्र्वर्थम् ॥ अत्र इश्च उश्च एतयोः य्वोरिति व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणमिति वचनादिवर्णोवर्णयोरिति व्याख्यास्यामः । अत्राहुः । 'नामिनः स्वरे' इति तु स्वरग्रहणमत्रास्त्विनामिति शसादिना संबद्धमिति तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यादिति पुनः स्वरग्रहणमिति। तत्रेदमवधेयम् । न ह्यन्यसूत्रस्थपदसंबद्धस्यानुवृत्तिरिह दृष्टा एकयोगनिर्दिष्टानामेव प्रवृत्तिनिवृत्त्योर्दर्शनात् । किन्तु बहुसूत्रव्यवधानादन्यत्र विधानात्तन्निवृत्तौ स्वरग्रहणमित्येव वक्तुमुचितम् । अत्रातो धातोरित्यतो धातोरिति लब्धेऽपि पुनर्धातुग्रहणं योगविभागेनार्थविशेषज्ञापनार्थम् । तत्तु इयेवेत्यादौ स्पष्टतयोपपादयिष्यते ॥ अत्राहुः । य्वोरिति किमर्थम् । परिशेषादेव तल्लाभात् । तथा हि । ऋदन्तस्य तुक् । ॠदन्तस्य तु इरुरौ । ऌदन्तस्य तु धातोरेव न संभवः । संध्यक्षरान्तस्य त्वात्वमेव । अदन्तस्य तु यत इति लोपः । आदन्तस्य शसादौ लोपः । पञ्चसु तु आतः पञ्चसु नेति पदत्रयमनुवर्त्य पञ्चसु नेति निषेधः । हसान्तस्य गमामित्यादिनिर्देशान्नेति । औपं कुलमित्यादौ तु अत इति नेति च पदद्वयमनुवर्त्य अतो नेति व्याख्यातुं शक्यत्वान्नेति । परिशेषात् य्वोरिति लब्धे किमर्थं तदितीति। अत्रेदमवधेयम् आदन्तस्य वारणाय आतः पञ्चसु नेति अदन्तवारणाय अतो नेत्याद्यनुवृत्तिक्लेशतो य्वोरिति ग्रहणस्य स्पष्टप्रतिपत्तितया लघुत्वादिति तदुपेक्षितम् ॥ ६९ ॥

**य्वौ वा** ॥ अनेकस्वरस्य नाम्नो धातोरिवर्णोवर्णयोर्यकारवकारौ भवतः स्यादौ स्वरे परे ॥ धातोरवयवसंयोगः पूर्वो यस्मात्तस्य तु न । सोप-

(क) अयमाशयः शङ्कायाः—'स्त्र्याख्यस्योपसर्जनेऽपि स्त्रीकार्यं वक्तव्यम्' इत्युक्त्या वेयुवेति सूत्रेण ङितामट् प्राप्तः, अस्याः समाधानं—नेति । ईदूतोर्गौणे स्त्रीकार्यं नेति भावः ।

पदस्यानेकस्वरस्य चेदुपसर्गकारकपूर्वस्यैव नान्यपूर्वस्य । वर्षाकरदृन्पुनर्पूर्वस्य भूशब्दस्य वत्वम् । अन्यभूशब्दस्य सुधीशब्दस्य च य्वौ न ॥ सेनान्यौ । सेनान्यः ॥ ७० ॥

( छ० ) य्वौ वा ॥ इयुवोरपवादोऽयम् । तस्मादिति य्वोर्धातोः स्वरे इति चानुवर्तते । अनेकस्वरस्य नाम्नो धातोः संबन्धिनोरिवर्णोवर्णयोर्यकारवकारौ भवतः स्यादौ स्वरे । धात्ववयवसंयोगपूर्वयोरिवर्णोवर्णयोस्तु य्वौ न । चेद्यदि सोपपदस्य धातोरिवर्णोवर्णयोर्य्वौ स्यातां तदोपसर्गकारकपूर्वस्य धातोरिवर्णोवर्णयोरेव य्वौ स्तः । न तूपसर्गकारकेतरपूर्वस्य धातोरिवर्णोवर्णयोरर्थादुपसर्गकारकपूर्वत्वेन योऽनेकस्वरो धातुस्तस्यैवर्णोवर्णयोरेव य्वौ । उपसर्गकारकेतरपूर्वत्वेन योऽनेकस्वरो धातुस्तस्यैवर्णोवर्णयोर्य्वौ न । अनेकस्वरस्य किम् । नियौ । लुवौ ॥ धातोर्य्वोः किम् । वातप्रम्यौ । हूह्वौ ॥ स्वरे किम् । सेनानीभ्याम् । सुलूभ्याम् ॥ धात्ववयवसंयोगपूर्वत्वे सुश्रियौ । उपसर्गधात्ववयवसंयोगपूर्वत्वे तु य्वौ भवतः । उन्न्यौ । उल्ल्वौ । धात्ववयवसंयोगोऽत्र न । उपसर्गकारकाभ्यामितरपूर्वत्वे तु य्वौ न । परमनियौ । शुद्धधियौ । वर्षाकरदृन्पुनर्पूर्वस्य भूवो वत्वमितरपूर्वस्य भूशब्दस्य सुधीशब्दस्य च य्वौ न किंतु इयुवौ ॥ ७० ॥

( त० ) य्वौ वेति ॥ अत्र तस्मात् य्वोर्धातोः स्वरे इति पदचतुष्टयमप्यनुवर्तते इत्यभिप्रेत्याह—नाम्नो धातोरित्यादि । अत्र वाशब्दो व्यवस्थितः । ततश्च सर्वेष्टसिद्धिरिति । अनेकस्वरस्य किम् । नियौ ॥ धातोः किम् । वातप्रमीम् ॥ य्वोः किम् । सोमपौ ॥ स्वरादौ किम् । सेनानीभ्याम् ॥ स्यादौ किम् । सेनान्यर्थम् ॥ ७० ॥

नियः ॥ नीशब्दादुत्तरस्य ङेरामादेशः ॥ सेनान्याम् । एवं सुनीग्रामण्यादयः । धातुना संयोगविशेषणात् उन्न्यौ । उपसर्गकारकपूर्वस्य किम् । परमनियौ । शुद्धधियौ ॥ अनेकस्वरस्य किम् । नियौ ॥ कुमारीमिच्छन् कुमारीवाचरन् वा कुमारी । हसेप इति सिलोपः । कुमार्यौ, कुमार्यः । अमि शसि च कुमार्यम् । कुमार्यः । शेषं बहुश्रेयसीवत् । सखायमिच्छति सखीयति । एकदेशविकृतस्यानन्यत्वात् डैत्वे सखा, सखायौ, सखायः । हे सखीः । सखायम् । सख्यः ॥ सह खेन वर्तते सखस्तमिच्छति सखीः । सख्यौ । सुतमिच्छति सुतीः । सुत्यौ ॥ ७१ ॥

( छ० ) नियः ॥ नीशब्देन नाम्नो विशेषणात्तदन्तविधिः । नीशब्दान्नीशब्दान्ताच्च नाम्नो ङेराम् स्यात् (क) ॥ लून्यीत्यत्र तु नातिव्याप्तिः लक्षणप्रतिपदोक्तयोरिति

---

( क ) अयमाशयः—'निय' इति सूत्रेण विहितो ङेरामादेशस्तु नीशब्दस्यैव प्राप्नोति नतु सेनान्यादेः शब्दस्येति शङ्कावारणायाह—'नीशब्देनेति' । 'विशेषणं तदन्तस्य स्वस्य च रूपस्योपरस्थापकं वक्तव्यमिति परिभाषया निशब्दस्य नाम्नो विशेषणात्तदन्तविधिः नीशब्दान्तविधिः । तेन सेनान्यादेः शब्दस्यापि ङेरामादेशोभवतीति भावः । निर्गलितार्थं दर्शयति—नीशब्दादिति । निशब्दादुत्तरस्य ङेरामादेशोभवतीत्यर्थकथनात् । लूनीशब्दस्य चातिव्याप्तिः स्यात् तत्र तु लून्यीत्येव भाव्यं नतु लून्यामिति । तत्प्रत्याचष्ट-

न्यायात् ॥ अर्थवद्ग्रहणे नानर्थकस्येति न्यायाच्च ॥ यत्वे आमादेशे च सेनान्याम् । एवं सुष्ठु नयतीति सुनीः ॥ प्रध्यायतीति प्रधीः । ध्यायतेः क्विपि संप्रसारणे रूपम् ॥ यदा तु प्रकृष्टा धीर्बुद्धिर्यस्येति विग्रहस्तदा धीशब्दस्य नित्यस्त्रीलिङ्गत्वात् ईदूदन्तस्य स्त्र्याख्यस्येति स्त्रीकार्ये बहुश्रेयसीवद्रूपम् ॥ सुष्ठु ध्यायतीति सुधीः । सुधीशब्दस्य च नेति निषेधादिय् । सुधियौ, सुधियः । इत्यादि ॥ ग्रामं नयतीति ग्रामणीः ॥ उन्नयतीत्युन्नीः । धातुना संयोगस्य विशेषणादिह य्वौ वेति यत्वं स्यादेव ॥ परमश्चासौ नीश्च परमनीः । शुद्धा धीर्यस्य स शुद्धधीः । उपसर्गकारकेतरपूर्वत्वादिय् । यदा तु शुद्धं ब्रह्म ध्यायतीति विगृह्यते तदा य्वौ वेति यत्वं भवत्येव ॥ नयतीति नीः । एकस्वरत्वादिहेय् ॥ कुमारीमिच्छतीति कुमारीयति । अथवा कुमारीवाचरतीति कुमारीयते कुमारयति वा । नाम्नो य ई चास्येति यप्रत्ययान्तात् कर्तुर्यङिति नाम्न आचारे क्यिगन्ताभ्यां च कर्तरि क्विपि परतः यत इत्यल्लोपे यवयोर्वसे हकारे चेति यलोपे च कुमारीति रूपम् ॥ ननु कुमारीत्यत्रान्यार्थे इत्यनेन ह्रस्वः स्यात् क्विबर्थं प्रतीबन्तस्योपसर्जनत्वात्, उच्यते । 'अन्यार्थे' इति सूत्रे कृत्रिमोपसर्जनं गृह्यते न त्वप्रधानरूपमिति । कुमारीशब्दे ईदूदन्तस्य स्त्र्याख्यस्येति स्त्रीकार्यं भवति । तेन धौ परे धौ ह्रस्व इति ह्रस्वः । ङिद्वचनेषु ङितां मडित्यट् । स्त्रियां योरिति ङेराम् । आमि तु नुट् । स्वरे य्वौ वेति यत्वम् । कथं तर्हि दुर्धियः वृश्चिकभिय इत्यादि । उपसर्गकारकपूर्वत्वाद्यत्वेन भाव्यमिति । उच्यते । दुःस्थिता धीर्येषामिति विग्रहे दुरित्यस्योपसर्गसंज्ञा नास्ति । यत्क्रियायुक्ताः प्रादयस्तं प्रत्येवोपसर्गसंज्ञका इत्युक्तत्वात् (क) । वृश्चिकसंबन्धिनी भीर्वृश्चिकभीरित्युत्तरपदलोपोऽत्र बोध्यः । भययोगाभावाद्वृश्चिकस्य नापादानत्वमिति भावः ॥ सखायमिच्छतीति सखीयति । नाम्नो य इति यप्रत्ययः । य इति दीर्घः । ततः क्विपि यत इत्यल्लोपः । यवयोर्वसे इति यलोपः । अल्लोपस्यात्र स्थानिवत्त्वेन यत्वं न भवति । क्वौ लुप्तं न स्थानिवदिति निषेधात् । एकदेशविकृतस्यानन्यतया डात्वमैत्वं च भवति । शसादौ स्वरे य्वौवेति यः ॥ सह खेन वर्तते यः स सख इति बहुव्रीहिः । "कं शीर्षे च मुखे खं खः सदिवि व्योमनीन्द्रिये । शून्ये बिन्दौ सुखे खस्तु" इति हैमः ॥ सखमिच्छतीति सखीयति । नाम्नो य ई चास्येति यः ईत्वं च । ततः क्विपि सखी । लक्षणप्रतिपदोक्तयोरिति न्यायान्नात्र डात्वम् । स्वरादिविभक्तौ य्वौ वेति यः ॥ एवं सुतमिच्छतीति सुतीयति क्विपि सुती ॥ ७१ ॥

( ८० ) निय इति । अत्र 'णीञ् प्रापणे' इति धातुरेव गृह्यते न त्वन्यः लक्षणप्रति-

---

नातिव्याप्तिरिति तत्र हेतुं दर्शयति—लक्षणेति । लून्यीत्यस्य लाक्षणिकत्वात्तत्र नातिव्याप्तिरिति भावः। तत्र च हेत्वन्तरं दर्शयति—अर्थवद्ग्रहणे इति । लून्यीत्यस्य चार्थवत्त्वाभावा ( अनर्थकत्वात् ) न्नातिव्याप्तिरिति भावः ।

( क ) दुर्धिय इत्यत्रोपसर्गपूर्वत्वेन वृश्चिकभिय इत्यत्र च कारकपूर्वत्वेन 'नीय' इति सूत्रेण तत्तच्छब्दघटकीभूतस्येकारस्य यकार एव भाव्य इति शङ्कते—कथमिति ।

नास्तीति । दुःस्थिता धीर्येषामिति विग्रहे कृते दुरिति भागस्योपसर्गसंज्ञा न भवतीत्यर्थः। तत्र हेतुं वदति—उक्तत्वादिति । यत्क्रियायुक्ता=यया क्रियया सह सम्मिलिताः, प्रादयः–उपसर्गाः तं प्रत्येव=तां क्रियां प्रत्येव, ते उपसर्गाः न त्वन्यं प्रतीतिकथनाद् बहुव्रीहिसमासे तेषामत्र क्रियात्वाभाव दुपसर्गसंज्ञकत्वाभाव इत्याशयः ।

पदोक्तपरिभाषयाऽतो लून्यि इत्यादौ नातिप्रसङ्गः । क्वचिन्नियश्चेति चकारः स चिन्त्यप्रयोजन इति वृद्धाः ॥ उन्न्याविति ॥ अत्र संयोगपूर्वकत्वेऽपि उपसर्गधात्ववयवसंयोगत्वाद्य्वौ ॥ कुमारीमिच्छन्नित्यादि ॥ इच्छार्थयान्तादाचारक्विबन्ताद्वा कर्तरि क्विपि कुमारीति रूपम् । नेति पुरुष इत्यर्थः ॥ पुंस्त्वद्योतनायेदम् । कुमार्यमिति ॥ अल्लोपं बाधित्वा य्वौ वेति यः ॥ सखेति ॥ अत्रापि सखायमिच्छतीति वाक्ये अल्लोपयलोपयोः सखीति दीर्घान्तः । सेर्डाऽधेरित्यत्र ऐ सख्युरित्यस्य ह्रस्वान्तस्यानुवृत्तेरिह च ह्रस्वान्तस्य ग्रहणात् कथं दीर्घान्ते कार्यद्वयमित्यत आह-एकदेशेत्यादि ॥ एकदेशेन एकावयवेन विकृतं विकारवत् विपरीताकृत्यपि नान्यवद्भवतीत्यर्थः । यथा छिन्नकर्णोऽपि श्वा श्वैव नाश्व इति भावः ॥ नन्वात्राल्लोपस्य स्थानिवद्भावेन यादेशोऽस्त्विति चेन्न क्वौ लुप्तं न स्थानिवदिति परिभाषोपस्थानात् । लुप्तेति नपुंसके भावे क्तः । क्वौ लोप इति यावत् ॥ सखायमिति। अत्राम्शसोरिति बाधित्वा य्वौ वेति यः प्राप्तः ततोऽपि परत्वादै सख्युरित्यैत्वमेव तकारस्थानजादिति स्थानिवद्भावेनेति भावः ॥ ७१ ॥

( खीतीभ्यां कृतयादेशाभ्यां ङसिङसोरकारस्य उः )

सख्युः । सुत्युः ॥ ७२ ॥

( सु० ) खीतीभ्यां कृतयादेशाभ्यां ङसिङसोरकारस्य उः ॥ य्वौ वेति कृतयाभ्यां खीतीवर्णाभ्यां परस्य ङसिङसोरस्य उः स्यात् ॥ ७२ ॥

( त० ) कृतयादेशेत्यादि ॥ धात्ववयवसंयोगपूर्वत्वान्न यत्वं तदभावान्नोत्वमित्यर्थः ॥ ७२ ॥

( तकारस्थानजाद्वर्णादपि ) लूनमिच्छतीति लूनीः । लून्युः । क्षामं प्रस्तीमं वेच्छतीति क्षामीः । क्षाम्युः । प्रस्तीमीः । प्रस्तीम्युः । शुष्कीः । पक्वीः । कृतयादेशत्वाभावान्नोत्वम् । शुष्कियः । पाकियः ॥ हूहूः, हूह्वौ, हूह्वः । हे हूहूः । हूहूम् , हूह्वौ, हूहून् । वातप्रमीवत् ॥ एवं हम्भूः । अतिचमूः । बहुश्रेयसीवत् ॥ खलपूः, खलप्वौ, खलप्वः । एवमुल्लपुस्वादयः ॥ स्वयंभूः, स्वयंभुवौ, स्वयंभुवः । एवं लस्वभूकटप्रूहम्भूकाराभूपरमास्वादयः॥ वर्षाभूः, वर्षाभ्वौ, वर्षाभ्वः। वर्षाभ्वम् । एवं कारभूपुनर्भूदृन्भूकरभूशब्दाः ॥ ७३ ॥

( सु० ) तकारस्थानजाद्वर्णादपि ॥ कृतयादेशात्तकारस्थानोत्पन्नाद्वर्णात्परस्य ङसिङसोरस्य उः स्यात् ॥ लूनमिच्छतीति लूनीयति क्विपि लूनीः । ल्वादिभ्योदितश्चेति क्तस्य नः । क्षाममिच्छतीति क्षामीयति क्विपि क्षामीः । क्षायो म इति क्तस्य मः ॥ प्रस्तीममिच्छतीति प्रस्तीमीयति क्विपि प्रस्तीमीः । प्रस्त्यायतेः संप्रसारणं क्तस्य नत्वं च निपातनात् । क्षामं क्षीणं तु प्रस्तीमं विपरीतं निगद्यते' इति ॥ शुष्कं पक्वं वेच्छति शुष्कीयति । पक्वीयति। क्विपि शुष्कीः । पक्वीः । शुषेः क इति क्तस्य कः । पचो व इति क्तस्य वः । ङसिङसोः परतो य्वोर्वावेरितीयादेशे कृते य्वौ वेति यादेशाभावात्

स्त्रीतीभ्यामित्युत्वं न ॥ इतीदन्ताः ॥ उदन्ता हरिवत् ॥ इत्युदन्ताः ॥ गन्धर्वविशेषवाचकोऽव्युत्पन्नो हूहूशब्दः । अमि शसि च अमृशसोरित्यल्लोपः । अन्यत्र स्वरादौ विभक्तौ उ वमिति वत्वम् ॥ दृम्भतीति दृम्भूः । 'अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः' इत्युणादिसूत्रेण कूप्रत्ययो नुमागमश्च निपात्यते । अयमूकारो धातोर्न । तेन उ वमिति वत्वम्। दृभी ग्रन्थे । दृम्भूः ग्रन्थकर्ता ॥ चमूं सेनामतिक्रान्तो यः सोऽतिचमूः । 'अतिचमूशब्दे तु स्त्रीकार्यं विशेषः। धौ हे अतिचमु ङिति अतिचम्वै । अतिचम्वाः । आमि अतिचमूनाम् । ङौ अतिचम्वाम् ॥ खलं पुनातीति खलपूः । पूञः क्विप् । स्वरादौ विभक्तौ य्वौ वेति वत्वम् । स्वयं भवतीति स्वयम्भूः । क्विबन्तः । अन्यभूशब्दस्येति निषेधात् वत्वं न ॥ लुनातीति लूः । अनेकस्वरत्वाभावात् वत्वं न । स्वेन भवतीति स्वभूः । अन्यभूशब्दस्येति निषेधाद्वत्वं न ॥ कटं प्रवत इति कटप्रूः । धातोरवयवसंयोगपूर्वकत्वाद्वत्वं न ॥ दृम्भ्यां भवतीति दृम्भूः ॥ कारायां भवतीति काराभूः । अन्यभूशब्दस्येति वत्वं न ॥ परमश्चासौ लूश्च परमलूः । उपसर्गकारकेतरपूर्वकत्वाद्वत्वं न ॥ वर्षासु भवतीति वर्षाभूः । य्वौ वेति वत्वं स्वरे । 'भेके' मण्डूकवर्षाभूशालूरप्लवदर्दुराः' इत्यमरः ॥ 'भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान्' इति यादवः ॥ कर एव कारः स्वार्थिकोऽण् । कारे भवतीति कारभूः । वत्वम् ॥ पुनर्भवतीति । पुनर्भूरिति । क्रियाशब्दः । 'पुनर्भूर्दिधिषूरूढा द्विः' इत्यमरः ॥ पुनर्भूशब्दस्तु नित्यस्त्रीलिङ्ग एव ॥ दृन्विति नान्ते हिंसार्थाव्यये पूर्वपदे भुवः क्विप् । दृन्भूः । सर्पजातिः कपिश्च ॥ करे भवतीति करभूः । वत्वम् ॥ इत्यूदन्ताः ॥ ७३ ॥

**सेरा ॥ ऋकारान्तात्परस्य सेरा भवति स च डित् ॥ पिता ॥ ७४ ॥**

**( सु० ) सेरा** ॥ ऋतो ङ उरित्यतः ऋत इत्यनुवृत्तम्। ऋदन्तान्नाम्नः सेरा स्यात् स च डिद्वत् ॥ पितृ सि इत्यत्र पञ्च.सु इत्यर् प्राप्तः सेरा इत्यात्वं च प्राप्तम् । तत्र येन नाप्राप्ते यो विधिरारभ्यते स तस्यापवाद इति न्यायेनार् इत्यस्य बाधकोऽयमाकारः प्रथमं प्रवर्तते । ततस्तस्य स्थानिवत्त्वेन आ इत्यस्य सित्वात्तस्मिन् परे अर् टिलोपश्चेति द्वयं प्राप्तम् । तत्र परत्वान्नित्यत्वाच्च टिलोपः ( क ) ॥ "पिता माता ननान्दा नप्तृत्वष्टृभ्रातृयातरः । जामाता दुहिता देवा न हि ऋन्ता इमे दश ॥ १ ॥"अव्युत्पत्तिपक्षमाश्रित्येदमुक्तम् ॥ ७४ ॥

**( त० ) सेरेति** ॥ अत्र ऋतो ङ उरित्यत ऋत इत्यनुवर्तते ॥ सेः किम् । पितृभ्याम् ॥ ऋतः किम् । हूहूः । तपरत्वं किम् । तॄः । अत्र पितृ सि इति स्थिते पञ्चस्वित्यर् प्राप्तेऽप्यल्पविषयत्वात् सेरेत्यादौ प्रवर्तते । ततः स्थानिवद्भावाट्टिलोपेऽरि च प्राप्ते परत्वाट्टिलोप एव ॥ अत्राहुः । अन् सावित्येव सूत्रयितुमुचितम् । तथा च अनि सति नो-

---

( क ) प्राप्तमिति । सिप्रत्ययस्यापञ्चवचनान्तर्गतत्वात् पञ्चस्वित्यरः प्राप्तिः । अल्पत्वेन प्राधान्यात् 'सेरेति' आत्वस्य प्राप्तिरित्यर्थः । अनयोः कस्य वादौ प्राप्तिः कस्य वा पश्चादत्राह–तत्र येनेति । येन=आत्वविधिना, नाप्राप्ते=न अप्राप्ते प्राप्ते=सति, योविधिः=आर् विधिः, आरभ्यते=उत्पद्यते, स=आत्वविधिः तस्य=आर् विधेः, अपवादः, इति न्यायेन आर् इत्यस्य=विधेः, बाधकोऽपवादक आत्वविधिः प्रथमं प्रवर्तते प्राप्तः । ततः पश्चात् स्थानिवत्परिभाषया अर् इत्यस्य सित्वात्=सिप्रत्ययत्वात् अर् प्राप्तः टिलोपश्च प्राप्त इत्यर्थः । ननु अर् इति विधानात् प्रागेव टिलोपो भवत्विति समाधत्ते—तत्रेति । अत्र तत्त्वदीपिका द्रष्टव्या ।

पथाया इति दीर्घे हसेप इति लोपे सिद्ध्यतीष्टमिति । अत्रेदमवधेयम् । अन् साविति कृतेऽर्द्धमात्रालाघवेऽपि सूत्रद्वयापेक्षत्वेन प्रक्रियागौरवमित्युपेक्षितम् ॥ ७४ ॥

**पञ्चसु** ॥ ऋकारस्यार भवति पञ्चसु ॥ पितरौ, पितरः ॥ ७५ ॥

( सु० ) पञ्चसु ॥ नाम्न ऋतोऽर् स्यात् स्यादिषु पञ्चसु ॥ स्यादौ किम् । बिभ्रतः॥

( त० ) पञ्चस्विति ॥ अरित्यनुवर्तते । तत्र ऋत एव न तु तदन्तस्य निर्दिश्यमानस्यादेशा भवन्तीति वचनात् ॥ ऋतः किम् । हूह्वौ ॥ तपरत्वं किम् । त्रौ ॥ पञ्चसु किम् । पितृभ्याम् ॥ अत्र लाघवात् ङिपञ्चस्वित्येकयोगः समुचितः । पृथग्योगकरणमरोऽनित्यत्वज्ञापनायेति कश्चित् । तेन प्रियतिस्रौ, प्रियतिस्रेत्यादौ नेति भावः ॥ ७५ ॥

**धेरर्** ॥ ऋकारान्तात्परस्य धेरर् भवति स च डित् । हे पितः । पितरम् , पितरौ, पितॄन् ॥ ७६ ॥

( सु० ) धेरर् ॥ पञ्चसु इत्यस्य स्तुरार् इत्यस्य चापवादोऽयम् । ऋदन्ताद्धेरर् स्यात् स च डिद्वत् ॥ ७६ ॥

( त० ) धेररिति ॥ अत्र वृद्धाः । माऽस्त्विदं सूत्रं पञ्चस्वित्यनेनारि कृते हसेप इति संयोगान्त इति वा सिलोपे रूपसिद्धेः । अथ सेरेरस्यस्य प्रवृत्तौ रूपासिद्धिरिति न वाच्यम् । तत्राधेरिति योजनीयमतो न हानिः ॥ अथ ङावित्यत्रानुवृत्त्यर्थमिति चेत् तत्र 'अङौ' इत्यस्यैव सुवचत्वात्, लाघवे विशेषाभाव इति चेत् एकवाक्येनार्थलाघवसद्भावात् नैवं हे कर्तरित्यत्राप्यार्प्रसङ्ग इति वाच्यं तत्रापि सेराऽधेररित्यतोऽधेरित्यनुवर्त्य विभक्तिविपरिणामेनाधाविति व्याख्येयमित्यतो धावरः प्रतिषेधात् । अत्रोच्यते । सूत्रं विना हे कर्तरिति न सिद्ध्येत् । तथा हि । प्रथमं पञ्चस्विति अर् प्राप्तः तदपवादः स्तुरारिति आर् प्राप्तः स चाधाविति प्रतिषिद्धः । देवदत्तस्य हन्तरि हते न हि देवदत्तो जीवतीति न्यायेनारि निषिद्धेऽप्यर् न स्यात् । सूत्रारम्भे तु धेररिति टिलोपे च सिद्धम् हे कर्तरिति । यदि त्वपवादे पुनरुत्सर्गस्य प्रवृत्तिरिति न्याय आश्रीयते यथा वासिष्ठ इत्यादौ तदेदं सूत्रं व्यर्थमित्याहुः ॥ ७६ ॥

( ऋतो ङ उः ) पितुः ॥

**ङौ** ॥ ऋकारस्यार् भवति ङौ परे ॥ पितरि ॥ एवं जामातृभ्रात्रादयः ॥ ७७ ॥

( सु० ) ङौ ॥ नाम्न ऋतोऽर् स्यात् ङौ परे ॥ ङौ किम् । पित्रे । नयतेर्डिच्चेति ऋप्रत्ययान्तो नृशब्दः । ना, नरौ, नरः ॥ ७७ ॥

( त० ) ङाविति ॥ अत्र डिदिति निवृत्तं डित्कार्यस्यासम्भवात् । ऋत इत्यनुवृत्तं पञ्चम्यन्तमर्थवशात्षष्ठ्या विपरिणम्यते । अत्रापि कर्तरीति निर्देशान्निर्दिश्यमानस्यैव ग्रहणम् । न तु तदन्तस्य । ङिपरत्वमप्यूत एव । तेन ग्रन्थकृतीत्यादौ नातिप्रसङ्गः ॥ ऋतः किम् । वातप्रमी ॥ तपरः किम् । क्रि ॥ ७७ ॥

**( नुर्वा नामि दीर्घः )** नृणाम्–नॄणाम् । शेषं पितृवत् ॥ ७८ ॥

( सु० ) नुर्वा नामि दीर्घः ॥ नृशब्दस्य वा दीर्घो भवति नामि परे ॥ ७८ ॥

**स्तुरार्** ॥ सकारतृप्रत्ययसंबन्धिनः ऋकारस्यार् भवति पञ्चसु ॥ कर्ता, कर्तारौ, कर्तारः । हे कर्तः । कर्तारम् , कर्तारौ, कर्तॄन् ॥ ७९ ॥

( सु० ) **स्तुरार्** ॥ स् च ता चानयोः समाहारस्तु तस्य स्तुः । स्तोरितिवद्बोध्यम् सकारसहितस्ता तस्य स्तुरिति वा । सकारात् परस्य तृप्रत्ययावयवस्य च ऋत आर् स्यात् पञ्चसु ॥ कर्तृ सि इत्यत्र आरपेक्षया सेरस्यस्यैव प्रथमप्रवर्तनस्यौचित्यं नित्यत्वात् । तत· सिलोपः । वस्तुतः पूर्वमारि कृते तु वर्णमात्रविधौ यदादेश इत्यस्याभावात् 'सेरा' इत्यात्वं न स्यादिति आत्वमेव पूर्वं विधेयमिति ॥ स्तुरिति किम् । ना, नरौ नरः ॥७९॥

( त० ) **स्तुरारिति** ॥ स् च तृ च स्तृ तस्य स्तुः । स्नोरिति केचित् । सात्परत्वं तृशब्दस्यावयवत्वमृकारे बोध्यम् । न तु संयोगसमवायौ ऋकारस्य वर्णत्वेन शब्दत्वात् संयोगसमवाययोरभावात् । शब्दस्य गुणत्वेन संयोगाभावः तस्य द्रव्यमात्रधर्मत्वात् । शब्दस्याकाशमात्रसमवेतत्वेन समवायाभावश्च ॥ ननु तृ इत्युक्ते तृणो न ग्रहणं निरनुबन्ध· कग्रहणे न सानुबन्धकस्येति न्यायात् इति चेन्न परिभाषाया अनित्यत्वात् । प्रशास्तृश· ब्दस्यैव तृशब्दस्य ग्रहणं व्याख्यानात् । लक्ष्यानुरोधो व्याकरणान्तरं चात्र मूलम् । न प्त्रादीनां मातृपित्रादीनां तु नेति व्याख्यायां व्याख्यानमेव शरणम् । उभयेषामपि व्युत्प· त्त्यव्युत्पत्तिपक्षयोः समत्वात् ॥ ७९ ॥

**( उद्गातृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणां च )** उद्गाता । नप्ता । क्रोष्टुशब्दस्य पुंसि पञ्चसु स्यादिषु स्त्रियां च तृवद्रूपम् ॥ क्रोष्टा, क्रोष्टारौ, क्रोष्टारः । हे क्रोष्टो क्रोष्टारम् , क्रोष्टारौ, क्रोष्टून् ॥८०॥

( सु० ) **उद्गातृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणां च** ॥ एषामप्यार् स्यात् पञ्चसु ॥ किं च उद्गात्रादीनां ऋन्तानामारिष्टः । पितृमातृभ्रातृजामातृयातृदुहितृ· शब्दानां ऋन्तानामरिष्टस्तत्र किं प्रमाणम् । व्युत्पत्तिपक्षे उद्गात्रादयः पित्रादयश्च उणादौ ऋन्ता व्युत्पादिताः । अव्युत्पत्तिपक्षे तूद्गात्रादयः पित्रादयश्चाव्युत्पन्ना न तृप्रत्ययान्ता इति । उच्यते । व्युत्पत्तिपक्षे तृप्रत्ययान्तत्वादेवारि सिद्धे उद्गात्रादिग्रहणं व्यर्थम् । व्यर्थं सति नियम्यते । औणादिकानामुद्गात्रादीनामेव ऋन्तानामार् न तु औणादिकानां ऋन्ता· नां संज्ञाशब्दानामन्येषां पितृप्रभृतीनामिति । अव्युत्पत्तिपक्षे तूद्गात्रादिग्रहणं विध्यर्थमिति पितृमातृभ्रातृप्रभृतीनामार् इत्यस्य शङ्कैव नास्तीति ॥ क्रोष्टुशब्दस्य पुंसि पञ्चसु स्या· दिषु स्त्रियां च तृवद्रूपम् । क्रोष्टुशब्दस्य स्थाने क्रोष्टृ इति तृप्रत्ययान्तं रूपं भवति पुंसि पञ्चसु परेषु स्त्रीलिङ्गे च । 'क्रुश आह्वाने' अस्मादौणादिके तुप्रत्यये क्रोष्टु—शब्दः । तृजु· णाविति तृप्रत्यये तु क्रोष्टृशब्दः । द्वावपि शृगालवाचिनौ । तत्राविशेषे द्वयोः प्रयोगे प्राप्ते पञ्चसु स्यादिषु स्त्रियां च तृप्रत्ययान्त एव । तृतीयादौ स्वरे उभयम् । अन्यत्र तु प्रत्ययान्त एवेति नियमार्थमिदमारम्भणीयम् । निमित्तव्यपदेशतादात्म्यशास्त्रकार्यरूपवि· षयकत्वेनातिदेशस्य षड्विधत्वेऽपि प्राधान्यादिह रूपमेवातिदिश्यते तच्च क्रुशेरेव । उप· स्थितत्वादर्थतः सादृश्याच्च ॥ ८० ॥

**( टादौ स्वरे क्रोष्टुशब्दस्य तृवद्वा )** क्रोष्ट्रा—क्रोष्टुना ।

क्रोष्ट्रे–क्रोष्टवे । क्रोष्टुः–क्रोष्टोः । क्रोष्टुः–क्रोष्टोः । क्रोष्ट्रोः–क्रोष्ट्वोः । कृताकृतप्रसङ्गी यो विधिः स नित्यः । नित्यानित्ययोर्मध्ये नित्याविधिर्बलवान्(क) । क्रोष्टूनाम् । क्रोष्टरि–क्रोष्टौ ॥ सह इना कामेन वर्तते सेः, सयौ, सयः । स्मृता ईर्लक्ष्मीर्येन स स्मृतेः, स्मृतयौ, स्मृतयः ॥ ८१ ॥

( सु० ) टादौ स्वरे क्रोष्टुशब्दस्य तृवद्भावः ॥ क्रोष्टृशब्दो वा तृप्रत्ययान्तः प्रयोज्यष्टादौ स्वरे ॥ तृप्रत्ययान्तक्रोष्टृशब्दस्य कर्तृवद्रूपमुकारान्तक्रोष्टुशब्दस्य भानुवत् । आमि तु तृवद्भावे नुडागमे च प्राप्ते सत्याह । कृतं चाकृतं च कृताकृते कृताकृतयोः प्रसङ्गोऽस्यास्तीति कृताकृतप्रसङ्गी यो विधिः स नित्यो विधिर्भवति । तृवद्भावे कृतेऽकृते च नुड्विधिर्नित्यः तृवद्भावस्त्वनित्यः । नित्यश्चानित्यश्च नित्यानित्यौ तयोर्नित्यानित्ययोर्विध्योर्मध्ये नित्यो विधिर्बलवान्बलिष्ठः ॥ कौमुद्यां तु आमि परत्वात् तृज्वद्भावे प्राप्ते नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेनेति नुडेव । तेन वारीणाम् । तिसृणाम् । क्रोष्टूनामिति(ख) ॥ इत्युदन्ताः ॥ 'कॄविक्षेपे ।' 'तॄप्लवनतरणयोः ।' अनयोरनुकरणे कॄ तॄ इति ॥ प्रकृतिवदनुकरणमिति वैकल्पिकातिदेशात् 'ऋत इर्' इति इरि 'घ्वो र्वि हसे' इति दीर्घे च कीः, किरौ, किरः, तीः, तिरौ, तिरः । इत्यादि गीर्वत् । इरभावपक्षे तु कॄः, क्रौ, क्रः । क्रम् , क्रौ, कॄन् । क्रा । क्रे । ङसिङसोः क्रः । दीर्घान्तत्वादामो न नुट् क्राम् । ङौ तु क्रि ॥ इत्यॄदन्ताः ॥ 'गम्लृ गतौ ।' 'शक्लृ शक्तौ ।' अनयोरनुकरणे गम्लृ शक्लृ इति । ऋवर्णलृवर्णौ चेति सावर्ण्यात् सेरेत्यात्वम् । गमा । शका । पञ्चल्विवत्यल् ॥ गमलौ, गमलः । गमलम्, गमलौ । शसि तु गम्लॄन् । लृकारस्य दीर्घस्वाभावाच्छसीति न दीर्घः ॥ ऌ लमिति लः । गम्ला । गम्ले । ङसिङसोस्तु ऋतो ङ उरित्युत्वम् । गमुल् । शकुल् । ङौ तु गमलि । शकलि ॥ इति ऌदन्ताः ॥ अस्यापत्यमिः कामः । अस्य कृष्णस्य स्त्री ईर्लक्ष्मीः । तेन तया वा सह वर्तते यः स सेः । सहादेरिति सहस्य सस्तत एत्वम् । स्वरादौ विभक्तावय् । सयौ ॥ इत्येदन्ताः ॥ ८१ ॥

---

( क ) कृतं चाकृतं च कृताकृते कृताकृतयोः प्रसङ्गोऽस्यास्तीति कृताकृतप्रसङ्गी यो विधिः स नित्यो विधिः । तृवद्भावे कृतेऽकृते च नुट्विधिर्नित्यः तृवद्भावस्त्वनित्यः । नित्यश्चानित्यश्च नित्यानित्यौ तयोर्नित्यानित्ययोर्विध्योर्मध्ये नित्यो विधिर्बलवान् बलिष्ठः ॥

क्रोष्टु शब्दस्य रूपं यथा—

| | | | |
|---|---|---|---|
| क्रोष्टा, | क्रोष्टारं, | क्रोष्टा–क्रोष्टुना, | क्रोष्ट्रे–क्रोष्टवे, |
| क्रोष्टारौ, | क्रोष्टारौ, | क्रोष्टुभ्याम् , | क्रोष्टुभ्याम् , |
| क्रोष्टारः, | क्रोष्टून् , | क्रोष्टुभिः, | क्रोष्टुभ्यः |

| | | |
|---|---|---|
| क्रोष्टुः–क्रोष्टोः, | क्रोष्टुः–क्रोष्टोः | क्रोष्टरि–क्रोष्टौ |
| क्रोष्टुभ्याम् , | क्रोष्ट्रोः–क्रोष्ट्वोः | क्रोष्ट्रोः-क्रोष्ट्वोः |
| क्रोष्टुभ्यः, | क्रोष्टूनाम् , | क्रोष्टुषु |

हे क्रोष्टो
हे क्रोष्टारौ
हे क्रोष्टारः ।

( ख ) पाणिनीयमतं दर्शयति—कौमुद्यामिति । सिद्धान्तकौमुद्यामिति भावार्थः ।

रै स्भि ॥ रैशब्दस्याकारादेशो भवति सकारभकारादौ स्यादौ विभक्तौ ॥ सुराः, सुरायौ, सुरायः । सुराभ्याम् । सुरासु ॥ ८२ ॥

( सु० ) रै स्भि ॥ रै इत्यविभक्तिको निर्देशः । रायः आत्वं स्यात् स्भादौ विभक्तौ ॥ स्भीति किम् । रायौ ॥ स्यादौ किम् । रैभारः । रैसहायः । 'अर्थ रै विभवा अपि' इत्यमरः ॥ इत्यैदन्ताः ॥ ८२ ॥

( त० ) रै स्भीति ॥ स् च भ् च स्भ् तस्मिन् । स्भादौ स्यादावित्यर्थः ॥ स्भादौ किम् । रायौ ॥ स्यादौ किम् । रैभारः । रैसहायः ॥ ऐ स्भीति न सूत्रितम् । 'ऐकारः स्यान्महेश्वरः' इत्येकाक्षरकोशादिस्थैकारान्तेऽतिप्रसङ्गात् ॥ ८२ ॥

ओरौ ॥ ओकारस्यौकारादेशो भवति पञ्चसु ॥ गौः, गावौ, गावः । हे गौः ॥ ८३ ॥

( सु० ) ओरौ ॥ ओकारस्यौकारो भवति ओकारान्ताद्विहितेषु पञ्चसु परेषु ॥ पञ्चसु किम् । गवा ॥ विहितविशेषणं किम् । हे भानो । हे भानवः । धौ एओ जसीस्योकारे कृते औत्वं प्राप्तं विहितविशेषणाद्वार्यते ॥ ८३ ॥

( त० ) ओराविति ॥ ओकारान्ताद्विहितेषु पञ्चसु स्यादिष्विति बोध्यम् । तेन हे भानौ, हे भानव इत्यादौ नातिप्रसङ्गः । उकारान्ताद्विहितौ सिजसावत्र न त्वोकारान्तात् ॥ नन्वोरित्युक्ते उवर्णस्य कुतो न ग्रहणमिति चेन्न द्विगुः उत ऊरित्यादिनिर्देशेन ओकारस्यैव ग्रहणात् ॥ ८३ ॥

आऽम्शसि ॥ ओकारस्यात्वं भवति अमि शसि च ॥ गाम्, गावौ, गाः । गवा, गोभ्याम् । ङस्य । गोः । एवं सुद्यौः । स्मृत उः शम्भुर्येन स स्मृतौः, स्मृतावौ, स्मृतावः । ग्लौः, ग्लावौ, ग्लावः ॥ ८४ ॥

इति स्वरान्ताः पुँल्लिगाः ॥

( सु० ) आऽम्शसि ॥ ओत आत्वं स्यात् ॥ शसा साहचर्यात् स्यादीनामेवम् गृह्यते । नेह । अचिनवम् । असुनवम्(क) । औतोऽपवादोऽयम् । अम् च शश्चानयोस माहारोऽम्शस् तस्मिन् अम्शसि । गाः इत्यत्र न त्वाम्शसीत्यात्वे इत्युक्तेः 'सो नः पुंसः' इत्यनेन सस्य नकारो न । सुष्ठु द्यौर्यस्मिन् दिवसे स सुद्यौः । 'द्योदिवौ द्वे स्त्रियामभ्रम्' इत्यमरः ॥ उः शम्भुः स्मृतो येनः सः स्मृतौः । बहुव्रीहाविति क्तान्तस्य पूर्वनिपातः ॥ इत्योदन्ताः ॥ 'ग्लौर्मृगाङ्कः कलानिधिः' इत्यमरः, ॥ स्वरे आव् । ग्लावौ, ग्लावः ॥ इत्यौदन्ताः ॥ ८४ ॥ इति सुबोधिन्यां स्वरान्ताः पुंलिङ्गाः ॥

( त० ) आऽम्शसीति ॥ आ अम्शसीति च्छेदः । अम् च शस् च अनयोः समाहारोऽम्शस् तस्मिन् ॥ अम्शसीति किम् । गावौ । रलोर्वं उरित्यादिनिर्देशान्नोवर्णशङ्का ।

(क) अचिनवम्, असुनवम्, इत्यादौ लङ्थामि आम् परत्वात्कथमात्वं नेति शङ्कां समाधत्ते—शसेति ।

दर्पणीनृपमुशासितपूर्व्यां काटकीयपुरुषोत्तमपल्याम् ।
यास्कवंशजनुदीनजनस्य श्रीनवस्य रचनास्तु रमेशे ॥

इति श्रीचक्रधराख्यटिप्पण्यां स्वरान्तपुँल्लिङ्गाः समाप्ताः । जगतः शुभमस्तु ।

स्याद्यधिकारादविनवमित्यत्रातिप्रसङ्गोऽपि न । ओतः किम् । ग्लावम् ॥ ८४ ॥

श्रीविद्यानगरस्थायिलोकेशकरशर्मणा कृतायामिह टीकायां पुंलिङ्गोऽगात्स्वरान्तकः ॥

इति तत्त्वदीपिकायां स्वरान्ताः पुँल्लिङ्गाः ॥ ७ ॥

# अथ स्वरान्ताः स्त्रीलिङ्गाः ॥ ८ ॥

**आपः ॥ आदन्तादाबन्तात्परस्य सेर्लोपो भवति ॥ गङ्गा ॥ १ ॥**

( सु० ) **आपः** ॥ आ आप इत्याकारप्रश्लेषादाकारान्तादाबन्तान्नाम्नः परस्य सेर्लोपः स्यात् ॥ आबन्तात्किम् । सोमपाः ॥ आदन्तात्किम् । खट्वामतिक्रान्तोऽतिखट्वः । एकदेशविकृतस्यानन्यत्वादाबन्तत्वेऽपि न सिलोपः आदन्ताबन्ताभावात् ॥ १ ॥

( त० ) **आप** इति ॥ अत्र आ आबिति प्रश्लेषादाकाररूपस्यैवापो ग्रहणादतिगङ्ग इत्यादौ नातिप्रसङ्गः । न चात्र गौणमुख्यन्यायादेव नेति वाच्यं तस्य विशिष्टरूपोपादानविषयत्वात् । अत्र तु आप इति प्रत्ययग्रहणं न तु किंचिद्विशिष्टरूपम् ॥ अत्राहुः ॥ आप इति सानुबन्धग्रहणं व्यर्थविशेषग्रहणं त्वर्थविशेषादेवेति । अत्रेदमवधेयम् । अर्थविशेषानुशरणानुधावनतः सानुबन्धनिर्देशस्य लघुत्वात् ॥ न चाप इति सूत्रं व्यर्थं हसेपः सेर्लोप इत्यत्रैव हस आ ईबिति प्रश्लेषेण पकारस्योभययोजनेनैवेष्टसिद्धेः । उत्तरत्रोभयानुवृत्तिस्तु स्त्रीभ्रुवोरित्यस्याम्शसीत्यत्रैव निरसनायेति चेत् । न । त्रिद्वन्द्वे सति पश्चात्पकारेण सम्बन्धे अन्तरङ्गत्वाद इ ए इति कृते हसेप इति स्यात् । त्रिपदे द्वन्द्वे तु पकारस्याकारेण संबन्धो न लभ्यते । अतः सूत्रारम्भ एवोचित इत्युक्तं वृद्धैः । तत्रेदमवधेयम् । अइएसवर्णदीर्घयोरन्तरङ्गबहिरङ्गत्वविशेषे मानाभावः । किं च हसैप इति जातेऽपि मात्रागौरवाभावः । किं च त्रिपदेऽपि द्वन्द्वे पकारानन्वये न कापि क्षतिः । लृनः शान्तिः सोममालभेतेत्यत्रेव अर्थविशेषस्यैव निश्चायकत्वमिति स्वयमेवास्याभ्युपगमादित्यूहनीयमायुष्मता ॥१॥

**औ आदन्तादाबन्तात्पर औ ईर्भवति॥ गङ्गे, गाङ्गः ॥ २ ॥**

( सु० ) **औ** ॥ औ इत्यविभक्तिको निर्देशः । आप इत्यनुवर्त्तते । धिरीरित्यत ई इति च ॥ २ ॥

( त० ) **औ** इति ॥ अविभक्तिकमौकारविभक्तेरनुकरणम् ॥ आप इति किम् । सोमपौ । आदन्तात्किम् । गङ्गियौ । दीर्घग्रहणं तु 'ध्वे द्वित्वे' इत्येतदर्थम् । जरसीति तु सन्निपातपरिभाषयैव ॥ तद्धह्रस्वत्वेऽपि न क्षतिः ॥ २ ॥

**धिरीः ॥ आदन्तादाबन्तात्परो धिरीर्भवति । हे गङ्गे । गङ्गाम् , गङ्गे, गङ्गाः ॥३॥**

( सु० ) **धिरीः** ॥ आप इत्यनुवर्तते । दीर्घविधानमौ इति सूत्रेऽनुवृत्त्यर्थम् । वस्तुतस्तु ह्रस्व एव युक्तः । शसि तु स्त्रीत्वान्नत्वाभावः । गङ्गाः ॥ ३ ॥

( त० ) **धिरीरिति** ॥ दीर्घविधानमुत्तरार्थम् । जराशब्दस्य तूक्तरीत्यव निरासः । आपः किम् । हे हाहाः ॥ आदन्तात्किम् । हे अतिगङ्ग । हे अतिगङ्गे, इत्यत्र स्थानिवद्भावेन धेर्लोपस्तु न सूत्रारम्भसामर्थ्यात् ॥ ३ ॥

**टौसोरेः ॥ आदन्तस्याबन्तस्य टौसोः परयोरेत्वं भवति ॥ गङ्गया ।**

(सु०) टौसोरेः ॥ टाश्च ओश्च टौसौ तयोष्टौसोः परतः आदन्तस्याबन्तस्यैत्वं स्यात् ।४।

(त०) टौसोरेरिति ॥ टाश्च औश्च टौसौ तयोः ॥ आपः किम् । हाहा । हाहौ । अत्राप्या-कारं प्रश्लिष्य पूर्ववदादन्तस्याबन्तस्येति व्याख्यानादतिगङ्गिया इत्यादौ नातिप्रसङ्गः ॥४॥

**ङितां यट्** ॥ आदन्तादाबन्तात्परेषां ङेङसिङस्ङीनां यडागमो भवति ॥ गङ्गायै । गङ्गायाः । गङ्गायाः, गङ्गयोः, गङ्गानाम् ॥ ५ ॥

( सु० ) ङितां यट् ॥ ङ् इद्येषां तानि तेषां ङिताम् । वचनापेक्षया क्लीबत्वम् । ङ् इत् यासां ता ङितस्तासाम् । विभक्त्यपेक्षया स्त्रीत्वं वा । ङ् इत् येषां ते ङितस्तेषाम् प्रत्ययापेक्षया पुंस्त्वं वा । आदन्ताबन्तात् ङितां यट् स्यात् ॥ टित्वादादौ ऐत्वम् ॥ गङ्गायै । सवर्णदीर्घे । गङ्गायाः ॥ ५ ॥

( त० ) ङितां यडिति ॥ ङ् इद्येषां यासां वेति वचनविभक्तिप्रत्ययानामन्यतमस्यान्यपदार्थत्वेन विग्रहः ॥ आप इति किम् । हाहै ॥ आदन्तादिति किम् । अतिगङ्गाय ॥ ङितां किम् । गङ्गा ॥ अतिगङ्गायेत्यत्र तु आकारस्य श्रूयमाणत्वात्स्थानिवत्त्वेनाबन्तत्वाच्च यट् तु न । लाक्षणिकत्वात् । अवयवशो व्युत्पादितत्वादिति स्वीकारात् ॥ ५ ॥

**आम्ङेः** ॥ आदन्तादाबन्तात्परस्य ङेरामादेशो भवति ॥ गङ्गायाम्, गङ्गयोः, गङ्गासु ॥ एवं श्रद्धामेधादुर्गादयः ॥ ६ ॥

( सु० ) आम्ङेः ॥ तिष्ठतेवत्क्रियायामित्यादिनिर्देशात् सप्तम्येकवचनस्यैव ग्रहणं न तु चतुर्थ्येकवचनस्य ॥ ननु गङ्गायामित्यादौ ङेरामादेशे कृते नुडाम इति नुट् स्यादिति चेन्न । परत्वात् ङितामिति यटा बाधनात् ॥ ननु ङितां यडागमो विधीयते आमादेशस्तु-न ङिदिति कथं तस्य यडिति चेन्न । आदेशः स्थानिकार्यं लभते इति स्वीकारात् । अत्र क्रियायामिति निर्देशो मानम् ॥ श्रद्धा प्रतीतिः मेधा बुद्धिः । दुर्गा पार्वती ॥ ६ ॥

( त० ) आम्ङेरिति ॥ अत्र ङेरिति सप्तम्येकवचनम् । न तु चतुर्थ्येकवचनम् । व्याख्यानात् । अत्रार्थे क्रियायामित्यादिनिर्देशोऽप्यनुकूलः ॥ ननु गङ्गायामित्यादौ नुडाम इति नुडस्तु इति चेत् न परत्वाद्यटा बाधात् । न चामि कृते ङित्त्वाभावाद्यडेव कथमिति वाच्यम् । आदेशः स्थानिकार्यं लभत इत्यभ्युपगमात् । अत्रापि क्रियायामिति निर्देशो मानम् ॥ ६ ॥

**( अम्बार्थानां द्विस्वराणां धौ ह्रस्वः )** हे अम्ब । हे अक्क । हे अल्ल । शेषं गङ्गावत् । द्विस्वराणामिति किम् । हे अम्बाडे । हे अम्बाले । हे अम्बिके ॥ ७ ॥

( सु० ) अम्बार्थानां द्विस्वराणां धौ ह्रस्वः ॥ अम्बार्थानां द्विस्वराणां ह्रस्वः स्याद्धौ परे ॥ "अम्बा माताऽथ बाला स्यात्" इत्यमरः ॥ ७ ॥

( त० ) अम्बार्थानामिति ॥ एतन्मूलं तु यटोऽच्चेत्यतोऽनुक्तसमुच्चयार्थचकारानुवृत्तिस्ततोऽस्यार्थस्य संग्रह इति वृद्धाः ॥ ७ ॥

**याटोऽच्च** ॥ सर्वादेः परस्य यटः सुडागमो भवति पूर्वस्य चापोऽका-

रः ॥ सर्वस्यै । सर्वस्याः । सर्वस्याः, सर्वयोः, सर्वासाम् । सर्वस्याम् । एवं विश्वादयोऽप्याबन्ताः ॥ जरा, जरसौ–जरे, जरसः–जराः ॥ ८ ॥

( सु० ) यटोऽच्च ॥ आप इत्यनुवर्तते । आबन्तसर्वादेर्याडागमस्य सुट् स्यात् आपः स्थानेऽच्च ॥ सर्वादेः किम् । गङ्गायै ॥ यटः किम् । सर्वाभ्याम् ॥ जृष् वयोहानावित्यस्मात् 'षिद्भिदादिभ्योऽङ्' इत्यङि 'ऋतोऽङि गुणः' इति गुणे कृते आप् । जरा । जरायाः स्वरादौ जरसिति स्वरादिविभक्तौ जरस् । औ परतः औ इतीत्वं न नित्यत्वाज्जरस् । जरसौ । आमि तु जरसामिति । जराया इति वचनसामर्थ्यात् ॥ पक्षे हसादौ च गङ्गावत् ॥ ८॥

( त० ) यटोऽच्चेति ॥ यटः अत् चेति छेदः ॥ अत्राहुः । ननु यटः सर्वादेः परत्वं नास्ति आपा व्यवधानात् इति चेत्सत्यम् । वचनसामर्थ्यात्तेन व्यवधानं सह्यते । आपं विना हि यट एव दुर्लभत्वात् । अड्व्यधावपि सर्वादेरिति पञ्चमीति पक्षे सवर्णदीर्घे कृते एकदेशविकृतन्यायेन सर्वादेः परस्य विधीयमानो यडाप एव भवति अन्यस्यासम्भवात् । षष्ठीपक्ष एकदेशविकृतन्यायेन सर्वादेरकारो भवति ऊनाधिकभावेन विकारस्य द्वैविध्यादिति । अत्रेदमवधेयम् । अत्राबन्तात्सर्वादेरिति व्याख्याने आपो व्यवधायकत्वाभावेन तद्व्यवधानशङ्का निर्मूलैव तदन्तग्रहणे वाऽऽप इत्यादावाकारप्रश्लेष एव लिङ्गम् । किञ्च केवलस्यापः प्रत्ययत्वेन तत्परविभक्तेरभावात्तत्कार्यासम्भव इति दिक् ॥ ८ ॥

**दिक्समासे बहुव्रीहौ सर्वादेर्वा सर्वकार्यम्** ॥ दक्षिणपूर्वस्यै-दक्षिणपूर्वायै । उत्तरपूर्वस्याः-उत्तरपूर्वायाः ॥ अन्तरस्यै शालायै बाह्यायै इत्यर्थः ॥ अपुरीत्युक्तेर्नेह । अन्तरायै नगर्यै । द्वितीयस्यै-द्वितीयायै । तृतीयस्यै-तृतीयायै । नासिका, नासिके, नासिकाः । नासिकाम् , नासिके । नासिकायाः नस् । नसः नासिकाः । नसा–नासिकया । नोभ्याम्-नासिकाभ्याम् ॥ पक्षे पञ्चसु गङ्गावत् ॥ पृतनायाः पृत् । पृतः । पृता पृद्भ्याम् । निशायाः निश् । निशः । निशा ॥ ९ ॥

( सु० ) दिक्समासे बहुव्रीहौ सर्वादेर्वा सर्वकार्यम् । गौणत्वादप्राप्ते विभाषेयम् । दिशां समासो दिक्समासस्तस्मिन् । बहुव्रीहौ सर्वादेः सर्वादिकार्यं वा वाच्यम् ॥ दक्षिणस्याः पूर्वस्याश्च अन्तराले मध्ये या दिक् सा दक्षिणपूर्वा । तस्य ॥ उत्तरस्याः पूर्वस्याश्च अन्तराले या दिक् सा उत्तरपूर्वा तस्याः ॥ अन्यपदार्थोऽपि दिक्शब्दवाच्य एव ग्राह्यस्तेन नेह । योत्तरा सा पूर्वा यस्या उन्मत्तायाः सा उत्तरपूर्वा । तस्यै उत्तरपूर्वायै ॥ अन्तरोऽपुरि परिधाने बहिर्योगे इत्युक्तत्वादन्तरशब्दस्य बहिरर्थे सर्वकार्यम् । अन्तरस्यै शालायै । नगरबाह्यायै इत्यर्थः । अन्तरस्य न पुरि सर्वकार्यम् । अन्तरायै । न सुट् ॥ द्वितीयातृतीययोस्तीयस्य ङित्सु वा सर्ववदित्युक्तत्वात् ङेङसिङस्ङिषु वा सर्ववत् । शेषं गङ्गावद्रूपम् ॥ पादद्न्तेति नासिकाशब्दस्य शसादौ नस् । सस्य विसर्गे हबे इत्युत्वे ओत्वे च नोभ्याम् ॥ पृतना सेना ॥ ९ ॥

( त० ) दिक्समासे इति ॥ दिशां दिग्वाचकानां शब्दानां समास इत्यर्थः । एतन्मूलं तु यटोऽच्चेत्यत्र चेत्यनुवृत्तेर्व्यवस्थितत्वाश्रयणम् ॥ ९ ॥

**छशषराजादेः षः** ॥ छकारान्तस्य शकारान्तस्य षकारान्तस्य राजूयज्सृजूमृजूभ्रस्जव्रश्चभ्राजां च षकारो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च ॥ १० ॥

( सु० ) छशषराजादेः षः ॥ छान्तस्य शान्तस्य षान्तस्य राजादेश्च नाम्नः षः स्यात् रसे पदन्ते च । छान्तस्य शान्तस्य षान्तस्य राजादेश्च धातोः षः स्यात् झसे पदान्ते च ॥ छान्तस्य नाम्नो यथा । तत्त्वप्राट्–तत्त्वप्राड् । भजां विणिति विण्प्रत्यये अकृतव्यूहपरिभाषया द्वित्वं न प्रवर्तते । ततोऽसिद्धपरिभाषया न वृद्धिः । वृद्धेर्विण्निमित्तत्वेन षत्वं प्रति बहिरङ्गत्वात् ॥ धातोश्च यथा । प्रष्टा । अप्राप्ट् ॥ शान्तस्य नाम्नो यथा । विट् । विड्भ्याम् ॥ धातोश्च यथा । वेष्टा । अवेवेट् ॥ षान्तस्य नाम्नो यथा । द्विट् । द्विड्भ्याम् ॥ धातोश्च यथा । द्वेष्टा । अद्वेट् ॥ षस्य षविधानमादेशान्तरनिवृत्त्यर्थम् । ततः पुरस्तादपवादन्यायेन खसे चपा एव बोध्यो न तु व्यवहितो 'झबे जबाः' इति च । अयं च निषेधः स्यादौ न लक्ष्यानुरोधात् । तेन षट्सु इत्यादिसिद्धिः । द्विड्ढ्वे । अत्र 'झबे जबाः' अद्वेट्-अद्वेडत्र 'वाऽवसाने' च स्यादेव । व्यवहितविधित्वात ॥ राजादयस्तु 'राजृ दीप्तौ । यज देवपूजादौ । सृज विसर्गे । मृजूष् शुद्धौ । भ्रस्ज पाके । ओव्रश्चू छेदने ॥ भ्राजृ दीप्तौ ।' आदिशब्दात् परिव्राजूशब्दो विण्णन्तो ग्राह्यः । दिशामिति सूत्रे स्रग्गृत्विजोः पाठस्तु षत्वबाधनार्थः । असधातोरौणादिके ऋजप्रत्यये सिद्धोऽसृजशब्दो न गृह्यते लाक्षणिकत्वात् ॥ १० ॥

( त० ) छशषराजादेः ष इति ॥ यद्यपि छान्तस्य नाम्नोऽसम्भवः क्विपि छस्य शविधानात् तथापि विणि तत्त्वप्राट्छब्दस्य तत्त्वप्राडिति रूपं मन्वानैः सूत्रे छग्रहणमङ्गीकृतम् । अकृतव्यूहपरिभाषया द्वित्वाभावः । असिद्धपरिभाषया वृद्ध्यभावः । वृद्धेर्विण्निमित्तकत्वेन षत्वं प्रति बहिरङ्गत्वात् । अत्र षस्य षविधानमन्यविधिबाधनार्थम् । पुरस्तादपवादन्यायेन खसे चपा एव बाध्यः न तु व्यवहितो झबे जबा इति वाऽवसान इति वा । अयं निषेधो न स्यादौ लक्ष्यानुरोधादिति वृद्धाः । तेन षट्स्वित्यादिसिद्धिः । द्विड्ढि । अत्र 'झबे जबाः' । अद्वेट्–अद्वेड् । अत्र च 'वावसाने' च भवत्येव व्यवहितविधित्वात् ॥ राजूयजूसृजूमृजूभ्रस्जूव्रश्चूभ्राजूपरिव्राजोऽष्टौ राजादयः । स्रजृत्विजोस्तु दिशादिषु पाठः षत्वबाधनार्थः । असृज्शब्दस्तु न सृजेः किंतु असेरौणादिक ऋजप्रत्यये बोध्यः । लाक्षणिकत्वान्न गृहीतः । भ्राजिस्तु राजृसाहचर्यादिजृसहचरितो न गृहीतः ॥ १० ॥

( षो डः ) निड्भ्याम् । निड्भिः । निट्त्सु–निट्सु–निशासु । केचित्तु धातोरेव षत्वमाहुः तन्मते तु 'झबे जबा' इति जकारः–निज्भ्याम्, निज्भिः । श्चुत्वम् । निच्सु–निशासु ॥ गोपाः सोमपावत् ॥ बुद्धिः, बुद्धी, बुद्धयः । हे बुद्धे । बुद्धिम् । बुद्धीः । बुद्ध्या ॥ ११ ॥

( सु० ) षो डः ॥ षस्य नाम्नो विशेषणात्तदन्तविधिः । षान्तस्य नाम्नोऽन्तस्य डः स्यात् रसे पदान्ते च ॥ षष्ठीति निर्देशात् थट्प्रत्यये न षस्य डः । षष्ठः ॥ ननु 'वाऽवसाने' 'झबे जबाः' खसे चपा झसानामित्यन्तैः सूत्रैष्टडयोर्लाभान्माऽस्त्विदं सूत्रम् ।

उच्यते । षाण्मातुर इत्यादिसिद्ध्यर्थमिदमावश्यकम् । यथा षाष् मातुर इति स्थिते षो ड इति डत्वे कृते 'त्वन्मदेकत्वे' इति निर्देशाज्जबस्यापि अमो भवतीति ॥ अष्टनो डौ वेति निर्देशाच्च ड्वेष्टीत्यादावपि न डत्वम् ॥ शस्य षत्वे डत्वम् । निड्भ्याम् । सुपि डस्य खसे चपा इति चपत्वे टनात्सस्य वेति वा धुट् । धस्य चपत्वम् । धुडभावे टस्य धुट्पक्षे च तकारस्य शसे चपस्येत्यनेन टथौ न, कुकुटुकुवर्जितस्येति निषेधात् । स्यादीनां सस्येति न षुत्वम् । निट्सु-निट्त्सु ॥ परिशिष्टकारादयः छशषराजादेरिति सूत्रे धातोश्च इति सूत्राद्धातोरित्येवानुवर्तयन्ति न तु नास्न इति । तन्मते झबे जबा इत्यनेन शस्य जकारे निज्भ्यामिति । सुपि खसे चपा इति शस्य चः । स्तोः श्चुभिरिति शत्वम् । 'चपाच्छः शः' इति पक्षे शस्य छत्वमपि बोध्यम् । निच्सु ॥ चोः कुरिति कुत्वं न चपस्यासिद्धत्वात् ॥ इत्याबन्ताः ॥ गोपाशब्द आकारान्तः ॥ बुद्धिः प्रायेण हरिवत् । स्त्रीत्वात्सो नः पुंस इति न नत्वम् । बुद्धीः । अस्त्रियामित्युक्तत्वाट्टानेति नात्वं न । अबुद्ध्या ॥११॥

( त० ) षो ड इति ॥ ननु इदं सूत्रं किमर्थम् 'झबे जबाः' 'वाऽवसाने' इति सूत्राभ्यां कार्यसिद्धेरव्याहतत्वात् । अथ कथं षडानन इत्यादाविति चेत्सत्यं वाऽवसान इत्यस्याप्रवृत्तेः । अत्रावसानत्वाभावात्कथमिति चेत् । शृणु । अवसीयत इत्यवसानपदेन नह्यवसीयतेऽतः पदान्ततैवावसानम् । अन्यथा षाण्मातुर इति न सिद्ध्येत् । तथा हि षाष्मातुर इति स्थिते षो ड इति डत्वे चपाभावाद् ञमत्वाभावः । अस्मन्मते तु 'वाऽवसाने' इत्यनेनैव रूपसिद्धिः । अथ त्वन्मदेकत्व इति निर्देशेन जबस्यापि ञमत्वमिति न वाच्यम् । तत्र 'वाऽवसाने' इत्यनेनैव तत्त्वे तस्य ञमत्वाद्रूपसिद्धेर्ज्ञापकानुसरणक्लेशस्य व्यर्थत्वात् । षण्णामित्यपि ड्ण इत्यस्य षो णो नामोत्यथस्यैव वक्तुमुचितत्वेन षशब्दस्यैव प्रथमैकवचनम् ड् इति रूपत्वात् । ड्वेष्टीत्यादौ त्वष्टन इति निर्देशेन 'षो डः' 'खसे चपा' इत्युभयोरपि निवृत्तिरिति सूत्रं व्यर्थम् । वस्तुतस्तु 'झबे जबाः' इति सूत्रेण विधास्यमानस्य षस्थाने डस्यैव विधानानुवादार्थमिदं सूत्रमिति ध्येयम् । अस्मिन् ग्रन्थे समानवर्गजस्यैव सावर्ण्यस्योक्तत्वेन षडयोस्तदभावात्तुल्यास्यप्रयत्नं सवर्णमित्यस्याप्रणयनात्कथं षस्य डत्वमित्याशङ्कायां षो ड इत्यस्य विहितत्वादिति दिक् ॥ निज्भ्यामिति ॥ प्रथमातिक्रमे कारणाभावात्प्रथम इति न्यायेन जकार इति भावः ॥ निच्स्विति ॥ खसे चपा इति षस्य चत्वं तद्योगे स्तोः श्चुरिति सोः सस्य शत्वमित्यर्थः ॥ ११ ॥

**इदुद्भ्याम्** ॥ स्त्रियां वर्तमानाभ्यामिकारोकाराभ्यां परेषां ङितां वचनानां वाऽडागमो भवति ॥ बुद्ध्यै–बुद्धये । बुद्ध्याः–बुद्धेः । बुद्ध्याः–बुद्धेः । बुद्धीनाम् । स्त्रियां योः । बुद्ध्याम् । अडागमाभावे आमोऽप्यभावः(क) । बुद्धौ ॥ एवं मतिभूतिधृतिरुच्यादयः ॥ धेनुरज्जुदनुचञ्चवादयोऽप्येवम् ॥१२॥

---

( क ) **अडागमाभाव इति** । सन्नियोगशिष्टानां सहवा प्रवृत्तिः सह वा निवृत्तिरिति न्यायादाह–आमोऽप्यभाव इति । अत्र कश्चित्—अडागमाभावपक्षे तु प्रवृत्तोऽप्यामादेशः परत्वादौत्वेन बाध्यते । ततश्चाडामादेशयोरेकविषयत्वमेवेति निर्णीयाह—अडागमाभावः । इति व्याचष्ट स्म ।

इह तु पक्षेऽटो व्यवधानाभावात् परेणौत्वेन बाधितत्वादामोऽप्यप्रवृत्तिरित्यर्थः । **बुद्धाविति** । ङेरौ ङिदित्यैत्वे टिलोपः । **एवमिति** । एतैरेव सूत्रैरुकारान्ता अपि सहोक्तप्रक्रियत्वाज्ज्ञेयः इत्यर्थः

( सु० ) इदुद्भ्याम् ॥ इच्च उच्च इदुतौ ताभ्यामिदुद्भ्याम् । वेयुव इत्यतो वेत्यनुवर्तते । ङितामाडिति च । स्त्रियां ङितां वाऽट् स्यात् ॥ ङितामडिति नित्ये प्राप्ते विभाषेयम् ॥ स्त्रियामिति किम् । सख्ये । पत्ये ॥ ङितामिति किम् । मतिभ्यः ॥ तपरत्वं किम् । नद्यै ॥ अट् । बुद्ध्यै । अडभावे ङितीत्येत्वम् । बुद्धये । ङौ तु अडामोः सहैव प्रवृत्त्यप्रवृत्ती । सन्नियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिरिति न्यायात् ॥ १२ ॥

( त० ) इदुद्भ्यामिति ॥ इच्च उच्च इदुतौ ताभ्याम् । सन्नियोगशिष्टन्यायादडामोः सहैव प्रवृत्त्यप्रवृत्ती । यद्वा आमोऽभावे परत्वात् ङेरौ ङिदित्यौकारः । न च । नित्यत्वादट् । औकारे टिलोपे च इकारान्तत्वाभावात् । परत्वादटा बाधादामि कृते नुडभावः । वेयुव इत्यत्र ह्रस्वानुवृत्तेर्ह्रस्वाच्चेति सिद्धेऽपि मात्रे इत्यादौ ह्रस्वत्वाविशेषेणातिव्याप्तिवारणायेदं सूत्रमिति वृद्धाः । तत्परत्वमपि नित्यविकल्पयोर्व्यवस्थार्थम् । अन्यथा उभयोर्विकल्पो नित्यो वा स्यात् । दीर्घस्य विकल्पः ह्रस्वस्यैव नित्य इति विपर्ययो वा स्यादिति ॥ स्त्रियामिति किम् । सख्ये ॥ ङितामिति किम् । मतिभ्याम् ॥ इदुद्भ्यामिति किम् । मात्रे ॥ तपरत्वं किम् । नद्यै ॥ इदुद्भ्यामित्यस्यैव तन्त्राश्रयणात् इदुद्भ्यां ङितामड्वा । अटि सति ङसामिति । एतेनाटि सति अटो ङिद्विभक्तित्वेन ङेरिदुदन्तात्परत्वानपायादौत्वं स्यादित्यादिकमपास्तम् । अडामोः सहैव प्रवृत्तत्वात् ॥ १२ ॥

**त्रिचतुरोः स्त्रियां तिसृचतसृवत्** ॥ स्त्रियां वर्तमानयोस्त्रिचतुरशब्दयोस्तिसृ चतसृ इत्येतावादेशौ भवतो विभक्तौ । ऋकारश्च ऋकारवत् । ततोऽरारुकारा न भवन्ति । सेरा घेरर् तु भवति ॥ तिस्रः तिस्रः । तिसृभिः । तिसृभ्यः । तिसृभ्यः (क) ॥ १३ ॥

( सु० ) त्रिचतुरोः स्त्रियां तिसृचतसृवत् । त्यदादेरित्यतः स्यादावनुकृष्यते । स्त्र्यर्थवाचकयोरेतयोरेतावादेशौ स्तो विभक्तौ । रा ऋकारेण तुल्यम् ऋवदिति वाक्यान्तरम् । ऋ ऋवादिति पदच्छेदः । य्वोरित्यतः स्वरे इत्यनुवर्तते । स्वरे परे तिसृचतसृशब्दयोः ऋकार ऋकारकार्यं लभते तच्च रत्वम् । तेन पञ्चसु इति क्वाविति चार् स्तुरारित्यार् ऋतो ङ उरित्युकारः एते विषया न । अमृशसोरल्लोपोऽपि न । सेरस्यात्वम् । घेररित्यर् तु भवत्येव । स्वरपरत्वाभावात् ॥ तिसृ इत्यत्र क्विलादिति षत्वाभावप्रदर्शनेनादेशावयवे षत्वं नेति ज्ञापितम् । सैषादिति षत्वनिर्देशेन समास्त्रादेशस्य षत्वं भवतीति ज्ञापितं च ॥ विभक्तौ किम् । तिस्रः प्रिया यस्य स त्रिप्रियः इत्यत्र तु न । लुकि न तन्निमित्तमित्युक्तत्वात् ॥ स्त्रियां किम् । त्रयः । चत्वारः ॥ १३ ॥

( त० ) त्रिचतुरोः स्त्रियां तिसृचतसृवदिति ॥ अत्र त्यादादेरित्यतः स्यादा-

---

(क) त्रिचतुरोरिति । 'त्यदादेरः स्यादा' वित्यतः स्यादावित्यनुकृष्यते । स्त्रियामिति त्रिचतुरोरेव विशेषणम् । भूतत्वात् । त्रिचतुरोस्त्वनुवृत्तस्य नाम्नो विशेषणम् । स्त्र्यर्थाभिधायकत्रिचतुरशब्दान्तनाम्नोस्तिसृचतसृ इत्येतावादेशौ स्यातां स्यादौ परतः ऋवादिति भिन्नं वाच्यम् । ऋवदिति पदच्छेदः । तिसृ चतसृ इति सम्बध्यते तच्च षष्ठ्या विपरिणम्यते । य्वोर्धातोरित्यतः स्वरे इत्यनुवर्त्तनीयम् । तिसृचतस्रोर्ऋकार ऋकारवद् भवति स्वरे परतः । रा तुल्यं ऋवत् ऋकार्यं प्राप्नोतीति निष्कर्षः । तच्च कार्यं रत्वम् । तथा चारारुकारा न स्युः अम् शसोरल्लोपो न । सेरा घेरर् तु स्याताम्, हसकार्यत्वात् ।

वित्यनुकृष्यते । स्त्र्यर्थवाचकत्रिचतुरन्तनाम्नस्तिसृचतसृ आदेशावित्यर्थः ॥ अनेकाक्षरत्वात्संपूर्णस्य प्राप्तौ निर्दिश्यमानस्यादेशा भवन्तीति त्रिचतुरोरेव केवलयोस्तु व्यपदेशिवद्भावात् ॥ ऋकारश्चेति ॥ अत्र य्योरित्यतः स्वरे इत्यनुवर्त्य वाक्यभेदेन व्याख्येयम् । तेन ऋकारः स्वरे ऋवद्भवतीत्यर्थः ॥ रा तुल्यम् ऋवत् । आतोऽशारुकाराणां स्वरकार्यत्वादभावः । सेरा धेरर् एतयोस्तु हसकार्यत्वात्प्रवृत्तिरिति भावः ॥ १३ ॥

( न तिसृचतस्रोर्नामि दीर्घः ) तिसृणाम् । स्त्रियामिति त्रिचतुरोर्विशेषणान्नेह । प्रियास्त्रयः प्रियाणि त्रीणि वा यस्याः सा प्रियत्रिः । बुद्धिवत् । आमि प्रियत्रयाणाम् । यदा स्त्रियां मुख्यौ लिङ्गान्तरे गौणौ तदैतौ स्तः । प्रियास्तिस्रो यस्य स प्रियतिसा, प्रियतिस्रौ, प्रियतिस्रः । हे प्रियतिसः । नाम्शसोरल्लोपः । प्रियतिस्रम् । प्रियास्तिस्रो यस्य कुलस्य तत् कुलं प्रियत्रि, प्रियतिसृणी, प्रियतिसृणि ॥ स्वृणां नपुंसके धौ गुणो वा । हे प्रियतिसः–हे प्रियतिसृ । टादौ स्वरे टादाविति पुंवत् । नामिनः स्वरे । प्रियतिसृणा–प्रियतिस्रा । द्वेरत्वे सत्याप् । द्वे । द्वे । द्वाभ्याम् । द्वाभ्याम् । द्वाभ्याम् । द्वयोः । द्वयोः ॥ हसेऽपः सेर्लोपः । नदी, नद्यौ, नद्यः । हे नदि । नदीम्, नद्यौ, नदीः नद्या–ङितामट् । नद्यै । नद्याः । नदीनाम्, नद्याम् ॥ एवं ब्राह्मणीसखीकुमारीगौर्यादयः (क) ॥ लक्ष्मीः । अनीबन्तत्वान्न सिलोपः । धौ ह्रस्वः । हे लक्ष्मि । शेषं नदीवत् ॥ एवमवीतन्त्रीतरीप्रभृतयः ॥ ईबन्तत्वात्सलोपः । स्त्री ॥ १४ ॥

( मु० ) न तिसृचतस्रोर्नामि दीर्घः ॥ एतयोर्दीर्घो न स्यान्नामि ॥ आमि तु नुट् । तिसृणाम् । श्रुतत्वात् त्रिचतुरोरित्यस्यैव स्त्रियामिति विशेषणं नानुवृत्तस्य नाम्नः प्रियास्त्रयः पुरुषाः प्रियाणि त्रीणि कुलानि वा यस्याः सा प्रियत्रिः । तस्य बुद्धिवद्रूपम् । समासस्य स्त्र्यर्थाभिधायकत्वेऽपि त्रिचतुरोःस्त्र्यर्थाभिधायकत्वाभावात् । आमि तु 'त्रेरयङ्' इत्ययङ् । प्रियत्रयाणामिति विशेषः । यदा स्त्रियां मुख्यौ लिङ्गान्तरे गौणौ तदैतौ स्तः । यदा विग्रहे त्रिचतुरशब्दौ स्त्र्यर्थवाचकौ मुख्यौ । तिसृचतसृरूपावित्यर्थः । यस्य यस्याः वेत्यादिसमासार्थरूपे लिङ्गान्तरे तु तौ गौणौ स्तः । तदा त्रिचतुरोस्तिसृ चतसृ इत्येतौ भवतः । यथा प्रियाः तिस्रो यस्य पुंसः स इत्यत्र प्रिया जस् त्रि जस् इति स्थिते 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुक् बाधते' इत्यकृत्वैव तिस्रादेशं सिपो लुकि कृते समासात्स्यादिविभक्तिस्तस्यां परस्तिस्रादेशः । पुंवद्वेति प्रियाशब्दस्य पुंवद्भावः । सेरेत्यात्वम् । प्रियतिसेति । यद्यपीह जहत्स्वार्थावृत्तिपक्षे त्रिशब्दस्य निरर्थकत्वेन स्त्रीवाच्यत्वं दुर्लभं तथापि भूतपूर्वगत्या स्त्रियां वृत्तिर्बोध्या । उत्तरपदार्थप्रधानस्तत्पुरुष इत्या-

(क) प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति सेडोऽधेरिति डात्वे ऐ सख्युरित्यैत्वे च प्राप्ते विभक्तौ लिङ्गविशिष्टाग्रहणमिति न । सखी ।

दिसिद्धान्तस्यैवमेव निर्वाह्यत्वात् । अजहत्स्वार्थावृत्तिपक्षे तु स्त्रीनिष्ठसंख्यासमर्पकयोस्त्रिचतुरोरिति विवक्षितोऽर्थः । प्रियतिस्रौ प्रियतिस्रः । प्रियतिस्रम् प्रियतिस्रौ, प्रियतिस्रः । प्रियतिस्रा, प्रियतिसृभ्याम् , प्रियतिसृभिः । प्रियतिस्रे । प्रियतिस्रः, प्रियतिस्रोः, प्रियतिसृणाम् । प्रियतिस्रि, प्रियतिस्रोः, प्रियतिसृषु । हे प्रियतिसः ॥ प्रियाः तिस्रो यस्य कुलस्येत्यत्र स्यमो लुका लुप्तत्वेन प्रत्ययलक्षणाभावान्नतिस्रादेशः । प्रियत्रि । लुकि न तन्निमित्तमित्यस्यानित्यत्वात्पक्षे प्रियतिसृ । एतद्रूपद्वयं कैयटेन स्वीकृतम् । इदमोऽयं पुंसीत्यनेनानित्यत्वं ज्ञापितम् 'नामिनः स्वरे' इति नुम् । ईमावितीत्वम् । प्रियतिसृणी । नोपधाया इति दीर्घः । प्रियतिसृणि ॥ तृतीयादिषु वक्ष्यमाणेन टादावित्यनेन पुंवद्भावविकल्पात् पर्यायेण नुमृत्वे । प्रियतिस्रा—प्रियतिसृणा । प्रियतिस्रे-प्रियतिसृणे । प्रियतिस्रः प्रियतिसृणः । आमि रत्वं बाधित्वा परत्वान्नुम् प्राप्तः । तं च बाधित्वा विप्रतिषेधे परमिति नुट् । प्रियतिसृणाम् । ऋदृशामिति वा गुणः । हे प्रियतिसः हे प्रियतिसृ । द्विशब्दस्य त्यदादेरित्यकारे कृते सन्निपातपरिभाषाया अनित्यत्वादाबत इत्याप् ॥ इतोदन्ताः ॥ नद्यादेरितीप । नदी । धौ ह्रस्व इति ह्रस्वे हे नदि ॥ प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति ङेर्ङोऽन्तेरिति डान्ते,ऐ सख्युरित्यैत्वे च प्राप्ते विभक्तौ लिङ्गविशिष्टाग्रहणमिति न । सखी ॥ लक्षेर्मुट् चेति ईप्रत्ययः । लक्ष्मीः । केचिदिह कृदिकारादिति पाक्षिकमीपमिच्छन्ति । तन्मते पक्षे सिलोपः स्यादेव । 'वातप्रमी श्री लक्ष्मीति पक्षे ङ्यन्ताः सुमाधवः' इति रक्षितः । 'लक्ष्मीर्लक्ष्मी हरिप्रिया' इति द्विरूपकोशश्च ॥ अवी रजस्वला स्त्री । तन्त्रीर्वीणा । स्तरीर्धूमः । स्तरीर्वंध्या (क) । स्त्यायतेर्ड्रिति ड्रप्रत्यये 'यवयोर्वसे' इति यलोपः । गुणित इनोप् । स्त्यायेत अस्यां शुक्रशोणिते इति स्त्री ॥ १४ ॥

( त० ) स्त्रियामिति त्रिचतुरोर्विशेषणादिति ॥ श्रुतत्वात् तयोरिति भावः । नामविशेषणं नेति बोध्यम् । तद्विशेषणे तु विपरीतं स्यात् । अत्रेदं तत्त्वम् । जहत्स्वार्थैव वृत्तिरिहाभिमता लक्ष्यानुरोधात् । तेन नाम्नः स्त्रियामिति सम्यगेव । त्रिशब्दस्य पुंनपुंसकवाचित्वं तु भूतपूर्वगत्या । अजहत्स्वार्था वृत्तिरिति पक्षे तु स्त्रीनिष्ठसंख्यासमर्पकयोस्त्रिचतुरोरिति विवक्षितोऽर्थः । ननु स्त्रियां प्रियतिसेति कथम् । ऋकारान्तत्वादीपः प्रवृत्तेरिति चेत्सत्यं सन्निपातपरिभाषाविरोधात् ॥ विभक्त्यानन्तर्येण प्रवृत्ते आदेशे स न विहितः ॥ विभक्तौ किम् । तिस्रो भार्या अस्येति त्रिभार्य इत्यादौ न । लुकि न तन्निमित्तमिति प्रत्ययलक्षणनिषेधात् ॥ स्त्रियां किम् । त्रयः ॥ तिस्र इत्यत्र षत्वं तु षः सः कृतस्येति व्याख्याने सस्य कृतत्वाभावात् । अत एव संधिसंपदन्धिश्चेति द्विर्वचनादेशे तु प्रकृतेऽपि न षत्वम् । देवेषु एधिष्यते इत्यादौ तु चतुर्षु भविष्यतीत्यादिनिर्देशात् प्रत्ययावयवस्य षत्वं भवतीति ज्ञापकात् । व्यधिकरणषष्ठीपक्षे तु प्रत्ययावयवस्य भवत्येव आदेशावयवस्य तु तिसृ इति निर्देशादेव न । अन्यथा तिसृ चतसृ इत्येव ब्रूयात् । सैषाविति निर्देशेन सकारमात्रादेशस्य षत्वं भवतीति ज्ञापितम् ॥ द्वेरत्व इति ॥ स्यादिसन्निपातकृतमपि त्यदाद्यत्वमापो निमित्तम् । सन्निपातपरिभाषाया अनित्यत्वात् ॥ १४ ॥

( क ) मौकीति हेमचन्द्रः ।

**स्त्रीभ्रुवाः** ॥ स्त्रीशब्दस्य भ्रूशब्दस्य चेयुवौ भवतः स्यादौ स्वरे परे ॥ स्त्रियौ, स्त्रियः । हे स्त्रि ॥ १५ ॥

(४०) स्त्रीभ्रुवाः ॥ अप्राप्ते विधिरयम् । यत्वत्वयोरपवादः । एतयोरिवर्णोवर्णयोरियुवौ भवतः स्वरादौ ॥ स्यादौ किम् । स्त्र्यर्थम् । भ्र्वर्थम् ॥ धौ ह्रस्व इति ह्रस्वे हे स्त्रि ॥

( त० ) स्त्री भ्रुवाविति ॥ अधातुत्वात् य्वोरित्येतदप्राप्तौ विधिरयम् । यत्ववत्वयोरपवादोऽयम् ॥ स्यादौ किम् । स्त्र्यर्थम् । भ्र्वर्थम् ॥ अत्र य्वोरित्यनुवर्तते । अनेकवर्णत्वात्सर्वादेशबाधनाय ॥ १९ ॥

**वाऽमशासि** ॥ अमि शसि च परे स्त्रीशब्दस्य वा इय् भवति ॥ स्त्रियम्—स्त्रीम् । स्त्रियः—स्त्रीः । स्त्रियाम्—स्त्रीणाम् । स्त्रियमतिक्रान्तोऽतिस्त्रिः । अन्यार्थे । अतिस्त्रयौ ।

"एओनाभावौत्वनुड्भिः पूर्वस्थैः पुंसि बाध्यते ।
क्लीबे नुमा च स्त्रीशब्दस्येय् त्वयेत्यवधार्यताम्(क) ॥"

अतिस्त्रयः । हे अतिस्त्रे । अतिस्त्रियम्—अतिस्त्रिम् , अतिस्त्रियौ । अतिस्त्रियः—अतिस्त्रीन् । अतिस्त्रिणा । अतिस्त्रये । अतिस्त्रेः, अतिस्त्रियोः, अतिस्त्रीणाम् । अतिस्त्रौ, अतिस्त्रियोः, अतिस्त्रिषु ।

"ओस्यौकारे च नित्यं स्यादम्शसोस्तु विभाषया ।
इयादेशस्तु नान्यत्र स्त्रियाः पुंस्युपसर्जने(ख) ॥"

क्लीबे तु नुम् । अतिस्त्रि, अतिस्त्रिणी, अतिस्त्रीणि । अतिस्त्रिणा अतिस्त्रये—अतिस्त्रिणे । अतिस्त्रेः—अतिस्त्रिणः । अतिस्त्रेः—अतिस्त्रिणः, अतिस्त्रियोः—अतिस्त्रिणोः, अतिस्त्रीणाम् । अतिस्त्रौ, अतिस्त्रिणि ॥ स्वर्णा नपुंसके धौ गुणो वा वक्तव्यः । हे अतिस्त्रे -हे अतिस्त्रि ॥ स्त्रियां तु प्रायेण

---

( क ) एओनेत्यादि । पूर्वस्थैः एओनाभावौत्वनुड्भिः पुंसि स्त्रीशब्दस्य इय् बाध्यते । क्लीबे च नुमा स्त्रीशब्दस्य इय् बाध्यते, इति त्वयाऽवधार्यताम् । इत्यन्वयः ।

अथार्थः—एश्च ओश्च नाश्च ते एओनाः । एओनानां भावः एओनाभावः । एओनाभावश्च औत्वं च नुट् च ते एओनाभावौत्वनुटः । तैः एओनाभावौत्वनुड्भिः । किम्भूतैः ? पूर्वस्मिन् तिष्ठन्तीति पूर्वस्थाः तैः पूर्वस्थैः । 'एओ जसि' 'ङिती' त्येत्वौत्वे । 'टा ना स्त्रिया'मिति ना । 'ङेरौ ङि'दित्यौत्वम् । 'नुडाम' इति नुट् । पुंसि पुँल्लिङ्गे स्त्रीशब्दस्येय् बाध्यते इति त्वयाऽवधार्यतां ज्ञायतामिति ।

च पुनः । क्लीबे 'नामिनः स्वरे' इति नुमागमेन स्त्रीशब्दस्येय् बाध्यते । इत्यपि ज्ञायतामिति ।

( ख ) ओस्यौत्यादि । स्त्रियाः पुंसि उपसर्जने इयादेशः ओसि औकारे च नित्यं स्यात् । अम्शसोस्तु विभाषया स्यात् । अन्यत्र न । इत्यन्वयः ।

अथ व्याख्या—स्त्रियाः स्त्रीशब्दस्य । पुंस्युपसर्जने विद्यमानस्येति शेषः । स्त्रीभ्रुवोरितीयादेशः । ओसि औकारे प्रत्यये च परतो नित्यं स्यात् । तु पुनः अम्शसोः परतः । विभाषया विकल्पेनेय् । अन्यत्र अन्यस्मिन् प्रत्यये इय् न भवति, एओनाभावौत्वनुड्भिरित्यादिभिर्बाधितत्वादित्यर्थः ।

पुंवत् । अतिस्त्रिः, अतिस्त्रियौ, अतिस्त्रयः । शसि अतिस्त्रीः । अतिस्त्रिया । इदुद्भ्याम् । अतिस्त्रियै—अतिस्त्रये । अतिस्त्रियाः—अतिस्त्रेः । अतिस्त्रियाः—अतिस्त्रेः, अतिस्त्रियोः, अतिस्त्रीणाम् । अतिस्त्रियाम् । अतिस्त्रौ ॥ श्रीः, श्रियौ, श्रियः । हे श्रीः ॥ १६ ॥

( सु० ) वाऽम्शसि ॥ पूर्वेण नित्ये प्राप्ते विकल्पोऽयम् । क्वचिदेकदेशोऽप्यनुवर्तते इति स्त्रीभ्रुवोरित्यतः स्त्रीशब्दस्यानुवृत्तिः ॥ ङिताम‍डित्यट् । स्त्रियै । आमि स्त्रियास्तु नित्यमिति वक्ष्यमाणेन नुट् । स्त्रीणाम् । ङौ स्त्रियां योरित्याम् । स्त्रियाम् । गौणे तु स्त्रियमतिक्रान्तः पुमान् अतिस्त्रिः । अन्त्यार्थं इति ह्रस्वः ॥ एओनेत्यादि ॥ एओनाभावौत्वनुड्भिः पुंसि स्त्रीशब्दस्य इय् बाध्यते इति त्वयाऽवधार्यतां ज्ञायताम् । एश्च ओश्च नाश्च ते एओनाः एओनानां भावः एओनाभावः एओनाभावश्च औत्वं च नुट् च ते एओनाभावौत्वनुटस्तैः । एओजसि ङितीत्येत्वौत्वे । टानाऽस्त्रियामिति ना । ङेरौ ङिदित्यौत्वम् । नुडाम इति नुट् । कीदृशैः । पूर्वस्मिन् तिष्ठन्तीति पूर्वस्थास्तैश्च ॥ पुनः क्लीबे 'नामिनः स्वरे' इति नुगागमेन स्त्रीशब्दस्येय् बाध्यते । ओसोत्यादि ॥ स्त्रियाः स्त्रीशब्दस्य पुंस्युपसर्जने विद्यमानस्य ओसादिषु चतुर्ष्वेव परेषु स्त्रीभ्रुवोरितीयादेशो भवति । यथा ओसि औकारप्रत्यये च परतः इय् नित्यम् । तु पुनरम्शसोः परतो विकल्पेनेय् । अन्यस्मिन् प्रत्यये इय् न । एओनाभावौत्वनुड्भिः पूर्वोक्तैर्बाधितत्वादित्यर्थः ॥ क्लीबे तु नुम् । ईमावितीत्वम् । अतिस्त्रिणी । जश्शसोरिति शिः । नोपधाया इति दीर्घः । अतिस्त्रीणि । टादिस्वरे तु टादावुक्तपुंस्कमिति वक्ष्यमाणेन पुंवद्भावपक्षे हरिवद्रूपम् ॥ स्त्रियमतिक्रान्ता या स्त्री सा अतिस्त्रिः । शसि स्त्रीत्वात् सो नः पुंस इति न नत्वम् । अतिस्त्रीः । स्वरादिविभक्तौ स्त्रीभ्रुवोरितीय् ङिद्वचनेषु इदुद्भ्यामिति वाऽट् । अतिस्त्रियै । ङितीत्येत्वपक्षे अतिस्त्रये । आमि नुट् अतिस्त्रीणाम् । ङौ स्त्रियां योरित्याम् । अतिस्त्रियाम् । पक्षे ङेरौ ङिदित्यौत्वे अतिस्त्रौ । क्विपि वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणामिति क्विपि दीर्घः । अनीबन्तत्वान्न सिलोपः । श्रीः ॥ य्वोर्धातोरितीय् । श्रियौ । इयुवुस्थानवर्जितयोरित्युक्तत्वात् याविति ह्रस्वो न । हे श्रीः ॥ १६ ॥

( त० ) वाऽम्शसीति ॥ वा अम्शसीति च्छेदः । क्वचिदेकदेशोऽप्यनुवर्तत इति स्त्रीशब्दस्यैवानुवृत्तिरित्यभिप्रेत्याह—स्त्रीशब्दस्येति ॥ वार्तिकमिदं लेखकैर्भ्रमात् सूत्रीत्या लिखितमिति केचित् ( क ) । स्थानसादृश्यात् एरिय् ओरुव् ॥ एओनाभावेति ॥ एओइत्यनेन एओविधायकं सूत्रं गृह्यते ॥ तथा च 'एओ जसि' इति सूत्रं गृह्यते ॥ इयादेशास्त्विति । स्वरादौ य इयादेशो विहितः उपसर्जनत्वे पुंसि विद्यमानस्य स्त्रीशब्दस्य स्यादिषु चतुर्ष्वेव न त्वन्यत्र । एओनाभावादिभिः पूर्वोक्तैर्बाधितत्वादित्यर्थः ॥ १६ ॥

**वेयुवः** ॥ इयुवन्तात् ङिताम‍ड् वा स्त्रीं विना ॥ श्रियै—श्रिये । श्रि-

( क ) इदं वस्तुतस्तु सूत्रमेव । तस्य वृत्तेर्जागरूकत्वात् । वृत्तिकारस्य वार्तिकादौ वृत्त्यदर्शनात् सूत्रादौ तु दर्शनात् प्रकृते तु वृत्तिदर्शनादिदं सूत्रमेव न तु वार्तिकम् । अष्टाध्यायीसूत्रपाठे च विद्यमानत्वादिति न भ्रमितव्यम् ।

याः—श्रियः । इयुवन्तादामो नुड् वा । स्त्रियास्तु नित्यम् । श्रीणाम्—श्रियाम् । श्रियि—श्रियाम् ॥ एवं ह्रीधीप्रभृतयः । एवं भ्रूप्रभृतयः ॥ प्रधीशब्दस्य तु लक्ष्मीशब्दवद्रूपम् । केषांचिन्मते तु पुंवत् (क) । प्रकृष्टा धीरिति विग्रहे तु लक्ष्मीवत् । अमि शसि च प्रध्यम् । प्रध्यः । सुष्ठु धीर्यस्याः सुष्ठु ध्यायेति वेति विग्रहे सुधीः श्रीवत् । केषांचिन्मते पुंवत् । सुष्ठु धीरिति विग्रहे तु श्रीवदेव ॥ ग्रामणीः पुंवत् ॥ एवं खलप्वादिः ॥ १७ ॥

( ह० ) वेयुवः ॥ ङितामङित्यनेन नित्ये प्राप्ते विकल्पोऽयम् । स च व्यवस्थितः । तेन स्त्रियां नित्यमेवाट् । इय् च उव् चानयोः समाहारः इयुव् तस्मादियुवः । स्त्र्योरित्यनुवर्तते । स्त्रियामियुवङ्स्थानिभ्यामिवर्णोवर्णाभ्यां परेषां ङितामड् वा स्यात् ॥ स्त्रियामिति किम् । सुधिये । स्वयंभुवे ॥ इयुव इति किम् । प्रध्यै । वर्षाभ्वै । इयुवन्तादामो नुड् वा । स्त्रियास्तु नित्यम् । स्त्रियामियुवङ्स्थानिभ्यामिवर्णोवर्णाभ्यां परस्यामो नुड् वा स्यात् ॥ स्त्रीशब्दात्परस्यामो नित्यमेव नुट् ॥ 'धीः प्रज्ञा शेमुषी मतिः' इत्यमरः ह्रीर्लज्जा ॥ 'भूर्भूमिरचलाऽनन्ता' इत्यमरः ॥ भ्रमतीति भ्रमेर्डूरिति भ्रमतेर्डूप्रत्ययः । डित्त्वाट्टिलोपः। नेत्रयोरुपरि रोमपद्धतिर्भ्रूः ॥ पदान्तरं विनापि स्त्रियां वर्तमानत्वं नित्यस्त्रीत्वमिति वदतां वृत्तिकारादीनां मते प्रधीशब्दस्य लक्ष्मीशब्दवद्रूपम् । अमि शसि च प्रध्यम्, प्रध्यः इति विशेषः । धातुत्वात् स्त्र्यो वेति स्वरे यत्वम् ॥ लिङ्गान्तराऽनभिधायकत्वं नित्यस्त्रीत्वमिति वदतः कैयटस्य मते, प्रकृष्टा धीर्यस्याः सा प्रकर्षेण ध्यायतीति वा विग्रहे प्रधीशब्दस्य पुंवद्रूपम् ॥ अयं मतभेदः । प्रकृष्टा धीरिति विग्रहेण तत्पुरुषे तु मतद्वयेऽपि लक्ष्मीवत्प्रधीशब्दस्य स्याद्रूपम् । सुष्ठु धीर्यस्याः सा सुष्ठु ध्यायति वेति विग्रहे वृत्तिकारमते सुधीशब्दस्य श्रीशब्दवद्रूपम् । कैयटमते तु नित्यस्त्रीत्वाभावात्पुंवद्रूपम् । सुष्ठु धीरिति विग्रहेण तत्पुरुषे तु मतद्वयेऽपि श्रीवदेव बुद्धिवाचकधीशब्दस्य नित्यस्त्रीत्वात् ॥ ग्रामणीशब्दः पुंवत् । ग्रामनयनस्योत्सर्गतः पुंधर्मतया पदान्तरं विना स्त्रियामप्रवृत्तेः । एवं खलप्वादेरपि पुंधर्मत्वमौत्सर्गिकं बोध्यम् ॥ १७ ॥

( त० ) वेयुव इति ॥ इय् च उव् चानयोः समाहारः इयुव् तस्मात् इयुवः । अत्र स्त्र्योरित्यनुवर्तते तयोरभेदस्य बाधितत्वादियुवङ्स्थानिनौ स्त्र्योरित्यर्थो लभ्यते । विकल्पश्चायं व्यवस्थितः । तेन स्त्रियां नित्यम् । आमो नुड्वा स्त्रियां नित्यमित्येव सर्वं लब्धम् ॥ लक्ष्मीवदिति । पदान्तरं विना स्त्रियां वर्तमानत्वं नित्यस्त्रीत्वमिति वदतां वृत्तिकारादीनां मते प्रधीशब्दस्य तथात्वादिति भावः ॥ केषांचिदिति ॥ लिङ्गान्तरानभिधायित्वं नित्यस्त्रीत्वमिति वदतां कैयटादीनां मते इत्यर्थः ॥ ग्रामणीरिति ॥ ग्रामनयनस्योत्सर्गतः पुंधर्मतया पदान्तरं विना स्त्रियामप्रवृत्तेः ॥ एवं खलपवनादेरपि पुंधर्मत्वमौत्सर्गिकं बोध्यम् ॥

ऋन्नेभ्यो ङीप् । (ख)नकारान्तादृकारान्तादणन्ताच्च स्त्रियामीप् प्रत्ययो भवति ।

---

( क ) केषामिति लिङ्गान्तरानभिधायित्वं नित्यस्त्रीत्वमिति वदतां कैयटादीनां मते पुंवदित्यर्थः । वृत्तिकारादीनां मते तु लक्ष्मीशब्दवत्पदान्तरं विना स्त्रियां वर्तमानत्वं नित्यस्त्रीत्वमिति तैःस्वीकृतत्वात् ।

( ख ) ऋन्न इति । ऋकारोऽत्र रेफभूतो निर्दिष्टो न रेफो व्याख्यानात् । असन्देहार्थं नात्प्राग्निर्देश्ये

क्रोष्ट्री । क्रोष्ट्र्यौ । नदीवत् ॥ वधूजम्ब्वादयो नदीवत् ॥ पुनर्भूः । भ्वौ वा । पुनर्भ्वौ । हे पुनर्भु । पुनर्भ्वा । पुनर्भूणाम् । पुनर्भ्वाम् । 'भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान् (क) ।' हे वर्षाभु । वर्षाभ्वौ । स्वयम्भूः पुंवत् ॥१८॥

( सु० ) नृण ईप् ॥ नृ च आ च अण् च एषां समाहारो नृण् तस्मान्नृणः । अणिति प्रत्ययो न तु क्विबन्तोऽणिति गृह्यते प्रत्ययाप्रत्यययोरिति न्यायात् । अस्य व्याख्यानं स्त्रीप्रत्यये द्रष्टव्यम् ॥ क्रोष्टुशब्दस्य पुंसि पञ्चस्वपि विभक्तिषु स्त्रियां चेति तृवद्भावः । क्रोष्ट्री ॥ धावित ह्रस्वः । हे पुनर्भु । स्त्रियां योरिति डेराम् । पुनर्भ्वाम् । कैयटमते भेकजातौ नित्यस्त्रीत्वाभावात् हे वर्षाभूः । वृत्तिकारमते तु हे वर्षाभु । पुनर्नवायां तु हे वर्षाभु । उक्तं च—'भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान्' इति यादवेन ॥ भेक्यां मण्डूक्यां तथा पुनर्नवा ओषधी तस्यां वाच्यायां वर्षाभूशब्दः स्त्रीलिङ्गः । दर्दुरवाची तु पुंलिङ्गः । भ्वौ वर्षाभ्वाम् ॥ स्वयंभूशब्दे स्वो परतो ध्वोर्धातोरित्युव् । मतद्वयेऽपि नित्यस्त्रीत्वाभावात् ङितामडित्यादि न ॥ १८ ॥

( त० ) नृण ईप् इति ॥ नृ च आ च अण् च एतेषां समाहारः नृण् तस्मात् नृणः । अत्र मध्ये रेफभूत ऋकारो गृह्यते न रेफः व्याख्यानात् । मध्यपाठस्य लाघवार्थत्वाच्च । अत्राण् प्रत्ययः न तु क्विबन्तोऽणिति । प्रत्ययाप्रत्यययोरिति न्यायात् । तथा च तदन्तं नाम गृहीतम् । प्रत्ययग्रहणे यस्मात्स विहित इति परिभाषया तदन्तं लब्धम् । नाम्ना विशेषणात्तदन्तान्तमप्यायातम् ॥ १८ ॥

( नकारान्तसंख्यायाः स्वसृतिसृचतसृननान्दृदुहितृयातृमातृभ्यश्च नेवायौ ) माता, पितृवत् ॥ स्वसा, कर्तृवत् ॥ शसि मातॄः । स्वसॄः ॥ राः पुंवत् ॥ गौः पुंवत् ॥ नौर्ग्लौवत् ॥ १९ ॥

इति स्वरान्ताः स्त्रीलिङ्गाः ॥ ८ ॥

( सु० ) नकारान्तसंख्यायाः स्वसृतिसृचतसृननान्दृदुहितृयातृमातृभ्यश्च नेवायौ ॥ स्वस्रादिभ्योऽपि प्राप्तौ नकारान्तसंख्यायास्तूभौ प्राप्तावनेन निषिध्येते । साववेर्ऋः इति ऋप्रत्ययः । स्वसा । स्तुरारित्यार । स्वसारौ । शसि स्वसॄः । स्त्रीत्वात्सो नः पुंस इति न नत्वम् ॥ 'ननान्दा तु स्वासा पत्युः' इत्यमरः ॥ 'भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्' इति च ॥ यद्यपि पुंलिङ्ग एव रैशब्दः 'अथ रैविभवा अपि, इत्यमरे भिन्नलिङ्गानां न द्वन्द्व इति परिभाषितत्वात् तथापि रात्येनामिति राः । स्त्री येके ॥ नुदतेर्ग्लानुदिभ्यां डावित डौप्रत्ययः । डित्वाट्टिलोपः । नौः । 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः ॥ १९ ॥ इति सुबोधिन्यां स्वरान्ताः स्त्रीलिङ्गाः ॥ ८ ॥

---

परनिर्देशाद्वा तत्रापि केवलस्य अणः प्रयोगाभावात् सामर्थ्यात्तदन्तग्रहणमिति ।

(क) कैयटमते भेकजातौ नित्यस्त्रीत्वाभावात् हे वर्षाभूरिति । वृत्तिकारमते तु हे वर्षाभु । पुनर्नवायां तु हे वर्षाभु । भेक्यामिति–उक्तार्थं यादवस्य । भेक्यां मण्डूक्यां पुनर्नवायां तन्नामौषधीवाच्यायां वर्षाभूशब्दः स्त्रीलिंगः । दर्दुरार्थे तु पुंल्लिङ्गः । इत्यर्थः । इति चक्रधराख्यायां टिप्पण्यां स्वरान्तस्त्रीलिङ्गाः ।

( त० ) नकारान्तेत्यादि ॥ एतद्बीजं तु नृण ईबित्यत्र न संधीत्यतो न इत्यनुवर्त्य लक्ष्यानुरोधात्तस्य व्यवस्थितत्वमाश्रित्य क्वचिन्नेति व्याख्यानात् । तेन क्वचिदणन्तादपि न कामिका । यथा अणन्तान्तात् नगरकारी । अणन्तादेवात्रेविति तु न । तथा सतीबन्ता-देयणि तद्धितप्रकृतिभूतस्यादेः स्वरस्य वृद्धौ नागरकारेय इत्येव स्यात् ॥ ननु परमनगर-कार्या अपत्यमित्यर्थं एयणि कस्य वृद्धिरिति चेत्सत्यम् । समुदायादेरेव प्रत्ययग्रहणे आ-देरन्तस्य च नियमोऽस्तित्वति यत्र विधौ स्त्रीप्रत्ययो गृह्यते तत्र तदादिनियमो नास्ति स्त्रीप्र-त्ययेऽनुपसर्जने तदादिनियमो नेति वचनात् । पारमनगरकारेय इति भवति ॥ अनुपसर्जने किम् । अतिनगरकारेरपत्यमित्यर्थं तदादिनियमाभावे एयण् स्यात् स मा भूत् किं त्वणेव । आतिनगरकार इति । प्रियोपगवेत्यत्र नत्वमाश्रित्य नेप्गौणत्वात् । गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति न्यायात् ॥ १९ ॥

श्रीविद्यानगरस्थायिलोकेशकरशर्मणा कृतायामिह टीकायां स्त्रीलिङ्गोऽगात्स्वरान्तकः ॥

इति तत्त्वदीपिकायां स्वरान्ताः स्त्रीलिङ्गाः ॥ ८ ॥

---

# अथ स्वरान्त नपुँसकलिङ्गाः ॥ ९ ॥

**अतोऽम्** ॥ अकारान्तान्नपुंसकलिङ्गात्परयोः स्यमोरम् भवत्यधौ(क) ॥ कुलम् ॥ १ ॥

( सु० ) अतोऽम् ॥ अदन्तान्नपुंसकान्नाम्नः परयोः स्यमोरम् स्यात् ॥ नपुंसका-त्स्यमोर्लुगित्यस्यापवादोऽयम् ॥ अतः किम् । पयः ॥ तपरकरणं सुखमुखार्थम् । नपुंसक-स्येति ह्रस्वे कृते दीर्घत्वाभावात् । केचित्तु म् इत्येव पदच्छेदं कुर्वन्ति लाघवात् । तत्र सेम कृते कुलमिति सिद्धम् । द्वितीयकवचने तु मस्यैव मे कृते अम्शसो रित्यल्लोपे सिद्ध-मिष्टम् । यत्त्वाहुः । अतिजरसमिति सिद्ध्यर्थममविधानं तन्न द्वितीयैकवचने लुकोऽपवादे अतोऽमिति मूभावे कृते अम्शसोरित्यल्लोपं बाधित्वा जरस् ततः सन्निपातपरिभाषया लुकोऽप्रवृत्तौ रूपसिद्धिरिति ॥ हे कुलेत्यत्र धेरमि कृते अल्लोपे च समानाद्धेरिति मलोपः । यद्वाऽतोऽमिति सूत्रे स्यमहत इत्यतो मण्डूकप्लुत्याऽधावित्यनुवर्त्य षष्ठ्या विपरिणम्यते । अमादेशनिषेधाद्धेर्लोप एव विषयः ॥ १ ॥

( त० ) अतोऽमिति ॥ अत्र अतः म् इति छेदः । तथा च सेमादेशे कुलमिति सि-द्धम् । द्वितीयैकवचने मस्यैव मादेशोऽस्य अम्शसोरिति लोपे रूपसिद्धेः । न चातिजरस-मिति सिद्ध्यर्थं तदिति वाच्यम् । लुकोऽपवादममभावं बाधित्वा जरसि कृते ततः सन्निपा-तपरिभाषाविरोधादमोऽलुकि सिद्धत्वादिष्टस्य । सो तु सन्निपातपरिभाषयैव जरसादेशो नेति मूल एव स्फुटीकरिष्यति । यत्त्वाहुः । अत्राकारविधानं सन्निपातपरिभाषाया अनि-

---

(क) अमोऽम्ग्रहणं लुग् व्यावृत्त्यर्थम् । तपरकरणं सुखमुखोच्चारणार्थम् । आकारान्तस्य ह्रस्वत्वेन व्यावर्त्यत्वाभावात् । येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधकः' इति लुको बाधः । अनेकाक्षरत्वेन गुरुत्वात्सर्वस्यैवामः स्यान्नान्त्यमकारमात्रस्य ।

अत्राह वासुदेवः–नन्वत्र म् एव विधीयताम् मेरन्त्यस्याभावादादेरन्त्यायेन सर्वस्य स्यात् । अमोऽ-प्यन्तरयैव भविष्यति । मूविधिसामर्थ्याच्च लुगभावोपि भविष्यतीति चेत्सत्यम् । अमो मस्य मविधौ कुलं यातीत्यादावनुस्वारोऽपि न स्यात् । मूविधिसामर्थ्यात् । अजरसं कुलमित्यादिप्रयोगासिद्धिप्रसङ्गाच्चेति ।

त्यस्य ज्ञापनार्थम् । तेनामि जरसादेशोऽतिजरसमिति । अत्रेदं वक्तव्यम् । अमि अनित्यं सौ नेत्यत्र विनिगमनाविरहः । इष्टासिद्धेरेव विनिगमकत्वमिति चेत् अन्यथापीष्टसिद्धेरव्याहतत्वात् । यदपि मन इति सूत्रणीये म् च अचेति समासे मान्तादन्तात्स्यमोर्लुगित्यर्थः स्यात् । क्लीबे पूर्वेण सिद्धेऽक्लीबार्थमेतत्स्यात् । तथा च किम् इदम् शब्दयोर्दोषशङ्काऽव्यावृत्तये तत्तज्ज्ञापकानुसरणे लाघवाभावः। किंतु आत्मित्येव वक्तुमुचितमित्युक्तम् । अत्राप्यनिष्टशङ्काया अनिवार्यत्वात् । अच मचेति समासे क्लीबाद्यथाक्रमं स्यमोरामौ स्यातामिति । तस्मान्म इत्यत्र निष्कारणमुद्देश्यविधेयक्रमबाधस्यैव दुष्टत्वात् ॥ १ ॥

**ईमौ** ॥ नपुंसकलिङ्गात्परं औरीकारमापद्यते (क) ॥ कुले ॥ २ ॥

( सु० ) **ईमौ** ॥ नपुंसकान्नाम्नः परं औरीत्वं प्राप्नोति ॥ दीर्घोच्चारणं तु मधुनी इत्यादौ श्रवणार्थम् । विपरीतनिर्देशो नित्यादपि नुमः पूर्वमीविधानार्थः ॥ २ ॥

( त० ) **ईमाविति** ॥ अत इति नानुवर्तते । दीर्घोच्चारणं तु वारिणी इत्यादौ श्रवणार्थम् । विपरीतनिर्देशो नित्यादपि नुमः पूर्वमीविधानार्थः । सत्यपि च प्रथमं नुम्प्रवृत्त्यभावात् ॥ २ ॥

**जश्शसोः शिः** ॥ नपुंसकलिङ्गात्परयोर्जस्शसोः शिर्भवति ॥ ३ ॥

( सु० ) **जश्शसोः शिः** ॥ नपुंसकान्नाम्नः परयोर्जश्शसोः शिः स्यात् ॥ नपुंसकात्किम् । देवाः ॥ जसा सहचरितस्य शसो ग्रहणान्नेह । शतशो ददाति । शकारः सर्वादेशार्थः(ख) ॥ ३ ॥

( त० ) **जश्शसोः शिरिति** ॥ जसा सहचरितस्य शसो ग्रहणात् शतशो ददातीत्यादौ नातिप्रसङ्गः । शकारः सर्वादेशार्थो न तु श्रवणार्थः पराणीत्यादिनिर्देशात् । अत्राहुः । अत्रासेरित्येव वक्तुमुचितम् । पराणीत्यादिनिर्देशात् स्याद्यधिकाराच्च जश्शसोः शिरित्येव ग्रहणं न तु ङसिङसोः नपुंसकात् नपुंसकस्येति निर्देशात् । अर्थस्य नियामकत्वाद्वैपरीत्यशङ्काऽपि नेति । अत्रेदमवधेयम् । लाघवार्थमसेरिति सूत्रिते ज्ञापकानुसरणस्य वैपरीत्यशङ्कानिवृत्त्यर्थम् अर्थनियामकत्वानुसरणस्य चातिगौरवेण ततोऽस्यैव लघुत्वात् ॥ ३ ॥

**नुमयमः** ॥ नपुंसकस्य नुमागमो भवति शौ परे । यमप्रत्याहारान्तस्य न । मिदन्त्यात्स्वरात्परः ॥ ४ ॥

( सु० ) **नुमयमः** ॥ अयमप्रत्याहारान्तस्य नपुंसकस्य नुम् स्यात् शौ परतः । नपुंसकादिति पञ्चम्या विपरिणम्यते शिरिति सप्तम्या च । अयम इति षष्ठी । मकारादकारस्योच्चारणार्थत्वात् । मित्त्वादन्त्यात्स्वरात्परो नुम् ॥ अयमः किम् । विमलदिवि । चत्वारि । वारि । फलि । सुगणि । ब्रह्माणि । प्रशामि ॥ ४ ॥

( त० ) **नुमयम इति** ॥ अत्र नपुंसकादित्यनुवृत्तस्यार्थवशाद्विभक्तिविपरिणामः । एवं शिरित्यपि सप्तम्या विपरिणम्यते इत्यभिप्रेत्याह—**नपुंसकस्य शाविति च** ॥ अयम

---

( क ) **ईमाविति** । मधुनी इत्यादौ दीर्घश्रवणार्थं दीर्घविधिः ।

( ख ) जस्शसोरित्यत्र जसा साहचर्यात् सानुबन्धग्रहणे न निरनुबन्धस्येति परिभाषया वा शसपि द्वितीयाबहुवचनमेव तेन शतशो ददातीत्यादौ शस्प्रत्ययस्य तद्धितस्य नेत्यर्थः ।

इति षष्ठी अकारस्योच्चारणार्थत्वात् । षष्ठ्यर्थे प्रथमा वा ॥ मिदन्त्यादिति ॥ अत्र चक संध्यक्षराणीति ज्ञापकमिति भावः ॥ ४ ॥

**नोपधायाः** ॥ नान्तस्योपधाया दीर्घो भवति शौ पञ्चस्वधिषु । नामि च । ईति न । कुलानि । हे कुल । शेषं देववत् ॥ एवं मूलफलादयः ॥ ५ ॥

( त० ) **नोपधायाः** ॥ नेत्यविभक्तिको निर्देशः । नाम्नो विशेषणम् । तेन तान्तस्य नाम्न उपधाया दीर्घः स्यात् शौ परे पञ्चस्वधिषु । ईमाविति ईकारे तु न ब्रह्मणी इति । वाऽऽद्दीपोरित्यत ईकारस्य अनुक्तसमुच्चयार्थस्य निषेधार्थस्य वा वाशब्दस्य चानुवर्तनात् । नामीत्यस्यापकर्षणान्नाम्यपि उपधाया दीर्घः । विंशो नवानामिति निर्देशात् । भवन्नित्यादौ संयोगान्तलोपस्यासिद्धत्वान्न दीर्घः ॥ ९ ॥

( त० ) **नोपधाया** इति ॥ न उपधायाः इति छेदः । नेति लुप्तषष्ठीकं तदन्ततवं च बोध्यम् । विशेष्यस्य नाम्न उपस्थितत्वात् इत्यत आह—**नान्तस्येति** ॥ अत्र वाऽऽद्दीपोरित्यत ईकार इत्यनुवर्त्य नेति वेत्यत आह—**ईति नेति** ॥ तेन ब्रह्मणी इत्यादि च सिद्धम् । अत्र नामीत्यस्यापकर्षणमित्याह ॥ **नामीति**—यदि तु ज्ञापकसिद्धस्यासार्वत्रिकत्वात् पञ्चानामिति निर्देशाद्वा नञोपध्यपि दीर्घ-तदा नामीति नापकर्षणीयम् । **हे कुलेति** ॥ अकारस्य लोपे मकारस्य समानाद्वेरिति लोपः । अधेरित्यनुवृत्तेर्वा ॥ ९ ॥

**श्त्वन्यादेः** ॥ अन्यादेः क्लीबात्परयोः स्यमोः श्तुर्भवति(क) । अन्यत् । ६

( मु० ) **श्त्वन्यादेः** ॥ क्लीबादन्यादेर्नाम्नः परयोः स्यमोः श्तुः स्यात् । अतोऽमित्यस्यापवादः ॥ अन्य-अन्यतर-इतर डतर-डतमेति पञ्चात्मकोऽन्यादिः । सर्वाद्यन्तर्गणः । डतरडतमौ प्रत्ययौ । तदन्तस्तदन्ताः कतरकतमादयो ग्राह्याः ॥ क्लीबादिति किम् । अन्यः । अन्यम् ॥ शकारः सर्वादेशार्थः । उकार उच्चारणार्थः ॥ ६ ॥

( त० ) **श्त्वन्यादेरिति** ॥ श्तु अन्यादेरिति छेदः । शः सर्वादेशार्थः । उकार उच्चारणार्थः । नेरकवर्णत्वादेव सर्वादेशः सिद्धः । द्वितीयैकवचने तु मस्य तादेशे कृते एकदेशविकृतन्यायेनामूशसोरस्येत्यलोपे कृते सिद्धमिष्टमिति शकारो व्यर्थ इति चेत्सत्यम् । स्वविषये प्राप्तस्य सर्वस्य स्थाने तुर्यथा स्यात् । सिलोपबाधनार्थं शकार इति फलितम् । इत्याशयेनाह-**अन्यादेरिति** ॥ ६ ॥

**वाऽवसाने** ॥ अवसाने वर्तमानानां झसानां जबा भवन्ति चपावा ॥ अन्यत्—अन्यद् , अन्ये, अन्यानि ॥ ७ ॥

( मु० ) **वाऽवसाने** ॥ अवसानिरवसानम् । षोऽन्तकर्मणि । अस्माद्भावे युट् । समाप्तिरन्त इति यावत् । पदस्यान्ते वर्तमानानां झसानां जबाश्चपाश्च वा स्युः ॥ पदस्य किम् । मरुतौ । अन्ते किम् । गतः ॥ झसानां किम् । राजन् ॥ ७ ॥

(क) **श्त्वन्यादेरिति** । मधाविरयस्यानतुवृत्तेर्धेरपि झमोऽपवादः । समानाद्वेर्लोपोऽधातोरित्यत्र कुप्वोः ᳲकᳲपौ वेत्यतो वानुवृत्तेर्व्यवस्थामाह । अन्यदिति । अत्राह वासुदेवः—यस्त्वन्यदित्यत्रामलुगभाव इवात्रापि श्तुविधानसामर्थ्यादेव लोपाभाव इति । तदसत् । येन नाप्राप्तिन्यायेनामलुको प्राप्तयोः श्तुविधेस्तदपवादत्वात् । विधानस्य च स्यामोरेव सार्थकत्वादिति ।

( त० ) वाऽवसान इति ॥ अत्रावसातिरवसानम् । षोऽन्तकर्मणि । भावे युट् । समाप्तिरन्त इति यावत् । अत्रावसानशब्दस्यान्तावयवार्थस्यावयविनि साकाङ्क्षत्वपदस्यैवस्यवयवी संबध्यते । यदि तु 'खसे चपा झसानाम्' 'झबे जबाः' इति सूत्रद्वये पदान्त इत्यनुवर्त्य वाक्यभेदेन व्याख्यायते पदान्ते झसानां जबाश्चपाश्च भवन्तीति तर्हि सूत्रं व्यर्थमेव ॥ ७ ॥

( अन्यादेर्भेर्लोपो न ) हे अन्यत् । अन्यतरत् । इतरत् । कतरत् । कतमत् ॥ ८ ॥

( सु० ) अन्यादेर्भेर्लोपो न ॥ अन्यादेः परस्य भेर्लोपो न ॥ समानाद्भेरिति प्राप्ते निषेधः ॥ ८ ॥

एकतरस्य स्तुर्न ॥ एकतरम् । शेषं सर्ववत् ॥ सेरमादेशे संनिपातपरिभाषया न जरस् । अजरम् , अजरसी–अजरे, अजराणि ॥ ९ ॥

( सु० ) एकतरस्य स्तुर्न ॥ एकतरात्परयोः स्यमोः स्तुर्न स्यात् । डतरप्रत्ययान्तत्वात्प्राप्ते निषेधः । अविद्यमाना जरा यस्य तत् । अन्यार्थं इति ह्रस्वे कृते अतोऽमित्यम् । अजरमित्यत्राजरशब्दमाश्रित्य सिस्थानेऽम् उत्पन्नः तेनाजरशब्दस्यामुविधिः संनिपातः । अतः सन्निपातादमुविधिर्जरमादेशविधानेनाजरशब्दस्य विघातको नेति(क)। अजरमित्येकमेव रूपं प्रथमैकवचने । अजर शि इति स्थिते परत्वाज्जरसि कृते नुमयम इति नुम्

( त० ) सेरमादेशे इति ॥ यो यमाश्रित्योत्पद्यते स तं प्रति सन्निपातः । 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' ॥ ९ ॥

न्सम्महतोऽधो दीर्घः शौ च ॥ न्सन्तस्य पृशब्दस्य महच्छब्दस्य च दीर्घो भवति पञ्चस्वघिषु शौ च ॥ अजरांसि । अमि लुकोऽपवादमम्भावं बाधित्वा परत्वाज्जरस् । ततः सन्निपातपरिभाषया न लुक्(ख) । अजरसम्–अजरम् , अजरसी–अजरे, अजरांसि–अजराणि । शेषं निर्जरवत् ॥ हृदयोदकास्यमांसानाम् हृद् उदन् आसन् मांस् । हृन्दि । हृदा । हृद्भ्याम् ॥ उदानि । उद्ना । उदभ्याम् । आसानि । आस्ना । आसभ्याम् ॥ मांसि । मांसा । मान्भ्याम् ॥ १० ॥

( सु० ) न्सम्महतोऽधो दीर्घःशौ च ॥ न्स् च अप् च महच्च एषां समाहारो न्सम्महत् तस्य न्सम्महतः । 'अमे अमा वा' इत्यनेन पस्य मादेशं कृत्वा अप्शब्दोऽत्र

---

(क) यो यमाश्रित्योत्पद्यते स तं प्रति सन्निपातः । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य । अत्र अजरमित्यत्राजरशब्दमाश्रित्य सिस्थानेऽम् उत्पन्नः, तेनाजरशब्दस्यामुविधिः सन्निपातः । अतः=सन्निपातात् । अमुविधिः=सेरमादेशः जरशब्दस्य विघातको न भवतीत्यर्थः ।

( ख ) अजर अम् इत्यत्र 'नपुंसकात्स्यमोर्लुक्' इत्यस्यापवाद'मतोऽम् इत्यम् भावं बाधित्वा परत्वाज्जरस् । ततो यो यमाश्रित्योत्पद्यते स तं प्रति सन्निपातः । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति परिभाषया नामो लुक् । अजरसम् । अजरम् ।

निर्दिश्यते । अधिकारालब्धस्य नाम्नो विशेषणमिदम् । विशेषणेन च तदन्तविधिरिति तदन्तस्यापि दीर्घो भवतीत्यर्थः ॥ अधाविति छेदो न तु धाविति । पञ्चस्वित्यनुवर्तते । तद्विशेषणं चेदम् । अत्र पूर्ववत् ई इत्यनुवर्तते । चकारोऽस्त्येव । तेन स्वपी इत्यादौ ईति नेत्यर्थः ॥ अत्राम्महत्साहचर्यादधातोरेव न्स् गृह्यते । तेन छहिन् इत्यादौ न दीर्घो धातुत्वात् । न्सन्तत्वाद्दीर्घे अजरांसि । नोपधाया इति दीर्घे अजराणि । अजर अमित्यत्र नपुंसकात्स्यमोर्लुगित्यस्यास्त्वादमतोऽमित्यमूभावं बाधित्वा परत्वाज्जरस् । ततो यो यमाश्रित्योत्पद्यते स तं प्रति सन्निपातः । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति परिभाषया नामो लुक् । अजरसम्-अजरम् ॥ पाद्दन्तेत्यनेन हृद् उदन् आसन् मांस् आदेशाः । 'अल्लोपः स्वरे' इत्यकारलोपे उद्ना । नाम्नो नो लोपशिति नलोपे उदभ्याम् । संयोगान्तस्येति सलोपे मान्भ्यामिति ॥ १० ॥

( त० ) न्सम्महतोऽधौ दीर्घः शौ चेति ॥ न्स् च अप् च महच्च एतेषां समाहारः न्सम्महत् तस्य । पस्य 'अमे बमा वेति' मः । अत्राधाविति छेदः । तच्च पञ्चस्वित्यनुवृत्तस्य विशेषणम् । तेन धिवर्जितेषु पञ्चस्वित्यर्थः । केवलस्य न्सोऽसंभवात्तदन्तस्य ग्रहः । अत्र नोपधाया इत्यत उपधामात्रमपकृष्य तच्च पूर्वमात्रोपलक्षकं पारिभाषिकार्थस्येहासंभवात् । एवं स्थिते दीर्घग्रहणस्य सामर्थ्यकल्पनादिकमनर्थकमित्युपेक्षितम् ॥ शसः पञ्चस्वनन्तर्भावात् शाविति ॥ स्वपीत्यत्र तु न दीर्घः । येति ईकारं चानुवर्त्य चाकारस्य निषेधार्थत्वं परिकल्पनीयम् इति व्याख्यानात् ॥ १० ॥

## नपुंसकस्य ह्रस्वः ॥ नपुंसकस्य ह्रस्वो भवति ॥ श्रीपम् । कुलवत् ॥

( मु० ) नपुंसकस्य ह्रस्वः ॥ अत्र ह्रस्वश्रुत्या स्वरस्येत्युपस्थितम् । तच्च नपुंसकस्य विशेषणम् । नाम्न इत्यनुवृत्तमधिकारात् । तत्र स्वरान्तस्य नपुंसकस्य नाम्न इति सामानाधिकरण्येन व्याख्यानम् (क)। लिङ्गस्य नामार्थत्वाभ्युपगमात् । तस्य ह्रस्वः स्यादित्यर्थः । श्रियं पाति यत् कुलं तत् श्रीपम् । अत्र ह्रस्वे कृतेऽतोऽमित्यम् ॥ ११ ॥

( त० ) नपुंसकस्येति ॥ ह्रस्व श्रुत्या स्वर इत्युपस्थितम् । तच्च नाम्नो विशेषणम् । तेन स्वरान्तस्य नाम्नो नपुंसकस्येत्यर्थः । न तु नपुंसकस्य स्वरस्य ह्रस्व इत्यर्थः । सुवाक् कुलमित्यादावतिव्याप्तेः (ख) ॥ ११ ॥

## नपुंसकात्स्यमोर्लुक् ॥ अस्थि(ग) ॥ १२ ॥

( छ० ) नपुंसकात् स्यमोर्लुक् ॥ नपुंसकान्नाम्नः परयोः स्यमोर्लुक् स्यात् ॥ स्यदित्यादौ लुका त्यदाद्यत्वं बाध्यते । क्वचित्पूर्वेणापि परस्य बाधस्वीकारात् नित्यत्वा-

---

(क) उपस्थितमिति । स्वराणां ह्रस्वदीर्घधर्मत्वात् । तच्चेति स्वरपरामर्शः। अधिकारात् नामप्रकरणत्वादिति भावः । सामानाधिकरण्येनेति । सामानाधिकरण्यं नानैकाधिकरणवृत्तित्वम् लिङ्गस्येति स्वार्थद्रव्यलिङ्गसंख्याकारकाणि प्रातिपदिकार्थ इत्युक्तत्वात् ।

( ख ) नपुंसकस्येति स्वरस्येति विशेषणे सुवागित्यत्राऽऽकारस्य ह्रस्वत्वापत्तिप्रसङ्गः इत्यर्थः ।

( ग ) 'नपुंसकात्स्यमोर्लुक्" इति सूत्रम् । न तु वार्त्तिकम् । सारस्वते तस्य सूत्रेदृष्टत्वात् । तथाच नपुंसकलिङ्गात्परयोः स्यमोर्लुक् भवतीति वृत्तिकारः ।

त्ययादर्शनेऽपि प्रत्ययाश्रितं कार्यं भवतीति ॥ पञ्चेत्यत्र लुक्यपि नोपधाया इति दीर्घो न । नव पमिति लिङ्गेनैव लुकि सति तन्निमित्तं कार्यं न भवतीति ज्ञायते । एतदर्थमेव शब्दभेदेन व्यवहारः । अन्यथा लुक्लोपयोरन्यतरेणैव सर्वत्र व्यवहरेत् । अथ लुग्ग्रहणं विनैव रूपसिद्धौ ज्ञापकं स्यात् असति तस्मिन्ननन्तरस्येति न्यायेनायडादिरेव प्रसज्येतेति चेत्सत्यं नव पमिति निर्देशेनैव तद्वारणसंभवात् ॥ ३९ ॥

**ष्णः** ॥ षकारनकारान्तसंख्यायाः परस्यामो नुडागमो भवति ॥ पञ्चानाम् । परमपञ्चानाम् । गौणत्वे न लुग्नुटौ । प्रियपञ्चा, प्रियपञ्चानौ, प्रियपञ्चानः । प्रियपञ्चः । प्रियपञ्चा ॥ एवं सप्तन् नवन् दशन्प्रभृतयः ॥ ४० ॥

( सु० ) **ष्णः** ॥ ष् च न् चानयोः समाहारः ष्ण् तस्मात् ष्णः । संख्याया इत्यनुवर्तते । ष्णः इति तस्या विशेषणम् । विशेषणेन तदन्तविधिः ॥ संख्याया इति किम् । त्विषाम् । यज्वनाम् ॥ ष्ण इति किम् । त्रिंशताम् । पञ्चाशताम् ॥ नलोपे नोपधाया इति दीर्घे च पञ्चानाम् ॥ प्राधान्ये परमाश्च ते पञ्च च परमपञ्च । तेषां परमपञ्चानाम् ॥ गौणत्वे न लुग्नुटौ । गौणे ष्णान्तसंख्यायाः जश्शसोर्लुक् नामि तु नुट् च न । संख्यावाचित्वाभावात् । प्रियाः पञ्च यस्य स प्रियपञ्चा । आमि प्रियपञ्चाम् । नकारद्वयमध्ये चकारः ॥ ४० ॥

( त० ) **ष्ण इति** ॥ ष् च न् च अनयोः समाहारः ष्ण् तस्मात् ष्णः । अत्र संख्याया इत्यनुवर्तते ष्ण इति तद्विशेषणं ततस्तदन्तलाभः इत्याशयेनाह–**षकारनकारान्ते**त्यादि ॥ नस्य ष्टुत्वनिर्देशे विशेषणम् । णस्य संख्यावाचिनोऽभावान्नान्तमेव गृह्यते ॥ संख्याया इति किम् । त्विषाम् ॥ ष्ण इति किम् । त्रिंशताम् ॥ **गौणत्वे नेति** ॥ संख्यावाचित्वाभावादित्यर्थः ॥ ४० ॥

**अष्टनो डौ** ॥ अष्टन्शब्दात्परयोर्जश्शसोर्वा डौ भवति ॥ अष्टौ अष्ट । अष्टौ–अष्ट ॥ ४१ ॥

( सु० ) **अष्टनो डौ** ॥ अष्टन इत्येकवचनं तु त्रेरितिवत् । अल्लोपः स्वरे इत्यस्याप्रवृत्तिश्चिन्त्या(क) । जश्शसोरित्यनुवर्तते । वाऽऽस्विति वाशब्द उभयत्र संबध्यते काकाक्षिगोलकन्यायेनेति ॥ ननु षष्ठीनिर्दिष्टत्वादन्त्यस्य डौ भवति न चानेकवर्णत्वात्सर्वादेशः स्यात् । नानुबन्धकृतमनेकवर्णत्वमित्युक्तत्वात् । उच्यते । डित्त्वसामर्थ्यान्नोक्तदोषः । तथा हि । अन्त्यादेशे सति जसि अष्टनाविति शसि अष्टनाविति प्राप्नोति । तच्चान्तरेण डित्त्वं सिद्धम् । अतो डित्करणसामर्थ्यात् सर्वादेशः(ख) । लुकोऽपवादोऽयमिति सर्वादेश इति

(क) चिन्त्येति । सुबोधिनी । अत्र अष्टाभ्य औशिति सूत्रव्याख्यावसरे । अन्यथा अष्टन इत्येव ब्रूयात् । इति भाष्यकारोक्त्यापि चिन्ताया अपसरणीयत्वात् ।

(ख) **अनुबन्धकृतमनेकवर्णत्वं न स्वीक्रियते** । अत्र संध्यक्षराणि पराणीत्यादिनिर्देशेन शिर्देशेज्ञाप्यते इयं परिभाषा । तथा हि जश्शसोः शिश्चेत् सर्वस्य न स्यात् तदोक्तनिर्देशोऽनुपपन्नः स्यादिति । 'साधनाधारयोर्युट्' कारकात् क्रियायुक्ते इत्यादिनिर्देशेनानेकवर्णाशे ज्ञाप्यते इयं परिभाषा इति परिभाषाप्रकरणे द्रष्टव्यम् । इयमत्राशङ्का–ननु षष्ठीनिर्दिष्टस्यादेशस्तदन्तस्य ज्ञेयः' इति परिभाषया 'अष्टनो डौ' इति षष्ठीनिर्दिष्टत्वात् जश्शसोरन्त्यस्य स्थाने डौ प्राप्नोति न तु सर्वस्य स्थाने । इत्या-

वा । औशिति सुवचम् । औत्वं हि लुग्लुटाविव प्राधान्ये एव भवति न तु गौणत्वे । सप्य-शूभ्यां तुट् चेत्यनेन सप्तन्अष्टन्शब्दौ निष्पन्नौ ॥ ४१ ॥

( त० ) अष्टनो डाविति ॥ एकवचनं तु त्रेरिति वत् । सौत्रत्वादल्लोपोऽपि न । 'अल्लोपः स्वरे' इत्यस्याप्रवृत्तिश्चिन्त्येति कैश्चिदुक्तम्(क) । अत्र अष्टाभ्य ओशिति सूत्र-व्याख्यावसरे अन्यथा अष्टन इत्येव ब्रूयात् इति भाष्यकारोक्त्यापि चिन्ताया अपसारणी-यत्वात् । वाऽऽस्विति वाशब्दः काकाक्षिन्यायेनोभयत्रान्वेति । संख्याया इत्यनुवृत्तेर्नेह । प्रियाष्ट्नः ॥ अनुबन्धैरनेकवर्णऽत्वस्यासंभवादन्त्यादेशोऽस्तीति न शङ्कनीयम् षष्ठीनिर्दि-ष्टस्येति परिभाषाया अनित्यत्वात् ॥ ४१ ॥

**वाऽऽसु** ॥ अष्टनः सकारभकारादिषु विभक्तिषु वाऽऽत्वं भवति ॥ अष्टाभिः–अष्टभिः । अष्टाभ्यः–अष्टभ्यः । अष्टाभ्यः–अष्टभ्यः । अष्टानाम् । अष्टासु । अष्टसु ॥ प्रिया अष्टौ यस्यासौ प्रियाष्टा, प्रियाष्टानौ, प्रियाष्टानः । प्रियाष्ट्नः । प्रियाष्ट्ना, प्रियाष्टाभ्याम् । "प्रियाष्ट्नो राजवत्सर्वं हाहाव-च्चापरं हसे ।" सुगण्, सुगणौ, सुगणः । सुगणम् , सुगणौ, सुगणः । सुग-ण्ट्सु ॥ भुत्–भुद् बुधौ, बुधः । भुद्भ्याम् । भुत्सु । राक् । राग् , राधौ, राधः । राग्भ्याम् । राक्षु ॥ सुककुप् सुककुब् , सुककुभौ, सुककुभः । सुक-कुभम् । सुककुप्सु ॥ ४२ ॥

( सु० ) वाऽऽसु ॥ स्भीत्यपकृष्यते । तेन स्यादयो विशेष्यन्ते । वा आ आसु इति च्छेदः । सकारभकारादौ स्यादौ परे अष्टन आत्वं वा भवतीति फलितोऽर्थः ॥ इत आरभ्य संख्याया इति निवृत्तं व्याख्यानात् । तेन गौणत्वेऽपि स्यादावात्वम् ॥ स्यादा-विति किम् । अष्टभार्यः अष्टसेवकः ॥ स्भीति किम् । प्रियाष्टानौ ॥ प्राधान्ये परमाष्टौ ॥ गौणत्वे प्रिया अष्टौ यस्य स प्रियाष्टा । आत्वाभावे राजवत् । शसि 'अल्लोपः स्वरे' इत्यका-रलोपे कृते षुभिः ष्टुरिति णत्वं प्राप्तमसिद्धं बहिरङ्गमन्तरङ्गे इति परिभाषया न शस्निमि-त्तकत्वेन बहिरङ्गस्याल्लोपस्यासिद्धत्वात् । पूर्वं पूर्वमन्तरङ्गमिति स्वीकारात् ॥ आत्वपक्षे प्रथमैकवचने प्रियाष्टाः । हाहाशब्दवत् । प्रियाष्टन्शब्दस्यात्वाभावपक्षे सर्वं रूपं राज-वत् । आत्वपक्षे तु हसादावपरं रूपं हाहावत् ॥ इति नान्ताः ॥ सुष्ठु गणयतीति सुगण् गणयतेर्विण्प्रत्ययः । शसे ङ्णोरिति टुकि सुगण्ट्सु । शसे चपस्येति द्वितीये सुग-ण्ठ्सु । टनादिति धुटि सुगण्ट्त्सु । क्विप्प्रत्यये तु सुगाण् । ।अमस्य क्ङितीति दीर्घे कर्तव्ये अल्लोपणिलोपयोः स्थानिवद्भावो न शङ्क्यः । दीर्घविधौ तन्निषेधात्(ख) ॥ इति

---

शङ्कते—नन्वित्यादिना । अनेकवर्णादेशस्य गुर्वादेशत्वाद् 'गुर्वादेशश्च सर्वस्य' इति परिभाषया सर्व-स्य जसः शसश्चस्थाने डौ भवतीति नाशङ्काप्रसरः, तत्परिहरति—नचेत्यादिना । परिहारहेतुमाह—नानुबन्धकृतमिति । अनुबन्धकृतं नानेकवर्णत्वं स्वीक्रियते इति भाषया अनेकवर्णत्वास्वीकारान्न जश्शसोः सर्वस्य स्थाने डावादेशः । परमन्त्यस्यैवेति । अस्या उत्तरमाह—उच्यत इति द्वित्वसाम-र्थ्यादित्यादिना ।

( क ) कैश्चिदिति । तेषां मध्ये एकः सदानन्दः । ( ख ) तन्निषेधात्—स्थानिवद्भावनिषेधादिति ।

णान्ताः ॥ बुध्यतेः क्विप् । आदिजबानामिति भः । जबत्वचपत्वे । भुत्-भुद् । जबत्वे भुद्भ्याम् । चपत्वे भुत्सु ॥ इति धान्ताः ॥ राघृ, सामर्थ्ये । राघते इति राक् क्विबन्तः ॥ इति घान्ताः ॥ सुष्ठु ककुप् यस्मिन् स सुककुप् । 'दिशस्तु ककुभः काष्ठाः' इत्यमरः ॥ इति भान्ताः ॥ ४२ ॥

( त० )वाऽऽस्वित्विति ॥ वा आ आसु इति च्छेदः । इत आरभ्य संख्याया इति निवृत्तं व्याख्यानात् तेन गौणत्वेऽप्यात्वम् ॥ अत्र स्भीत्युत्तरसूत्रात् स्भीत्यपकृष्यते इत्यभिप्रेत्याह—सकारेत्यादि ॥ प्रियाष्टन इति ॥ ष्टुत्वं न । 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया अल्लोपस्यासिद्धत्वात् ॥ ४२ ॥

## (युजेः पञ्चसु नुम् न समासे इति च) ॥ ४३ ॥

( सु० ) युजेः पञ्चसु नुम् न समासेइति च ॥ 'युजिर् योगे' इत्यस्य धातोः पञ्चसु स्यादिषु नुम् स्यान्न तु समासे ॥ युजेरिति धातुपाठपठितेकारविशिष्टस्य ग्रहणं न तु निर्देशे य इक् तस्य । तेनेह नुम् न । युज्यते समाधत्ते इति युक् । 'युज समाधौ' दैवादिक आत्मनेपदी ॥ ४३ ॥

(त०) युजेः पञ्चस्विति ॥ समासे इति न इति च संबन्धः । युञ्जी कुले इह न४३

**दिशाम्** ॥ दिश्दृश्स्पृश्दधृष्ऋत्विज्क्रुञ्च्युञ्ज्सृज्अञ्च्उष्णिहादीनां कुत्वं स्यादौ रसे पदान्ते च ॥ संयोगान्तस्य लोपः । युङ् , युञ्जौ, युञ्जः । युञ्जम् , युञ्जौ, युजः । युजा, युग्भ्याम् । समासे तु ॥ ४४ ॥

( सु० ) दिशाम् ॥ बहुवचनमाद्यर्थम् । तेन दिश् १ दृश् २ स्पृश् ३ दधृष् ४ ऋत्विज् ५ क्रुञ्च् ६ युञ्ज् ७ सृज् ८ अञ्च् ९ उष्णिहो १० गृह्यन्ते । दिशदृश्स्पृशदधृषऋत्विज्सृजां षत्वे प्राप्ते क्रुञ्चयुञ्ज्अञ्चामप्राप्ते उष्णिहो ढत्वे प्राप्ते अयं कुत्वविधिः ॥ चोः कुरित्यतः कुरित्यनुवर्तते । युनक्तीति सिलोपे संयोगान्तलोपे च नस्य कुत्वेनानुनासिको ङकारः । युङ् । नश्चापदान्ते इति नुमोऽनुस्वारे परसवर्णः । तस्यासिद्धत्वाच्चोः कुरिति कुत्वं न युञ्जौ । समासे तु सुष्ठु युनक्तीति क्विप् । अत्र न नुम् ॥ ४४ ॥

( त० ) दिशामिति ॥ बहुवचनमाद्यर्थम्(क) । अत्र रसग्रहणाद्दिक्पाशेत्यादावपि॥ युञ्जाविति ॥ नकारस्य कुत्वं न तु न यमस्यासिद्धत्वात् ॥ ४४ ॥

**चोः कुः** ॥ चवर्गस्य कवर्गो भवति धातोर्झसे नाम्नश्च रसे पदान्ते च(ख)॥ सुयुक् ॥ समाध्यर्थस्य नुम् न । युक्॥ खन् , खञ्जौ । खन्भ्याम्। खन्सु ॥ छशषराजादेः षः । सम्राट्—सम्राड् , सम्राजौ, सम्राजः ॥ देवेट्—देवड् , देवेजौ, देवेजः ॥ परिमृट्—परिमृड् , परिमृजौ, परिमृजः ॥ विश्वसृट्—विश्वसृड् , विश्वसृजौ ॥ ४५ ॥

( सु० ) चोः कुः ॥ रसे किम् । त्वचौ ॥ नाम्नः किम् । वच्मि ॥ पदान्ते

(क) 'बहुवचनान्तास्तद्गणसूचकाः' इति न्यायेन दिशामिति बहुवचनेन दिशादिनवानां ग्रहणम् ।

(ख) चोःकुरिति । अत्र प्रसिद्धतरत्वात् कृत्रिमाकृत्रिमपरिभाषया आन्तरतम्याद्वा कवर्ग एव कुर्गृह्यते नान्य इत्याह—कवर्ग इति ।

किम् । वाचि ॥ धातोर्झसे यथा । वक्ता ॥ झसे किम् । वच्मि ॥ कुत्वे छ्युक् । समाध्यर्थस्य युजेर्नुम्न(क) । युक् ॥ खञ्जतीति । खजि गतिवैकल्ये । क्विबन्तः । संयोगान्तलोपे खन् । संराजते इति षत्वे जबत्वचपत्वे च सम्राट् ॥ देवान् यजतीति क्विपि यजादित्वात्संप्रसारणे षत्वे च देवेट् ॥ विश्वं सृजतीति विश्वसृट् क्विबन्तः । दिशामिति कुत्वं न सृजिति सूत्रे रज्जुसृड्भ्यामिति भाष्यप्रयोगात् । यद्वा सृजियज्योः कुत्वापवादः षत्वविधिरेव ॥ स्रक्ऋत्विक्शब्दयोस्तु दिशामित्यनेन कुत्वमेव ॥ परिमार्ष्टीति परिमृट् ॥४५॥

( त० ) चोः कुरिति ॥ अत्र तदन्तग्रहणम् । तेन चवर्गान्तस्येति व्याख्येयम् । एवं चासिद्धत्वानुसरणेन युञ्जावित्यादौ कुत्वाभाव इति समाधानमपि नाश्रयणीयम् । चकारस्यान्तेऽभावात् जकारसत्त्वेपि तस्य रसपरत्वाभावात् । समाध्यर्थस्येति॥ युजेरिति धातुपाठपठितेकारविशिष्टस्यानुकरणं न श्तिका निर्देश इत्याशयः (ख) ॥ युगिति ॥ युज्यते समाधत्तो इति युक् । युज समाधौ । दैवादिकः । आत्मनेपदी ॥ खन इति। खञ्जतीति खन् । खजि गतिवैकल्ये संयोगान्तस्येति जलोपः ॥ देवड्डिति ॥ देवं यजतीति । क्विपि संप्रसारणे रूपम् ॥ ४५ ॥

**( विश्वस्य वसुराटोर्दीर्घः )** विश्वावसुः । विश्वाराट् , विश्वराजौ । विश्वाराड्भ्याम् । विश्वाराट्सु—विश्वाराट्त्सु ॥ ४६ ॥

( सु० ) **विश्वस्य वसुराटोर्दीर्घः** ॥ विश्वशब्दस्य दीर्घः स्यात् वसुशब्दे राट्शब्दे च परे ॥ विश्वं वसु द्रव्यं यस्य स विश्वावसुः । राटिति डशब्दस्यापि स्वरूपोपलक्षणमविवक्षितं टत्वम् । विश्वस्मिन् राजते इति विश्वराट् ॥ ४६ ॥

( त० ) वसुराटोरिति ॥ टत्वमविवक्षितं षत्वविषयोपलक्षकम् ॥ **विश्वावसुरिति** ॥ विश्वं वसु यस्येति विग्रहः ॥ ४६ ॥

**स्कोराद्योश्च** ॥ संयोगाद्योः सकारककारयोर्लोपो भवति धातोर्झसे नाम्नश्च रसे पदान्ते च ॥ भृट्—भृड् , भृज्जौ, भृज्जः ॥ वृक्षवृट् वृक्षवृड् , वृक्षवृश्चौ ॥ विभ्राट्--विभ्राड् , विभ्राजौ । विभ्राड्भ्याम् । विभ्राट्सु । ऋत्विक्—ऋत्विग् , ऋत्विजौ । ऋत्विक्षु । ऊर्क्—ऊर्ग् , ऊर्जौ । ऊर्क्षु ॥ ४६ ॥

( सु० ) **स्कोराद्योश्च** ॥ आदिशब्दस्यावयववाचित्वेन ससंबन्धित्वादवयव्याकाङ्क्षायां संयोगेति संबध्यते । संयोगशब्दस्यापीह समुदायवाचित्वादवयवार्थकत्वेनावयव्याकाङ्क्षायां नाम्नो धातोश्चेति संबध्यते(ग) । संयोगान्तलोपापवादः । झसे त्वपूर्वो

---

( क ) युजेरिति धातुपाठपठितेकारविशिष्टस्यानुकरणं नश्तिका निर्देश इत्याशयः । युज्यते समाधत्ते इति युक् । युज समाधौ दैवादिकः । आत्मनेपदी । ( ख ) **न श्तिकेति** । व्याख्यानादिति भावः ।

( ग ) इहेयमाशङ्का—ननु स्कोराद्योश्चेति सूत्रात् संयोग इति धातोर्नाम्नश्चेति कथं लब्धमिति । तत्राह—**आदिशब्दस्येति** । अत्रेदमनुमानम्—आदिशब्दः ससम्बन्धी । अवयववाचित्वात् । घटवदित्यनुमानेन ससम्बन्धित्वसिद्धौ अवयववाच्यादिशब्दः अवयव्यपेक्षः, ससम्बन्धित्वात् बुद्ध्यादिवत् । इत्यनुमानेन संयोगः सम्बध्यते । अथापि समुदाये एव संयोगसंयोगिव्यवहारो न तु समुदायाभावे । तेनावयव्याकाङ्क्षायां धातोर्नाम्नश्चेति सम्बध्यते । अत्र रसे पदान्ते इति पदत्रयं संयोगस्यैव विशेषणम् । न तु नामधात्वोः । स्कोरिति द्विवचननिर्देशात्स्कुम्भधातोः स्वरूपस्य वा न ग्रहणम् ।

विधिः । झसे भ्रष्टा । पदान्ते अबाभ्रट् ॥ आद्योः किम् । भक्ष्यति । नक्ष्यति ॥ भृज्जतीति क्विप् । ग्रहामिति संप्रसारणम् । सौ परत्वात् षत्वे स्कोरिति सलोपे च सिलोपः । भृट् । सस्य श्चुत्वेन शः । शस्य झबे जबा इति जः भृज्जौ ॥ वृक्षं वृश्चतीति क्विपि ग्रहामिति संप्रसारणं छशषेति षत्वं स्कोरिति सलोपः जबत्वचपत्वे । वृक्षवृट्-वृक्षवृड् । छपि टनादिति धुट् । तस्य च अत्वम् । वृक्षवृट्त्सु । चान्तेषु वक्तुमुचितः ॥ विशेषेण भ्राजते इति विभ्राट् । षत्वविधौ राजिसाहचर्यात् भ्राजृ दीप्ताविति फणादिरेव गृह्यते(क) । यस्तु राजृ भ्राजृ दीप्ताविति तस्य कुत्वमेव । विभ्राक्-विभ्राग् । विभ्राग्भ्यामित्यादि ॥ ऋतौ यजतीति ऋतावुपपदे यजेः क्विप् । यजादित्वात्संप्रसारणम् । कुत्वम् ऋत्विक् ॥ ऊर्ज बलप्राणनयोः । अस्माच्चुरादिण्यन्तात् क्विपि णिलोपः । ऊर्ज्जयतीति । सभिन्नस्येति नियमात् न संयोगान्तलोपः । ऊर्क् (ख) ॥ इति जान्ताः ॥ ४६ ॥

( त० ) स्कोराद्योश्चेति ॥ स् च क् चेति स्का तयोः स्कोः । आदिशब्दस्यावयविनि साकाङ्क्षत्वेन संयोगशब्देन संबन्धः । संयोगशब्दोऽपि नामधातुभ्यां संबध्यते । अत्र रसे झसे पदान्ते इति पदत्रयमपि संयोगस्यैव विशेषणम् । न तु नामधात्वोः । स्कोरिति द्विर्वचननिर्देशात्स्कुञ्धातोः स्वरूपस्य वा न ग्रहणम् ॥ ऋत्विगिति ॥ ऋतौ यजते इति वाक्ये ऋतावुपपदे यजतेः क्विपि संप्रसारणे च रूपम् ॥ ऊर्क् इति बलप्राणनयोः । चुरादिण्यन्तात्क्विपि णिलोपे च रूपम् ॥ ४६ ॥

तः ॥ त्यदादेस्तस्य सत्वं भवति सौ परे ॥ स्यः, त्यौ, त्ये ॥ सः, तौ, ते ॥ परमसः । संज्ञायां गौणत्वे चात्वसत्वे न ॥ त्यत्-त्यद्, त्यदौ ॥ अतित्यत्, अतित्यद्, अतित्यदौ ॥ यः, यौ, ये ॥ एषः, एतौ, एते । अन्वादेशे एनम्, एनौ, एनान् । एनेन । एनयोः । अग्निमत्-अग्निमद्, अग्निमथौ । अग्निमद्भ्याम् । अग्निमत्सु । प्रत्यञ्चतीति क्विपि कृते ॥ ४७ ॥

( सु० ) तः ॥ त्यादेरित्यतः त्यदादेरिति सौ स इत्यतः स इति साविति चानुवृत्तम् ॥ त्यदादेः किम् । तातः ॥ प्राधान्ये परमसः ॥ संज्ञायां गौणत्वे चात्वसत्वे न ॥ अत्वसत्वयोः सर्वाद्यन्तर्गणकार्यत्वादत्वं सत्वं च संज्ञायां गौणे च न प्रवर्तेते । संज्ञायां त्यत्, त्यदौ । गौणे त्यमतिक्रान्तोऽतित्यद् ॥ इदमेतदोरित्यन्वादेशे एनदादेशः । एनमित्यादि ॥ इति दान्ताः ॥ अग्निं मन्थतीति क्विपि नलोप इति नलोपः । अग्निमत् ॥ इति थान्ताः ॥ प्रत्यञ्चतीत्यत्राञ्चेः क्विपि कृते ॥ ४७ ॥

( त० ) त इति ॥ त्यादादेष्टेरित्यतस्त्यदादेरिति सौ स इत्यतः स इति सौ इति च पदद्वयमनुवर्तत इत्याशयेनाह । त्यदादेरित्यादि ॥ त्यदादेः किम् । तातः ॥ त इति किम् । यः ॥ सौ इति किम् । तौ ॥ ननु त्वमित्यत्र सत्वास्त्वे कुतो नेति चेत्सत्यम् । तकारोच्चारणसामर्थ्यात् । अथातित्वमित्यत्र गौणत्वे सिपरत्वाभावात् तस्य चरितार्थत्व-

---

( क ) फणादिरिति 'फणराजुभ्राजृ' इति सूत्रोक्तो ज्ञेयः ।

( ख ) इयमत्राशङ्का—'ऊर्क्' इत्यत्र संयोगान्तस्य लोप इति कलोपो कथं ? नेति । अत्राह—सभिन्नस्येति । रात्परस्य सस्यैव लोपो भवति । नत्वन्यस्येत्युक्तत्वान्न कलोपः ।

न्निति चेदोम् । साविति वक्तव्ये सिनेति गुरुकरणं वस्नसोरिव विभागसंमोहार्थम् । अत एव मितावागमौ न ॥ ४७ ॥

**नो लोपः** ॥ धातोर्हसान्तस्योपधाभूतस्य नकारस्य लोपः क्ङिति परे ॥४८॥

(सु०) नो लोपः ॥ हसान्तस्येति किम्। नीयते ॥ उपधाभूतस्येति किम्। हन्यते॥४८॥

**पूजार्थाञ्चतेर्न** ॥ निरुपपदात् क्रुञ्चेः क्विपि क्रुङ् क्रुञ्चौ । क्रुङ्भ्याम् क्रुङ्षु–क्रुङ्क्षु–क्रुङ्खषु ॥ ४९ ॥

( सु० ) पूजार्थाञ्चतेर्न ॥ पूजार्थवाचिनोऽञ्चतेरुपधाभूतस्य नस्य लोपो न भवति किति ङिति च ॥ निरुपपदात् क्रुञ्चेः क्विपि न । निर्गत उपपदेभ्यः निरुपपदस्तस्मात् । उपपदरहितस्य क्रुञ्चेरुपधाभूतस्य नस्य लोपो न भवति क्विपि । क्रुञ्च कौटिल्याल्पीभावयोः।

( त० ) निरुपपदादिति ॥ निर्गत उपपदेभ्यः निरुपपदः तस्मात् । क्रुञ्चेः क्विपि परे तस्यैव नलोपो नेत्यर्थः ॥ ४९ ॥

**अञ्चेः पुंसि पञ्चसु नुम्** ॥ दिशाम् ॥ प्रत्यङ्, प्रत्यञ्चौ, प्रत्यञ्चः । प्रत्यञ्चम् , प्रत्यञ्चौ ॥ ५० ॥

( सु० ) अञ्चेः पुंसि पञ्चसु नुम् ॥ गत्यर्थस्याञ्चतेर्नुमागमः स्यात् पुंसि पञ्चसु॥ नलोपे पुनर्नुमि कृते प्रत्यन् च् सि इति स्थिते संयोगान्तलोपे सिलोपे च नुमो नकारस्य दिशामिति कुत्वेन ङकारः । प्रत्यङ् । अनुस्वारसवर्णौ । प्रत्यञ्चौ ॥ ५० ॥

( त० ) अञ्चेरिति । न इका निर्देशस्तथा सति किस्वान्नलोपे अचेरित्येव स्यात्॥ किं तूच्चारणार्थं इकारः ॥ प्रत्यङ्ङिति ॥ प्रत्यञ्चतीति क्विपि नो लोप इति नलोपे सौ नुमि कृते प्रथमं संयोगान्तलोपः । न तु श्चुत्वम् अकृतव्यूहपरिभाषया श्चुत्वाप्रवृत्तेः । बिल्यत्वात्संयोगान्तलोप एव । तथा च लोपे नस्यैव ङकारः पञ्चमत्वेन साम्यात् । प्रथमं चुत्वे खन्निस्यसिद्धयापत्तेश्च ॥ ५० ॥

**अचेर्दीर्घश्च** ॥ नलोप्यञ्चतेरकारस्य लोपः पूर्वस्य च दीर्घः शसादौ स्वरे परे तद्धितयस्वरयोरीपीकारे च (क) ॥ प्रतीचः । प्रतीचा । प्रत्यग्भ्याम्। प्रत्यक्षु । तिर्यङ्, तिर्यञ्चौ, तिर्यञ्चः ॥ ५१ ॥

( सु० ) अचेर्दीर्घश्च ॥ लुप्तनकारस्याञ्चतेरतो लोप भवति ईपि ईकारे च ॥ प्रतीची । तद्धितयस्वरयोः प्रतीच्यः । प्रतीचीनः । अचेरिति नायमिकप्रत्ययः । किंतूच्चारणार्थोऽयमिकारः नलोपिनिर्देशे ज्ञापकः । इकः किस्वान्नलोपे कृतेऽचेरित्यस्योक्तार्थेऽज्ञापनात्॥ ननु पूर्वस्येति कस्माल्लब्धम् । उच्यते । दीर्घश्रुत्योपस्थितः स्वर एवात्र स्थानी । शसादौ स्वरे इति लोपदीर्घयोर्निमित्तम् । सप्तमीनिर्देशात् पूर्वस्याव्यवहितस्य स्वरस्य दीर्घे प्राप्ते

---

( क ) अत्राचेरिति लुप्तनकाराञ्चतिनिर्देशो यत्रास्य न लपोस्तत्रैव यथा स्यादिति ज्ञापनार्थः । तेन पूजार्थाञ्चतेर्भजादिविषन्तस्य न लोपाभावेनालोपदीर्घाभावात् प्रत्यञ्चेत्यादि स्यादित्यर्थः ।

अकारस्य लोप इति । 'एतच्चाल्लोपस्वरे' इत्यतोऽनुवर्त्तते । पूर्वस्य च दीर्घ इति । ननु कथं पूर्वस्य यावता सप्तम्यनिर्देशात् परस्यापि प्राप्नोति युक्तं चैतदञ्चतिम्भवधानादपि पूर्वस्य न स्यात्। मैवम् । निमित्ते परे व्यवहितस्याञ्चतेरल्लोपस्तस्मिश्च लुप्ताकारेऽञ्चतौ परेऽव्यवहितस्य पूर्वस्य स्वरस्य दीर्घ इति व्याख्यानात्।

येन नाव्यवधानं तेन व्यवहितेऽपीति वचनप्रामाण्यात् चकारेण व्यवहितस्याप्यत्र दीर्घः(क)। अचरिति लोपस्य विषयेऽन्तरङ्गोऽपी यमिति यकारो न । अकृतव्यूहा इति परिभाषया । प्रतीचः । तिरोऽञ्चतीति सहादेरिति तिरसस्तिरिः । तिर्यङ् ॥ ५१ ॥

( त० ) अचेर्दीर्घश्चेति ॥ लुप्तनकारनिर्देशात्पूजार्थासंग्रह इत्याशयेनाह—नलोपिन इत्यादि ॥ अचेरिति पाठे तु ज्ञापनासम्भवः इकः कित्त्वेन सर्वथैव नलोपात् । उच्चारणार्थ इकार इत्याद्याश्रयणे तु भवत्येव ॥ पूर्वस्य चेति शसादाविति परसप्तम्या निमित्तत्वेन पूर्वलाभः । न च चकारेण व्यवधानान्नेति वाच्यं 'येन नाव्यवधानं तेन व्यवहितेऽपि' इति वचनप्रामाण्यात् चकारैकवर्णव्यवधानेऽपि भवत्येव । अकृतव्यूहपरिभाषया पूर्वं न यत्वम् (ख) ॥ ५१ ॥

**तिरश्चादयः** ॥ तिरश्चादयो निपात्यन्ते शसादौ स्वरे तद्धितयस्वरयोरीपीकारे च ॥ तिरश्चा । तिर्यग्भ्याम् । तिर्यक्षु ॥ उदीचः । उदग्भ्याम् । उदक्षु । पितरमञ्चतीति । पित्रङ्, पित्रञ्चौ ॥ ५२ ॥

( सु० ) **तिरश्चादयः** ॥ सिद्धरूपनिर्देशो निपातनम् । एते निपात्यन्ते ईपि ईकारे च ॥ तिरश्ची । तद्धितस्य स्वरे यकारे च तिरश्चीनः उदीच्यः ॥ तिरश्चादिगिति सूत्रणीयम् । आदिशब्दादुदीच इति । बहुवचनं तु व्यर्थम् । तृतीयस्याभावात् । पदादयः षोडशादेशाः । न तु पृथक्शब्दा इति पक्षाश्रयणे तु वचनस्य सार्थक्यं बोध्यम् (ग) । उदञ्चतीति उदङ्॥

( त० ) **तिरश्चादय इति** ॥ ननु माऽस्तु निपातनम् । अञ्चतौ सहादेःसादिरिति सूत्रेण तिर्यादेशः । स तु अल्लोपे निमित्ताभावे नैमित्तिकाभावादेव रूपसिद्धेरिति चेत्सत्यम्, अञ्चतेर्निमित्तत्वेन अल्लोपेऽप्येकदेशविकृतन्यायेन तत्सत्त्वान्निमित्ताभावत्वाभावात् । तिरश्चादिरिति तु युक्तं तिरश्च उदीच इति शब्दद्वयप्रवृत्तिदर्शनात् । तृतीयस्यादर्शनात् बहुवचनं व्यर्थमिति वृद्धाः ॥ ५२ ॥

( **ऋतो दीर्घो न** ) पितृचः । पित्रग्भ्याम् , । पित्रग्भिः । पित्रक्षु॥ सध्र्यङ् । सध्रीचः ॥ सम्यङ् । समीचः । प्राङ् । प्राचः ॥ पूजायां तु प्रत्यञ्चः। प्रत्यञ्चा । प्रत्यङ्भ्याम् । प्रत्यङ्क्षु–प्रत्यङ्खषु–प्रत्यङ्षु ॥ उदञ्चः । उदङ्भ्याम् ॥ तिर्यञ्चः । तिर्यङ्भ्याम् ॥ सम्यञ्चः । सध्र्यञ्चः । प्राञ्चः । प्राञ्चा । सहादेः सादिः ॥ अमुमञ्चतीति अमुमुयङ् । अमुमुईचः । अमुमुयग्भ्याम् । अदमुयङ् । अदद्र्यङ् ॥ पूजायां तु अमुमुयञ्चः । अमुमुयङ्भ्याम् । अदमुयञ्चः।

---

( क ) अयं भावः। शसादाविति परसप्तम्या निमित्तत्वेन पूर्वलाभः। येन नाव्यवधानं तेन व्यवहितेऽपि' इति वचनबलात् चकारेण व्यवधानेऽपि दीर्घो भवत्येव ।

( ख ) न यत्वमिति । अचेरिति लोपस्य विषये अन्तरङ्गोऽपि यमिति अकृतव्यूहपरिभाषया यकारो नेत्यर्थः ।

( ग ) 'केचिदत्र समीचः सध्रीच इति पदद्वयं पठन्ति । तयोः पठनं निपातेन साधनलाघवार्थम् । तेन बहुवचनस्य नानर्थक्यम् ।

अदद्र्यश्चः ॥ मरुतः । मरुद्भ्याम् ॥ त्रितो नुम् । न्सम्महतोऽधौ दीर्घः शौ च । महान् , महान्तौ, महान्तः । हे महन् ॥ ५२ ॥

( सु० ) ऋतो दीर्घो न ॥ ऋकारस्य दीर्घो न भवति । लुप्ताकारनकारेऽञ्चतौ परेऽपि । पितृचः । सहाञ्चतीति सहादेरिति सहस्य सध्रिः । सध्र्यङ् ॥ समञ्चतीति सहादेरिति समः समिः । सम्यङ् ॥ प्रकर्षेणाञ्चतीति प्राङ् । पूजार्थस्याञ्चतेस्तु प्रत्यञ्चति पूजयतीति क्विपि पूजार्थाञ्चतेरिति नलोपाभावः । अत एव नुम् न । प्रत्यङ् । शसि नलोपाभावादकारलोपो न । प्रत्यञ्चः । सुपि प्रत्यञ्च् सु इति स्थिते दिशामिति कुत्वात् प्राक् संयोगान्तस्येति चलोपे नस्य कुत्वेन ङकारे च कृते शसे ङ्णोरिति कुक् षत्वम् । प्रत्यङ्क्षु । शसे चपस्येति,पक्षे खकारः । प्रत्यङ्ख्षु । कुगभावे प्रत्यङ्षु ॥ एवं पूजार्थे तिर्यङ्ङादयः ॥ विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये । चाददसो ग्रहणम् । अनयोरदसश्च टेरद्र्यादेशः स्यात् । अप्रत्ययान्तेऽञ्चतौ परे ॥ अमुमञ्चतीति विग्रहे अदस् अञ्च् इति स्थिते अद्र्यादेशे अदद्रि । अच इति यत्वम् । अदसोऽसेर्दादु दो मः । असेरिति इकार उच्चारणार्थः । असकारान्तस्यादसो दात्परस्य उदूतौ भवतः दस्य मश्च । उ इति ह्रस्वदीर्घयोः समाहारः । ह्रस्वस्यञ्नयोर्ह्रस्वो दीर्घस्य च दीर्घो भवति ॥ असान्तस्येति किम् । अमुमात्मन इच्छति अदस्यति ॥ दात्परस्येति किम् । अमुया इत्यत्रान्त्यस्य यस्य मा भूत् । दकाररकारयोर्दकाररकारयोश्च मुत्वे अमुमुयङ् । शसि अचेरित्यतो लोपे दीर्घे च अमुमुईचः । मुत्वस्यासिद्धत्वान्न वत्वम् । अन्त्यबाधेऽन्त्यसदेशस्येति परिभाषां वदतां मते परस्य दकाररकारस्यैव मुत्वम् । अदस इति स्थाने षष्ठी । एवं हि षष्ठीनिर्दिष्टस्येति परिभाषोपतिष्ठते । अदसो योऽन्त्यः स दात् परो यः सोऽदसोऽन्त्यः । एवमन्त्यबाधेऽन्त्यसमीपस्य भवतीति दकाररकारयोर्मुत्वं अदमुयङ् । अः अकारः सेः सकारस्य स्थाने यस्य स असिरिति व्याख्याने त्यदाद्यत्वविषये एव मुत्वं नान्यत्रेति पक्षे उभयत्र मुत्वं न अदद्र्यङ् । वार्तिककृतोक्तं च । "अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत् । केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते ॥ १ ॥" अदसो दकाराकारयोरद्र्यादेर्दकाररयोश्च पृथङ् मुत्वं केचिदाचार्या इच्छन्ति लत्ववत् । यङन्तस्य चलीक्लृप्यते इत्यस्योभयोः कृपो रो ल इत्यनेन यथा लत्वं तथेत्यर्थः ॥ अन्त्यसदेशस्य दकाररकारस्य मुत्वं केचिदिच्छन्ति । अः अकारः सेः सकारस्य स्थाने यस्य सोऽसिस्तस्य असेः । त्यदाद्यत्वविशिष्टस्यादसो हि मुत्वं दृश्यते इति केचिद् वदन्ति । तन्मते उभयोर्मुत्वं न त्यदाद्यत्वाभावात् । एवं चामुद्र्यङ् इति केषांचिदुदाहरणं तद्भाष्येऽनुक्तत्वादुपेक्ष्यमिति भावः इति चान्ताः ॥ 'मरुतौ पवनामरौ इत्यमरः ॥ मह पूजायाम् । मह्यते पूज्यते इति महान् । कर्मणि तृप्रत्ययः । ऋदित्वान्नुम् । न्सम्महत इति दीर्घः । सिलोपे संयोगान्तलोपे च महान् ॥ ५३ ॥

( त० ) ऋत इति ॥ एतद्बीजं तु दीर्घग्रहणात् संज्ञापूर्वको विधिरनित्य इति ऋतां न दीर्घः ॥ अमुमुयङ्ङिति ॥ अमुमञ्चतीति वाक्ये क्विपि अदस्अम्अञ्च् क्विप् इति स्थिते क्विपो लोपे वेरिति वलोपे समासप्रत्यययोरिति अम्लोपे नामसंज्ञायां स्यादौ अदस् अञ्च् सि इति स्थिते । अद्र्यादेशमुत्वे नलोपे नस्य ङत्वेन नुमागमे सिलोपे रूपसिद्धिः । अदमुयङ् । अदद्र्यङ् । इति विकल्पस्त्विम् । उभयत्र मुत्वं लत्ववत् । यथा चलीक्लृप्यते

इत्यत्र लत्वम् । 'दस्यमः' इत्यत्र अन्त्यस्य दस्येति व्याख्यानेऽन्त्यबाधेऽन्त्यसदेशस्येति परिभाषामाश्रित्य परस्यैवोत्वम् । तत्रैवोक्तम्–केचित्तु दो म इति वक्तव्ये दस्येति सस्वरदकारोक्तिर्ज्ञापयति त्यदाद्यत्वविषय एव मत्वं प्रकृते तदभावान्नेति । उक्तं च । "अदसोऽद्रेपृथग् मुत्वं केचिदिच्छन्ति लत्ववत् । केचिदन्त्यसदेशस्य नेत्येकेऽसेहि दृश्यते॥" अमुमुईच इति ॥ संज्ञापूर्वस्य विधेरनित्यत्वान्न वत्वम् । यद्वा मुत्वस्यासिद्धत्वात् ॥९३॥

( द्विरुक्तानां जक्षादीनां च शतुर्नुम् न शौ वा(क) )

ददत् । एवं जक्षत् । जाग्रत् । दरिद्रत् । चकासत् । शासत् ॥ ५४ ॥

( सु० ) द्विरुक्तानां जक्षादीनां च शतुर्नुम् न शौ वा ॥ द्विरुक्तधातुभ्यो जक्षादिभ्यश्च परस्य शतुर्नुम् न स्यात् शौ परे तु वा । ददातीति दाञः शतृप्रत्यये अप् । ह्वादेरित्यपो लुक् द्वित्वं च ह्रस्व इति पूर्वस्य ह्रस्वः । दादेरित्यालोपः ॥ ददत् । एवं जक्षतीति जक्षत् ॥ जागर्तीति जाग्रत् ॥ दरिद्रातीति दरिद्रत् । दरिद्रातेरित्यालोपः ॥ चकास्तीति चकासत् ॥ शास्तीति शासत् ॥ ९४ ॥

( त० ) द्विरुक्तानामिति ॥ आगमशास्त्रस्यानित्यत्वादिति भावः ॥ ९४ ॥

**अत्वसोः सौ** ॥ अत्वन्तस्य धातुभिन्नासन्तस्य चोपधाया दीर्घो भवति सावधौ(ख) ॥ भवान् , भवन्तौ, भवन्तः । हे भवन् ॥ चन्द्रमाः, चन्द्रमसौ ॥ अधात्वसन्तस्य किम् । चीवराणि वस्तेऽसौ चीवरवः ॥ शत्रन्तस्य तु अत्वन्तत्वाभावान्न दीर्घः । भवन् , भवन्तौ ॥ पचन्॥ दीव्यन् ॥ धीमान् । हे धीमन् । धीमन्तौ ॥ मघवान् , मघवन्तौ । मघवद्भ्याम्॥ गुप्–गुब् , गुपौ, गुपः । गुब्भ्याम् । तादृक् , तादृशौ, तादृशः । तादृक्षु ॥ एवं यादृगादयः ॥५५॥

( सु० ) अत्वसोः सौ ॥ अतुश्च अस् च तौ अत्वसौ तयोः । नोपधाया इत्यत उपधाया इत्यनुवर्तते । अतुरिति मतुवतुक्तवत्वादीनामवयवो गृह्यते केवलस्य प्रत्ययस्याभावात् । अस्त्वर्थवाननर्थकोऽपि । अतु इत्युकारानुबन्धस्यानुकरणाच्छत्रन्तस्य दीर्घो न । अत्वन्तस्य धातोर्दीर्घः । गामन्तमिच्छति गोमानिवाचरति इति वा इच्छार्थक्यन्वात् , आचारक्विबन्ताद्वा कर्तरि क्विप् । ततोऽल्लोपयलोपौ । गोमान् । अधातोरित्यनुवर्त्य असन्ते योज्यम् । तेनासन्तस्य नाम्न उपधाया दीर्घोऽधौ सौ । अत एव चानर्थकस्याप्यसो ग्रहणम् । भातेर्डवतुरिति डवतुप्रत्ययान्तो भवच्छब्दः । नित्यमपि नुमं बाधित्वा वचनसामर्थ्यादादौ दीर्घः ततो नुम् । भवान् । शसादौ महद्वत् । असन्तस्तु चन्द्रमस्शब्दः । धात्वसन्तस्योपधाया दीर्घो न । यथा । वस आच्छादने क्विप् । चीव-

( क ) द्विरुक्तानामिति । विशेषतो ह्वादिगणोक्तानामित्यर्थः। जक्षादीनाम् । जक्ष–जागृ–दरिद्र चकास्–शासूनां ग्रहणम् ।

( ख ) अत्र माधवः—अत्वेति । इहापि नोपधाया इत्युनुवर्त्तते । तेनात्वन्तस्य नोपधाया इति दीर्घे सिद्धमिष्टम् । असन्ते तु नोपधा नास्तीत्युपधैव सम्बन्ध्यते। ननु चेयमस्ति विद्वानिति न्सम्महत इति तु विद्वांसावित्यादौ सावकाशम् । सत्यम् । एवं हि विद्वानित्यत्रापि तेनैव सिद्धत्वात् अत्रासग्रहणस्य वैयर्थ्यमापद्येत। अन्यत्तत्र द्रष्टव्यम् ।

रवः । भवतीति शतृप्रत्ययान्तस्यातुं इत्युकारानुबन्धत्वाभावाद्दीर्घो न । वितो नुमिति नुम् । भवन् एवं पचतीति पचन् । दीव्यतीति दीव्यन् ॥ अस्वन्तस्याधातोर्यथा धीर-स्येति धीमान् । अस्त्यर्थे मतुरिति मतुः ॥ मघशब्दाद्वतुप्रत्यये मघवच्छब्दः । उपधा-दीर्घादि प्राग्वत् । "हविर्जक्षिति निःशङ्को मखेषु मघवानसौ" इति भट्टिः ॥ मत्वन्त-त्वाभावे मेहेर्हस्य घो वुगागमः कनूप्रत्ययश्चेत्येतत्त्रितये निपातनात्कृते मघवन्शब्दः श्वा-देरित्यत्रोक्त एव ॥ इति तान्ताः ॥ गोपायतीति गुप् । क्विबन्तः । अयादयोऽनपीति वैकल्पिकत्वादिहायप्रत्ययाभावः । आयप्रत्ययपक्षे तु यत इत्यल्लोपे अलोपे च गोपा इति रूपं बोध्यम् ॥ इति पान्ताः ॥ तमिव पश्यतीति दृशेष्टक्सकाविति चकारात् क्विप् । आ सर्वादेरित्यात्वम् । दिशामिति कुत्वम् । तादृक् ॥ ९९ ॥

( त० ) अत्वसोः साविति ॥ अतुश्च अस् च अत्वसौ तयोः । अतुरत्र प्रत्यया-वयवः केवलस्यासम्भवात् । असतुवन्निरर्थकोऽपि । अतुग्रहणसामर्थ्यात्प्रथमं दीर्घः । पश्चा-न्नुम् । अन्यथाऽतुग्रहणं व्यर्थं स्यात् । अत्वन्तस्य धातोरपि । गोमन्तमिच्छन् गोमा-नित्यत्र यथा । अधातोरित्यनुवृत्तं तु अनन्तरत्वादस् इत्यनेनान्वेति इत्यभिप्रेत्याह— अधात्वसन्तस्येति ॥ धातुभिन्नासन्तस्येत्यर्थः ॥ ९९ ॥

**नशेः ॥ को वा पदान्ते स्यादौ झसे च ॥** नक्—नग् नट्—नड् , नशौ, नशः । नग्भ्याम्—नड्भ्याम् । नक्षु—नट्सु ॥ विट्—विड् , विशौ, विशः ॥ स्पृक्—स्पृग् , स्पृशौ, स्पृशः॥ घृतस्पृक् ॥ घृतस्पृग् ॥ उदकपूर्वस्य न कु-त्वम् । उदकस्पृट्—उदकस्पृड् , उदकस्पृशौ ॥ दधृक्—दधृग् , दधृषौ । दधृक्षु ॥ रत्नमुट्—रत्नमुड् , रत्नमुषौ । रत्नमुड्भ्याम् ॥ षष्शब्दो नित्यं ब-हुवचनान्तस्त्रिषु सरूपः । जश्शसोर्लुक् । षट्—षड् ॥ ५६ ॥

( सु० ) नशेः ॥ नशेः कवर्गान्तादेशो वा स्यात् स्यादौ झसे पदान्ते च । णश अदर्शने । क्विप् षत्वं जबत्वचपत्वे । नट् नड् । कत्वे तु नक् नग् ॥ 'विश प्रवेशने' क्विप् । षत्वं जबत्वचपत्वे विट्-विड् ॥ घृतं घृतेन वा स्पृशतीति घृतस्पृक् ॥ उदक-पूर्वस्य न कुत्वम् । उदकपूर्वस्य स्पृशेस्तु दिशामिति कुत्वं न उदकं स्पृशतीति षत्वम् । उदकस्पृट् ॥ इति शान्ताः ॥ ञिधृषा प्रागल्भ्ये । अस्मात् क्विप् द्वित्वम् । निपात-नात् दिशामिति कुत्वम् । धृष्णोतीति दधृक् ॥ मुष स्तेये । रत्नानि मुष्णातीति रत्न-मुट् ॥ जश्शसोरिति जश्शसोर्लुक् डत्वम् । जबत्वचपत्वे । षट्-षड् । डत्वे षड्भिः । आमि ष्ण इति नुटि कृते षस्य डत्वं नस्य च ष्टुत्वम् ॥ ९६ ॥

**ड्णः ॥ डकारस्य णो भवति नामि परे ॥** षण्णाम् षट्सु । षट्त्सु । परमषट्—परमषड् । परमषण्णाम् गौणत्वे तु प्रियषट् ॥ प्रियषषः । प्रियषषाम् (क)॥

---

( क ) ड्णः । डकारस्य चपेष्वनन्तर्भूतत्वादपदान्तत्वाच्च 'ञमे ञमा वा' इति न प्राप्नोति। इत्या-रम्भः।अत्र संख्याया इत्यतः संख्याया इत्यनुवर्तते ।सूत्रे ड्ण इति षष्ठ्याः स्थाने प्रथमा ।व्यधिकरणषष्ठ्यौ संख्यावाचिनः शब्दस्य यो डस्तस्येत्यर्थः । षण्णामिति। षष् आम् इत्यत्र 'ष्ण' इति नुटि षष् नामिति स्थिति 'षोड' इति डत्वस्यानेन णत्वे एव स्यादित्यर्थः । केचित्तु। 'ड्ण' इत्यत्र द्वौ डकारौ निर्दिश्य णत्ववत्

( सु० ) डूणः ॥ डकारस्य चपेष्वनन्तर्भूतत्वादपदान्तत्वाच्च जमे जमा वेत्यस्याप्राप्तौ सत्यामारम्भः । आगमा यद्गुणीभूता इति परिभाषया नुटः प्रत्ययावयवत्वात् । प्रत्ययजमे इत्यनेन जमत्वस्वीकारे व्यर्थमिदम् । टनादिति धुटि षट्त्सु । तदन्तेऽप्ययं विधिर्वाञ्छितः । परमाश्च ते षट् च परमषट् तेषां परमषण्णाम् । षडर्थप्राधान्ये एव लुग्नुटौ न तु गौणत्वे । प्रियाः प्रियाणि वा षट् येषां ते प्रियषषः तेषां प्रियषषाम् ॥९७

( त० ) डूण इति ॥ ड् ण इति छेदः । षशब्दस्य डत्वे प्रथमैकवचनमित्याशये नाड्-ड् इति ॥ संख्याया इत्यनुवृत्तेः । षष्ठीनिर्दिष्टत्वादन्त्यस्यैव नाद्यस्येति भावः ॥ संख्यायाः किम् । सजुषाम् ॥ ९७ ॥

**दोषाम्** ॥ दोषादीनां रो भवति रसे पदान्ते च ॥ दोः, दोषौ । शसादो वा दोषन्(क) दोष्णः । दोर्भ्याम्—दोषभ्याम् ॥ ५८ ॥

( सु० ) दोषाम् ॥ जबचपविसर्गाणामपवादः । बहुवचनमाद्यर्थम् । दाम्यतीति दोः । दमेर्डोसिति डोस् प्रत्ययः । डित्वाट्टिलोपः । 'भुजबाहू प्रवेष्टो दोः' इत्यमरः ॥ पाददन्तेति वा दोषन्नादेशः । शसादौ अल्लोपः इत्युपधालोपः । णत्वम् । दोष्णः ॥९८॥

( त० ) दोषामिति ॥ बहुवचनमाद्यर्थम् । व्युत्पत्तिपक्षे ओसि छप्रत्ययान्तानां स्रोर्विसर्ग इति विसर्गेणैव सिद्धिस्तथापि सजुष्शब्दस्य रत्वदीर्घार्थम् । तुस्पिसोस्तु रत्वे दीर्घार्थं सूत्रकरणम् ॥ ९८ ॥

**( विसर्गनुम्स्थानिकानुस्वारव्यवधानेऽपि ) क्विलात्परस्य सस्य षः**(ख) ॥ दोःषु—दोष्षु—दोषसु ॥ स्वोर्वि हसे । पिपठीः, पिपठिषौ । पिपठीर्भ्याम् । पिपठीःषु ॥ विविट्-विविड् , विविक्षौ, विविक्षः ॥ तट्—तड् , तक्षौ, तक्षः । गोरट्—गोरड् , गोरक्षौ, गोरक्षः ॥ तक्षिरक्ष्योः संयोगान्तलोप इत्येके । तक् तग् ॥ गोरक्-गोरग् ॥ ५९ ॥

( सु० ) विसर्गनुम्स्थानिकानुस्वारव्यवधानेऽपि ॥ क्विलात्परस्य सस्य षः ॥ क्विलादिति पञ्चमीनिर्देशाद्व्यवहितस्याप्राप्तौ वचनम् । एतद्व्यवधानेऽपि आभ्यां परस्य सस्य षः स्यात् । सुपि रत्वविसर्गयोः कृतयोः शसे वेसि विकल्पात् पक्षे सकार-

---

डत्वमपि विधाय षड्णामित्युदाहरन्ति। गौणत्वे तु प्रियषषः' प्रियषषामित्यत्र यथा लुग्नुटौ न भवतस्तथा जशूशसोर्लुक् 'ष्ण' इत्यत्र प्रतिपादितम् । प्राधान्ये स्त एव परमषट् परमषण्णामिति षट्स्विति । षष् सु इत्यत्र डत्वे टत्वे 'टोरन्त्यादिति षत्वनिषेधः । ननु च तत्र पदान्ताट्टोरित्युक्तम् न चात्र टवर्गः पदान्तमित्याशङ्कायां वक्तव्यं क्वचित्पदान्तेति । इदं च टोरन्त्यादित्यत्रैव माधवीटीकायां प्रतिपादितम् ।

( क ) दोषामिति । 'षोड' इत्यस्यापवादः । बहुवचनमाद्यर्थम् । तेन पिपठिषादीनां संग्रहः। इह च 'रोरामिषु' इत्यतो रोऽनुवर्तते । स च दोषामिति षष्ठीनिर्दिष्टत्वादन्तादेशः। रस इति 'वसां रसे' इत्यतोऽनुवर्त्तते । पदान्ते चेति । सूत्रान्तरमेवैतदनुवर्त्तते । 'दोष्णः' इति । 'अल्लोपः स्वरे इत्युपधालोपः। अदुपधत्वविधानं तु ङौ वेक्योरित्यल्लोपाभावपक्षे दोषणीत्युदुपधश्रवणार्थम् ।

( ख ) विसर्गनुमिति । क्विलादिति पञ्चमीनिर्देशेन व्यवहितस्य दन्त्यसकारस्य मूर्द्धन्यषकाराप्राप्तौ विधानमिदम् । एतद्व्यवधानेऽपि सस्य षः स्यादित्यर्थः ।

स्तस्य षत्वम् । सुपः सस्य तु षुत्वम् । दोष्षु । विसर्गपक्षे विसर्गनुमिति षत्वम् । दोः,षु । नाम्नो न इति नलोपे दोषसु ॥ नुम्स्थानिकानुस्वारेति व्याख्यानान्नेह । सुहिन्सु ॥ 'सु । पिपठिषतेः क्विपि यत इत्यल्लोपे कृत्तद्धितेति स्याद्युत्पत्तौ पिपठिष् सि इति स्थिते परत्वाद्रेफे कृते सिलोपे च दीर्घः । पिपठीः ॥ विश प्रवेशने अस्मात्सः । 'नानिटि से' इति गुणाभावः । द्वित्वादि । विविक्षते । क्विप् स्कोरिति कलोपः । जबत्वचपत्वे । विविट्-विविड् ॥ तक्ष् तनूकरणे । अस्मात् क्विप् । स्कोरिति कलोपे तट्-तड् ॥ गां रक्षतीति क्विप् । स्कोरिति कलोपे गोरट् । गोरड् ॥ तक्षिरक्ष्योः संयोगान्तलोप इत्येके । स्कोरिति कलोपो न । किंतु संयोगान्तलोप इत्यर्थः ॥ ५९ ॥

( त० ) पीपठारिति ॥ पठितुमिच्छति पिपठिषति । पिपठिषतीति क्विपि रत्वे दीर्घे च पिपठीरिति ॥ ५९ ॥

( **कलोपे कुत्वमसिद्धम्** ) पिपक्-पिपग् , पिपक्षौ, पिपक्षः । पिपक्षु ॥ एवं विवक् ॥ दिधक् ॥ सुपीः, सुपिसौ । सुपीःषु ॥ एवं सुतूः ॥ विद्वान्, (क) विद्वांसौ, विद्वांसः । हे विद्वन् ॥ ६० ॥

( सु० ) **कलोपे कुत्वमसिद्धम्** ॥ स्कोरिति कलोपे कर्तव्ये चोः कुरिति कुत्वस्यासिद्धत्वं वक्तव्यम् । अन्यथा स्कोरिति कलोपः स्यादित्यर्थः ॥ पक्तुमिच्छतीति पिपक् ॥ संयोगान्तलोपः । वक्तुमिच्छतीति विवक् ॥ दह भस्मीकरणे । दादेरिति घः । आदिजबानामिति धः । दग्धुमिच्छतीति दिधक् ॥ इति षान्ताः ॥ पिस गतौ ॥ सुष्ठु पेसतीति सुपीः । तुस खण्डने । सुष्टु तोसतीति सुतूः । क्विबन्तः ॥ वेत्तीति । विदेर्वा वसुरिति शतृस्थाने वसुः । अदादित्वादपो लुक् । अपित्सार्दिङिदिति ङित्वान्नोपधागुणः । उदित्वान्नुम् । स्सम्महत इति दीर्घः । संयोगान्तलोपस्यासिद्धत्वान्नलोपो न । विद्वान् ६०॥

**वसोर्व उः** ॥ वसोर्वकारस्य उत्वं भवति शसादौ स्वरे तद्धितयस्वरमतुप्वीपीकारे च (ख) ॥ विदुषः । विद्वद्भ्याम् । विद्वत्सु ॥ सेदिवान् । वस्योत्वे इडभावः सेदुषः । सेदिवद्भ्याम् ॥ ऊषिवान् । ऊषुषः । ऊषिवद्भ्याम् ॥ शुश्रुवान् । नुधातोः । शुश्रुवुषः । शुश्रुवद्भ्याम् ॥ महच्छब्दसाहचर्यादधातोर्न्स् गृह्यते । नेह । सुहिन्, सुहिन्सौ । सुहिन्भ्याम् । सुहिन्सु ॥ ध्वत् । ध्वसौ । वर्सा रसे । ध्वद्भ्याम् । एवं स्रत् ॥ ६१ ॥

( सु० ) **वसोर्व उः** ॥ अचास्थनामित्यतः शसादाविति वाऽऽदीपोरित्यत ईईपोरितिचानुवर्तते तद्धितयस्वरमतुप्विति च । व्याख्यानात् । वसुक्वस्वोर्वकार उकारः स्यात् ॥

---

( क ) विद्वानित्यत्र संयोगान्तस्यासिद्धत्वान्नलोपो न ।

( ख ) अत्र केचित् । वसोर्व उम् । इति व इति कर्त्तरि प्रथमा । उम् इति कर्मणि द्वितीया वकार· उत्वं प्राप्नोतीत्यर्थः । वकारे अकारोच्चारणं तत्सहितस्योत्वं यथा स्यादिति । शसादौ स्वरे इति । एतदक्ष्वास्थ्नां शसादावित्यतोऽनुवर्तते । तत्राऽपि च महाशसादिर्गृह्यते । तेन ओदौतोरित्यत्र यः प्रत्ययः स्वरवदिति विभज्य यकारस्यापि स्वरवत्त्वाद्वैदुष्यमित्यत्र तद्धितेऽपि भवति । तथा ईपि विदुषीति भवति इकारोऽत्र वेङ्योरित्यनुवर्तते इति प्रियविदुषी इत्यत्र भवति ।

तद्धिते वैदुषः । अण् ॥ वैदुष्यम् । यण् । मतौ विदुष्मान् ॥ ईईयोर्विदुषी ॥ सत्वरस्य वस्योत्वम् । ववराणामिति पृथक् निर्देशात् । वसामिति दत्वम् । विद्वद्भ्याम् ॥ सञ्च- देति सदः क्वसुः । द्विवचेति द्वित्वम् । पूर्वस्येति हसादिः शेषः । लोपः पचामित्येत्व- पूर्वलोपौ । द्वित्वे सत्येकल्वारादितीट् । उदित्वान्नुम् । न्सम्महत इति दीर्घः । सेदि- वान् ॥ वस्योत्वे इडभावः । निमित्ताभावे नैमित्तिकस्याप्यभावः इत्युक्तत्वात् वकाराभावे इडभावः ॥ एवमुवासेति । यजामिति सम्प्रसारणं णबादौ पूर्वस्येति पूर्वस्य सम्प्रसारणं दीर्घत्वं वसादेरिति षः । ऊषिवान् ॥ शुश्रावेति शुश्रुवान् । नुधातोरित्युव् । शुश्रुवुषः ॥ सुष्ठु हिनस्तीति । न्सम्महत इति सूत्रे महत्साहचर्याद्धातोर्न्सन्तस्य न दीर्घः आधातोरि- त्यनुवृत्तेर्वा । ततश्च संयोगान्तलोपस्यासिद्धत्वान्नोपधादीर्घः । सुहिन् । टनादिति वा धुट् । सुहिन्त्सु ॥ ध्वंसते इति ध्वत् । स्रंसु ध्वंसु अवध्वंसने । ध्वंसु गतौ च । आभ्यां- क्विप् नो लोप इति नलोपः । वसामिति दत्वम् । ध्वद्भ्याम् ॥ ६१ ॥

( त० ) वसोर्व उरिति ॥ अत्र वसुक्वस्वोः सामान्यग्रहणम् । एकानुबन्धग्रहणे द्व्यनुबन्धकस्य ग्रहणं नेति परिभाषा तु नेहाश्रीयते । उकारसहितस्य विधानात् । तथा हि विदेर्वसुरिति सूत्रेण शतुर्वसुरादेशो विधीयते । तत्र स्थानिनः शतुः ऋत्वादेव नित्कार्ये सिद्धे पुनरादेशे उदित्करणं व्यर्थमिति ज्ञापयति । वसुग्रहणेन क्वसोऽपि ग्रहणं यथा स्या- दिति । अल्लोप इति सूत्राच्छसादाविति लभ्यते तत्रादिशब्दः प्रकारे । तेन यदिग्रहोऽ- पीत्याह ॥ तद्धितेत्यादि ॥ ६१ ॥

पुंसोऽसुङ् ॥ पुंसोऽसुङादेशः पुंसि पञ्चसु शौ च ॥ पुमान् , पुमां- सौ पुमांसः । हे पुमन् । पुंसः । पुंभ्याम् । पुंसु(क) ॥ वेधाः, वेधसौ । हे वेधः । वेधोभ्याम् ॥ ६२ ॥

( सु० ) पुंसोऽसुङ् ॥ सा नः पुंस इत्यतो मण्डूकप्लुत्या पुंस इत्यनुवर्तते । न्सम्महत इत्यतः सिंहावलोकितन्यायेन शावित्यपकृष्यते। पुँल्लिङ्गस्य पुम्सशब्दस्य असुङ् स्यात् । पञ्चसु । ङित्वादन्तादेशः पातेर्डुम्सुरित्यौणादिकडुम्सुप्रत्ययस्योदित्वात् तेनैव नुमि सिद्धे असुङ उकार उच्चारणार्थः । शौ प्रियपुमांसि । अधावित्युक्तत्वात् न्सम्महत इति न दीर्घः । हे पुमन् ॥ सुपि संयोगान्तलोपे मोऽनुस्वारः । नुम्स्थानिकानुस्वारव्य- वधानेऽपीत्युक्तत्वान्न षत्वम् । पुंसु ॥ विधाञो वेध चेत्यसुप्रत्ययः । अत्वसोरिति दीर्घः । वेधाः । विश्वसृट् ॥ ६२ ॥

( त० ) पुंसोऽसुङिति अत्र न्सम्महत इति सूत्रात्सिंहावलोकितेन शौ चेत्यप-

---

( क ) अयमत्र विशेषोऽस्ति । तदुक्तं सारस्वते । असम्भवे पुंसः कक् सौ । वेदान्तैकवेद्यस्याऽऽत्मनो बहुत्वासम्भवेऽर्थे वाच्ये सति पुंस्शब्दस्य सुपि परे कागमो भवति । अयमर्थः—वदान्तैकवेद्यस्यात्मनः "एकमेवाद्वितीयं, 'नेहनानास्ति किञ्चन" इत्यादिभिरेकत्वेन प्रतिपादितस्य पुंसः—बहुषु बहुवचनमिति बह्वर्थवाचित्वे विहितबहुवचनासम्भवः इत्यर्थः । पुंक्षु। ननु पुंक्ष्वित्यत्र मकार एव संयोगादिर्न सकारस्त- र्हि कथं लोपः । 'पुंक्षु' अत्र 'स्कोराद्योश्च' इत्यनेन संयोगाद्यस्य लोपे प्राप्ते मकारस्यैव लोपो भवेन्न तु स- कारस्य। आदित्वाभावात्। संयोगाद्यस्तु पुंस इत्यत्र शिरसि मकार एव तस्मादादित्वं द्विविधम् । मुख्यमा- पेक्षिकं च । अत्र सत्यादित्वमापेक्षिकम्। पुंस्क इत्यत्र ककारापेक्षया मकार आदिरिति सकारस्यैव लोपः॥

लुप्यते। सो नः पुंस इत्यतो मण्डूकप्लुत्या पुंस इत्यनुवर्तते ॥ उकारस्तूच्चारणार्थः। 'पातेर्डुम्सुः' इति प्रत्यये उदित्त्वेन नुम्सिद्धेः। पुंसः पुंसीति सिद्धेऽसुङ्करणमन्यतोऽपि विधानार्थम्। तेन जराशब्दे सिद्धम्। पुंस्विति ॥ संयोगान्तलोपे मोऽनुस्वारः। विसर्गं नुमिति न षत्वं नुम्स्थानिकानुस्वारस्यैव ग्रहणात् ॥ ६२ ॥

**उशनसाम्** ॥ उशनस्पुरुदंशस्अनेहसां सेरधेर्डा ॥ उशना:, उशनसौ, उशनसः ॥ ६३ ॥

**उशनसो धौ नान्तता अदन्तता वा वाच्या** ॥ हे उशनन्—हे उशन—हे उशनः। उशनोभ्याम्। उशनस्सु ॥ ६४ ॥

( सु० ) **उशनसाम्** ॥ बहुवचनमाद्यर्थम् ॥ सेर्डाऽधेरित्यनुवर्तते। 'उशना भार्गवः कविः' इत्यमरः ॥ धौ नान्तत्वेऽदन्तत्वे सान्तत्वे च रूपत्रयं भवति। उक्तं च। 'सम्बोधने' इत्यादि(क)। सान्तम्। सस्य नकारादेशे नान्तम्। सस्य लोपेऽदन्तम्। इगन्ते इदन्ते उदन्ते ऋदन्ते च क्लीबे धौ गुणमिति ॥ पुरु बहु दंशतीति पुरुदंशा इन्द्रः ॥ नञि इन एह चेत्यसुप्रत्यये अनेहाः कालः ॥ ६३ ॥

( त० ) **उसनसामिति** ॥ बहुवचनमाद्यर्थम् ॥ अत्राहुः। उशनेत्यत्र संज्ञापूर्वकत्वान्नोपधाया इति दीर्घो नेति। अत्रेदमवधेयम्। इयं शङ्का सिलोपेऽकृते कृते वा। नाद्यः। तत्र नान्तत्वाभावात्सान्तस्यैव दर्शनात्। द्वितीयेऽपि नान्तस्य नाम्न इति व्याख्यानम्। तत्र नित्यमिति सम्बन्धात् नित्यं नान्तस्य इति लाभात्। प्रकृते तदभावादेव नेति विचारः ॥ ६३ ॥

**सौ सः** ॥ अदसो दस्य सः सौ (ख) ॥ ६५ ॥

( सु० ) **सौ सः** ॥ मत्वापवादः ॥ ६६ ॥

( त० ) **सौ स इति** ॥ अत्र त्यदादेष्टेरिति सूत्रात्त्यदादेरित्यस्यानुवृत्तेर्विवरणेत्यदा-

---

( क ) "सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तं माध्यन्दिनिर्वष्टि" इत्यादिकारिकाप्रमाणेन त्रिरूपत्वं साध्यम्।

(ख) **साविति**। मत्वापवादः। साविति सेर्ग्रहणं, न सुपः सोः सैषादिनि निर्देशात् उभयोरपि ग्रहणे सीत्येवावक्ष्यत इह त्यदादेरित्यनुवर्तते। दस्येति च। ततश्च त्यदादीनां दकारस्य सौ परे सत्वमित्यर्थः। ननु चैवं द्विशब्दस्यापि प्राप्नोति। असिपरत्वान्न भविष्यति। इह तर्हि प्राप्नोति। द्वावात्मन इच्छति द्वीयति। ततोऽप्रत्ययः। यत इति या लोपः। द्वीरिति। अत्र स्वोरिति प्राप्नोति। न। व्यवधानात्। इहापि तर्हि व्यवधानान्न स्यात्। असाविति। अस्त्येव अग्रेणनात्रापि व्यवधानं वचनं तु माया इत्यादावावन्ते चरितार्थं त्यदाद्यत्वं तु सावकाशत्वान्नान्ते सत्वबाधकमिति चेत्, सत्वमपि साव्यवहितानां त्यदादीनां दस्य सत्वमिति पक्षेऽनन्त्ये सावकाशं द्वयोश्च सावकाशयोः परत्वादन्त्यस्य सत्वमेव स्यादिति सायेत्यत्रानदन्तत्वादाप् न स्यात्। एवं तर्हि दस्येत्यकारस्तन्त्रमिति द्विशब्दस्यान्त्यस्य च दमात्रस्य केवलव्यञ्जनस्य न भवति। अतएव चेदंसत्वमदस एव भवति। तत्रैव हि साकारो दकारो नान्यत्र त्यदादावित्यभिप्रेत्याह सौ परे। अदसो दकारस्येति सौ परेऽव्यवहितस्यादसोदकारस्येत्यर्थः। नन्वेवमपि स्त्रियां दोषः। तत्रहि त्यदाद्यत्वे कृते परत्वादपि चानदन्तत्वाद्दस्य न सत्वं स्यात् मैवं प्रकृतिप्रत्ययाश्रितत्वेनान्तरङ्गसत्वमित्यादौ स्यात्। आप्तु बहिरङ्गः। असो ब्राह्मणीत्यादौ बहिर्भूतशब्दान्तरसन्निधानेनैव प्रतीयमानस्त्रीत्वाश्रितत्वात्।

देर्दस्येत्येवोचितं न त्वदस इति । यदि तु त्यदादेरदस इति व्याख्यायते तदा न दोषः ॥ त्यदादेः किम् । वन्दः । नन्दः ॥ दस्य किम् । यः ॥ सौ किम् । अमूनि॥ स इत्यकार-सहितत्वान्नान्यस्य ॥ ६५ ॥

**सेरौ** ॥ अदसः सेरौर्भवति ॥ असौ । दस्य मः (क) ॥ ६६ ॥

( सु० ) **सेरौः** । अदसः परस्य सेरौः स्यात् ॥ असौ । अत्र वाशब्दमनुवर्त्यव्यवस्थितविकल्प आश्रयणीयस्तेन अकसहितस्यादसः सर्वोत्वमौत्वाभावे सात्परस्य उत्वं च वक्तव्यम् । असकौ असुक इति । स्त्रियाम् असकौ । औत्वाभावे असुका ॥ अमुक इति अमुको इति च प्रयोगोऽसाधुरेव । अथ कथममुकगोत्रस्याऽमुकशर्मण इति अपभ्रंश एवायमिति प्राञ्चः । अमुकशब्दोऽव्युत्पन्नं नाम वृत्तिविषये एव प्रयुज्यते इत्यन्ये ॥ ६६ ॥

( त० ) **सेरौरिति** ॥ ननु स्त्रियामकान्तस्यासकाविति कथम् । काप्यत इतीत्वेन भवितव्यमिति चेत्सत्यम् । ङेरौ ङिदित्यनुवृत्तेर्डित्त्वाट्टिलोपे रूपसिद्धेः । अत्र वेत्यनुवृत्तेस्तस्य व्यवस्थितत्वाश्रयणात् साकाददसः सेरौत्वं वा । औत्वाभावे सादुत्वं च । असुकः । तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणात् साकस्यापि त्यादिकार्यम् । कथममुकगोत्रस्य अमुक गोत्र इति चेत् ॥ अपभ्रंश एवायमिति दीक्षिताः ॥ रामाश्रमास्तु । अमुकशब्दोऽव्युत्पन्नं नाम वृत्तिविषये प्रयुज्यते । केवलस्य तु अदकच्छब्दस्यैव प्रयोगः । अमुक इत्येकवचने तु यदि शिष्टप्रयोगस्तदा साधुः । नो चेत् असाधुरेव । अमुकशब्दस्य तु वृत्तिविषये प्रयोगाभ्युपगमो युक्त एवेति । यद्यपि सामान्येऽकः स्यादित्यकच्चेति व्युत्पादितस्तथाऽपि तस्य प्रयोगः समास एव न स्वतन्त्रस्येत्याहुः । तत्रेदमवधेयम् । इत्थं हि महानिबन्धानामृषिवाक्यानां च गतौ सत्यां नाप्रामाण्यमापादनीयमिति स्वोक्तस्यैव शिष्टप्रयोगनिष्पत्तिश्चेत्पुनर्यदि विशिष्टप्रयोग इत्यादिसंशयोक्तिर्विरुद्धेति ॥ ६६ ॥

**मादू** ॥ अदसो मात्परस्य उश्च ऊश्च भवति (ख) अमू ॥ ६७ ॥

( सु० ) **मादू** ॥ उश्च ऊश्चानयोः समाहार ऊ । संज्ञापूर्वकत्वान्न ह्रस्वः ॥ ६७ ॥

---

(क) **सेरौ** । अत्रादस इति सूत्रमनुवर्त्तत इत्याह अदसः सेरिति । अदसः सम्बन्धिनः सेरित्यर्थः । **असाविति** । अदस् सीत्यत्र त्यदाद्यत्वे दस्य सत्वे अनेन सेरौत्वे ओ औ औ ।

ननु चात्र सम्बोधने धेरौत्वादेशस्य तद्भावात् समानाद्धेरिति लोपः प्राप्नोति यदि प्रयोगोऽस्ति मैवम् । तत्र हि तस्मात्सीति सिः प्रकृत इति सेरेव धेर्लोपादौकारे न प्रसङ्गः एवमपि स्त्रियामपि धिरिः प्राप्नोति तत्रापि इसेप इत्यतः सेरनुवृत्तेः सेः स्वरूपसम्बन्धवान् यो धिरित्यर्थान्न दोषः तथापि इतीकारादेशः प्राप्तः लाक्षणिकत्वादौकारस्य न भवति । असकावित्यत्र तु सामान्येऽदस इति कप्रत्ययस्यादसोऽवयवभूतत्वात्सेरन्तरङ्गत्वादौत्वे तत आपि कप्रत्ययस्यादि वश्यदाद्यत्वे सत्वे चास का औ इति स्थिते काप्यत इतीत्वं प्राप्तं यथा न भवति तथा तत्र वक्ष्यामः ।

(ख) मा । इहाप्यदस इत्यनुवर्तते । इत्याह—अदस इति । ऊ इति ह्रस्वदीर्घयोरुवर्णयोर्द्वन्द्वैकत्वेन निर्देशः । ह्रस्वस्तु संज्ञापूर्वकस्य विधेरनित्यत्वान्न भवति । अविभक्तिको वा निर्देशः । छान्दसो वा विभक्तेर्लुक् । ननु दीर्घ एवायं कुतो न स च भवश्चान्तरतम्यात् स्थानिनमपि दीर्घमाक्षेप्स्यति । इति ह्रस्वस्याप्रसङ्गः । मैवं । व्याख्यानाद्विशेषप्रतिपत्तिः । तथा हि मादिति पञ्चम्या ततः परः स्थानी आक्षिप्यते । स च ह्रस्वो दीर्घश्च भवति । द्वयोश्च स्थानिनोरादेशावपि द्वावेव युक्तौ भवितुमित्यत आह—**ह्रस्वस्य ह्रस्व इत्यादि** । इति चक्रधरास्यटिप्पण्यां हसान्तपुंल्लिङ्गाः ॥ १० ॥

( त० ) मादु इति ॥ मात उ ऊ इति च्छेदः। समाहारे ह्रस्वत्वापत्तेः। यद्वाऽस्तु समाहारः। ह्रस्वस्तु न संज्ञापूर्वकत्वेनानित्यत्वात्। अत्राहुः। मादिति पञ्चमीनिर्देशात्परः स्थानी लभ्यते। स च हसः स्वरश्च। मात्परस्य हसस्यासम्भवात्स्वर एव गृह्यत इति। अत्रेदमवधेयम्। अमुमुयङ् इत्यत्र मात्परस्य रेफरूपहसस्योत्वदर्शनात् हसस्यासम्भवात्स्वर एव गृह्यते इत्युक्तिर्निमूला। तथा चोक्तं दीक्षितैः। ह्रस्वव्यञ्जनयोर्ह्रस्वः दीर्घस्य तु दीर्घ इति। व्यञ्जनस्यासम्भवे कथमिदं सङ्गच्छते इति ॥ ६७ ॥

एरी बहुत्वे ॥ अदस एकारस्येर्भवति बहुत्वे सति ॥ जसि। अमी। अमुम्, अमू, अमून्। अमुना, अमूभ्याम्, अमीभिः। अमुष्मै। अमुष्मात्। अमुष्य, अमुयोः, अमीषाम्। अमुष्मिन्, अमुयोः, अमीषु ॥ ६८ ॥

इति हसान्ताः पुँल्लिङ्गाः ॥ १० ॥

( सु० ) एरी बहुत्वे ॥ अदसः किम्। ते ॥ एः किम्। अमून् ॥ बहुत्वे किम्। अमुयोः ॥ ६८ ॥ इति सुबोधिन्यां हसान्ताः पुँल्लिङ्गाः ॥ १० ॥

( त० ) एरी बहुत्वे इति बहुत्वे किम्। अमुयोः ॥ ६८ ॥

श्रीरामकरपौत्रेण लोकेशकरशर्मणा। कृतायामिह टीकायां पुँल्लिङ्गोऽगाद्धसान्तकः ॥

इति तत्त्वदीपिकायां हसान्ताः पुँल्लिङ्गाः ॥ १० ॥

# अथ हसान्ताः स्त्रीलिङ्गाः ॥ ११ ॥

नहो धः ॥ नहो हस्य धो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च (क) ॥ उपानत्–उपानद्। उपानद्भ्याम्। उपानत्सु ॥ उष्णिक्–उष्णिग्, उष्णिहौ, उष्णिहः। उष्णिग्भ्याम्। उष्णिक्षु ॥ द्यौः, दिवौ। द्युभ्याम्। द्युषु ॥ गीः, गिरौ। गीर्भ्याम्। गीर्षु ॥ एवं पुर्धुरादयः। चतस्रः। प्रियचत्वाः, प्रियचत्वारौ, प्रियचत्वारः। हे प्रियचत्वः ॥ १ ॥

( सु० ) नहो धः ॥ ढस्यापवादः। हो ढ इत्यतो हस्येत्यनुवर्तते। उपपूर्वान्नहेः क्विप्। नहिवृतीति पूर्वपदस्य दीर्घः। उपनह्यते इति उपानत् ॥ उत्पूर्वात् ष्णिह प्रीतावित्यस्मात् क्विप् ॥ निपातनाद्धलोपषत्वे। दिशामिति हस्य घः। जबत्वचपत्वे। उष्णिक्–उष्णिग् ॥ 'दिव औ' इत्यौत्वे द्यौः। 'ऊ रसे' इत्युत्वे द्युभ्याम् ॥ 'गॄ–निगरणे।' अस्मात् 'गॄ शब्दे' इत्यस्माद्वा क्विप्। ऋत इरितीर्। 'य्वो वि हसे' इति दीर्घः। गीः ॥

---

( क ) ननु चास्मिन् सूत्रे वसां रसे इत्यस्मात् परे भिदपामतोऽनुवर्तमानदर्विधिनाऽपि उपानदित्यादि च सेत्स्यत्येव। तथा चायमर्थः। धग्रहणं न कर्तव्यं भवति। प्रक्रियालाघवं च। न च तथा सति हकारानुवृत्त्या सर्वादेशो दः स्यादिति वाच्यम्। षष्ठीनिर्दिष्टस्यैवान्तस्य हस्य सिद्धेः। एवं तर्हि नद्धमित्यत्र तथोर्ध इति झभान्तत्वात् परस्य तस्य धत्वं यथा स्यात् 'दस्तस्य नोदश्चेति' नत्वं माभूदिति। इह धत्वं विधीयते।

एवं 'पॄपालनपूरणयोः ।' पोरुरित्युर् । पूः ॥ 'धुर्वी हिंसायाम् ।' क्विपि यवयोरिति वलोपः । धूः ॥ त्रिचतुरोरिति । चतस्रादेशः । न तिसृचतसृोरिति न दीर्घः । चतसृणाम् ॥ प्रियाश्चत्वारो यस्याः सेति । यदा स्त्रियां मुख्यावित्युक्तत्वान्न चतस्रादेशः । चतुरामित्याम् । प्रियचत्वाः । धावमित्यम् । हे प्रियचत्वः ॥ १ ॥

( त० ) नहो ध इति ॥ तथदानामन्यतमस्तु नोक्तः नद्ध इत्यसिद्धेः ॥ उपानदिति ॥ उपपूर्वान्नहेः क्विपि नहिवृतीत्यादिना पूर्वस्यात्वम् । अत्रेदं विभाव्यम् ॥ सुष्ठु अनड्वानस्यामिति बहुव्रीहौ स्वनड्वानित्येव न तु नदादित्वादीपि स्वनड्वाहीति । अनुपसर्जनादिति तन्निषेधात् ॥ उष्णिगिति ॥ उत्पूर्वात्ष्णिह प्रीतावित्यस्मात्क्विपि निपातनाद्धलोपषत्वे ॥ गीरिति । गॄ निगरणे शब्दे च । क्विपि । ऋत इरिति इत्वम् । र्वोर्वि हल इति दीर्घः ॥ परिति ॥ पॄ पालनपूरणयोः । क्विपि पोरुरित्युत्वम् ॥ १ ॥

**इयं स्त्रियाम्** ॥ इदमः स्त्रियामियं सौ (क) । इयम् , इमे, इमाः । अनया, आभ्याम्, आभिः । अस्यै । अस्याः । अनयोः, आसाम् । अस्याम् । आसु ॥ अन्वादेशे । एनाम् , एने, एनाः । एनया । एनयोः ॥ स्रक्–स्रग् , स्रजौ । स्रग्भ्याम् । स्रक्षु । समित्–समिद्, समिधौ, समिधः । समिद्भ्याम् । समित्सु ॥ स्या, स्ये, स्याः ॥ एवम् । तद् । यद् । एतद् । किम् ॥ वाक्–वाग् , वाचौ । वाग्भ्याम् । वाक्षु ॥ ककुप्–ककुब् , ककुभौ । ककुब्भ्याम् । ककुप्सु । त्वक्–त्वग् , त्वचौ, त्वचः । त्वचम् । त्वग्भ्याम् ॥ ऋक्–ऋग् , ऋचौ, ऋचः । ऋचम् । ऋग्भ्याम् । ऋक्षु । अप्शब्दो नित्यं बहुवचनान्तः । आपः । अपः ॥ २ ॥

( सु० ) इयं स्त्रियाम् ॥ इदमोऽयमित्यतः इदम इत्यनुवर्तते । सौ स इत्यतः साविति च । त्यदाद्यत्वे आप् मत्वम् । औरितीत्वम् । इमे । अन टौसोरित्यनादेशः । टौसोरित्येत्वम् । अनया । हभ्य इत्यत्वम् । आभ्याम् । अन्वादेशे इदमेतदोरित्येनत् । शेषं सर्ववत् ॥ सृजेः क्विप् अमागमश्च निपातितः । दिशामिति कुत्वम् । स्रक्–स्रग् ॥ 'इध्ममेधः समित् स्त्रियाम्' इत्यमरः ॥ त्यदाद्यत्वे आप् । त इति सः ॥ स्या ॥ वचेः क्विपि वचीति क्विपि परे दीर्घोऽसंप्रसारणं च । चोः कुरिति कः । वाक् ॥ आप्नोतेर्ह्रस्वश्चेति ह्रस्वश्चात् क्विप् । न्सम्महत इति दीर्घः । आपः ॥ २ ॥

( त० ) इयं स्त्रियामिति । अत्रापि स्त्रियामिति ग्रहणं लुकि न तन्निमित्तमित्यस्यानित्यत्वे लिङ्गम् । अन्यथा इदमित्यत्र सेरभावादेवाप्राप्तौ स्त्रियांग्रहणमनर्थकं स्यात् ॥ २ ॥

**भि दपाम्** ॥ अप्शब्दस्य दत्वं भवति भकारादौ विभक्तौ ॥ अद्भिः । अद्भ्यः । अपाम् । अप्सु ॥ दिक्–दिग् , दिशौ, दिशः । दिग्भ्याम् । दिक्षु ॥

---

(क) इयमिति। आदेशविधानसामर्थ्यात् त्यदाद्यत्वाभावः हसान्तत्वात् सिलोपः । आभ्यामित्यादावाकारादेशे आ प् । प्रातिपदिकन्यायेनाप्सहितस्य त्वकारादेशे मद्भीत्यत्राद्विति योगविभागादात्वे नेष्टसिद्धिः

त्विट्—त्विड् , त्विषौ, त्विषः ॥ दृक्–दृग् , दृशौ, दृशः ॥ सह जुषते इति सजूः, सजुषौ, सजुषः । सजूर्भ्याम् । सजूःषु ॥ आशीः, आशिषौ । आशीर्भ्याम् । आशीःषु । असौ, अमू , अमूः । अमूम् । अमूः । अमुया, अमूभ्याम् , अमूभिः । अमुष्यै । अमुष्याः अमूषाम् । अमुष्याम् , अमूषु ॥ ३ ॥

इति हसान्ताः स्त्रीलिङ्गाः ॥ ११ ॥

( सु० ) भि द्पाम् ॥ अपामिति बहुवचनं चिन्त्यम्(क) ॥ अष्टनः त्रेरितिवदे-कवचनमेव युक्तम् । दिशेः क्विप् दिशामिति कुत्वम् । दिक्–दिग् ॥ त्विष दीप्तावित्य-स्मात् क्विप् । षो ड इति डत्वम् । त्विट् ॥ दृशेः क्विप् । दिशामिति कुत्वम् । दृक् ॥ जुषी प्रीतिसेवनयोरित्यस्माद् क्विप् । दोषामिति रः । र्वोरिति दीर्घः । सजूर्मित्रम् । शसे वेति वा सः । विसर्गनुम्स्थानिकेति षत्वम् । सजूःषु । ष्टुत्वम् । सजूष्षु ॥ आ-शासः क्वावित्युपधाया इत्वम् । घसादेरिति षः । आशीः । त्यदाद्यत्वे आप् । सौ स इति दस्य सः । 'सेरौः' इत्यौत्वम् । असौ । दस्य म इति मत्वम् । औ इतीत्वम् । एवं माद् इत्यूत्वम् । अमू ॥ ३ ॥ इति सुबोधिन्यां हसान्ताः स्त्रीलिङ्गाः ॥ ११ ॥

( त० ) भि द्पामिति ॥ भि द् आपम् इति च्छेदः । बहुवचनं चिन्त्यम् ॥ सुष्ठु-आपो यस्मिन्स स्वाप् स्वद्ग्रामित्यत्रैष्टत्वात् प्राधान्यद्योतनायेत्यपि न । स्ववस्स्वत-वस्मासां वैदिकानां संग्रहार्थमाद्यर्थं बहुवचनमिति माधवः । तन्नेति रामाश्रमः । अत्र-लौकिकानामेव प्रतिपाद्यत्वेन वैदिकप्रतिपादनस्यायुक्तत्वात् । अन्यथा अन्येषामपि व्यु-त्पाद्यत्वमिति न । न हि वैदिकव्युत्पादने यवनभाषायामिवापराधः(ख) । यदपि अन्यथे-त्यादि तत्रापि देवासः देवेभिः गोनामित्यादीनां व्युत्पादनदर्शनात् । कथं न व्युत्पाद्यम् । यदपि लौकिकप्रयोगनिष्पत्तये इति मूलविरोधाच्चेति तत्रापि न मात्रपदं न वा एवपदं

( क ) चिन्त्यमिति । अत्रोक्तं माधवेन सिद्धान्तरत्नावल्याम् । भिदपामित्यत्र अपामिति बहुवच-नेनेतरेषामपि लाभः । तेन—स्वतवद्भिः स्ववद्भिः माद्भिः समुपवद्भिः इत्यादौ स्वतवस् स्ववस् मास् समु-पवसामपि छन्दसि दत्वं सिद्ध्यति । अत्र चाह वासुदेवः । अपामिति बहुवचनान्तनिर्देशात् नित्यबहुवचना-न्तस्यैव दत्वं स्यान्न गौणत्वे । तत्त्वदीपिकाकारेण यदुक्तमपामिति बहुवचनेन माधवोक्तरीत्या निरुक्त-वैदिकप्रयोगसङ्ग्रहे प्रतिज्ञाभङ्गः प्रसज्येत । तन्न युक्तम् । भिदपामिति सूत्रं तु वाण्याः, ननु रामाश्रमा-दीनां केषाञ्चिदेन प्रतिज्ञाभङ्गप्रसक्तिः । न तु देव्युक्तिरस्ति यल्लौकिकप्रयोगसिद्धिरनेन भवति न तु वैदि-कसिद्धिरिति । एकस्याः सूत्रमेकस्य प्रतिज्ञाभङ्ग इत्यतीव खेदः ॥ यत्त लोकेशकरेण सिद्धान्तितं वस्तुतस्तु 'भ्यपोदिति सूत्रणीयं लाघवात् वैदिकानां तु छन्दसि दृष्टानुविधिरिति । तदयुक्तम् । यदि वैदिकानां छन्दसि दृष्टानुविधिरित्येव सिद्धः । अत्र तदर्थं किञ्चिन्न वक्तव्यम् । तर्हि लौकिकानामपि माहेशपाणि-न्यादिप्रक्रियायां सिद्धत्वात् तदप्यत्र न वक्तव्यमिति प्राप्तम् । एवं च सूत्रमात्रविधानं व्यर्थम् । अतो भिदपामिति बहुवचने पूर्वैर्यदुक्तं वैदिकप्रोगसङ्ग्रहाय तत् । तदव्यभिचारि । भ्यपोदिति सूत्रकरणे न तेषां संग्रहो भवति । अतो बहुवचननिर्देशः समीचीनः ॥

( ख ) ननु यवनभाषायां कोऽपराधः । "साधुभिर्भाषितव्यं नापभ्रंशित वै न म्लेच्छित वै" इत्या-दिश्रुत्या 'न वदेत् यावनीं भाषा' मित्यादिस्मृत्या च यवनादिभाषाभाषणे प्रतिपादितो दोषः ।

इति हसान्ताः स्त्रीलिङ्गाः ।

वैदिकव्यवच्छेदकं दृष्टमस्ति । न च लौकिकपदाद्वैदिकनिरास इति वाच्यं लौकिकानां बहूनां व्युत्पादनेन तद्ग्रहणस्योचितत्वात् । छत्रिणो गच्छन्तीतिवत् । यदि माधवमतखण्डने आग्रह एव तदा इत्थम् । संज्ञिनिर्देशे प्रथममुचिते विपरीतनिर्देशादन्यत्रापीति वैदिकानां सिद्धिः । वस्तुतस्तु भ्यपोदिति सूत्रणीयम् । लाघवात् । वैदिकानां तु छन्दसि दृष्टानुविधिरित्येव सिद्धिरिति दिक् ॥ आशिषाविति ॥ आशासः क्वावुपधाया इतीत्वे वसादेरिति षत्वम् ॥ ३ ॥

श्रीविद्यानगरस्थायिलोकेशकरशर्मणा । विहितायां हि टीकायां पोलिङ्गोऽगाद्धसान्तकः ॥

इति तत्त्वदीपिकायां हसान्तपोलिङ्गाः ॥ ११ ॥

---

# अथ हसान्ता नपुंसकलिङ्गाः ॥ १२ ॥

स्वनडुत्-स्वनडुद्, स्वनडुही, स्वनड्वांहि । पुनस्तद्वत् । शेषं पुंवत् ॥ वाः, वारी, वारि । वार्भ्याम् । वार्षु ॥ ऊ रसे । विमलद्यु, विमलदिवी, विमलदीवि ॥ किम् , के, कानि ॥ इदम् , इमे इमानि । अन्वादेशे एनत् , एने, एनानि ॥ ब्रह्म, ब्रह्मणी, ब्रह्माणि । हे ब्रह्मन्-हे ब्रह्म ॥ * ॥

( सु० ) सुष्ठु अनड्वान् यस्मिन् तत् । वसामिति दत्वम् । स्वनडुत् । शौ अनडुहश्चेत्याम् । नुमयम इति नुम् । स्वनड्वांहि । टादौ पुंवद्रूपम् ॥ यमान्तत्वान्न नुम् । वारि ॥ विमला द्यौर्यस्मिन् तद्विमलद्यु । औ परतोऽन्तर्वर्तिनीं विभक्तिमाश्रित्य पूर्वपदस्येवोत्तरखण्डस्यापि पदसंज्ञायां प्राप्तायामाह-उत्तरपदत्वे चापदादिविधौ प्रत्ययलक्षणं नेति । उत्तरशब्देनोत्तरपदमुच्यते । उत्तरपदस्य पदत्वव्यपदेशे कर्तव्ये प्रत्ययलक्षणं न भवतीत्यर्थः । पदादिविधौ तु प्रत्ययलक्षणं भवति । पदत्वाभावादुत्वं न । विमलदिवी (क)। लुकि नेति त्यदाद्यत्वं न । किम् ॥ एवमिदम् । इदमेतदोरित्येनदादेशे एनत् ॥ वेड्योरित्यल्लोपो न । वकारमकारान्तसंयोगादुत्तरस्य नेति निषेधात् । ब्रह्मणी । धौ नपुंसकानामिति वा नस्य लोपः । हे ब्रह्मन्-ब्रह्म ॥ * ॥

अह्नः ॥ अहन्शब्दस्य सो भवति रसे पदान्ते च (ख) ॥ अहः ।

---

( क ) इयमत्राशंका । विमला द्यौर्यस्मिन् तत् विमलद्यु । द्विवचने विमलदिवी । इत्यत्र अन्तर्वर्तिपदमाश्रित्य 'ऊरसे' इत्यनेन उत्वं कथं नेति । पूर्वखण्डस्येवोत्तरखण्डस्यापि पदत्वमस्ति । अस्या उत्तरम्। 'उत्तरपदत्वे चापदादिविधौ प्रत्ययलक्षणं ने'ति । अयमर्थः । उत्तरपदस्य पदत्वव्यपदेशे कर्तव्ये प्रत्ययलोपे प्रत्ययलक्षणं न भवतीति । पदादिविधौ तु प्रत्ययलक्षणं भवतीति 'विमलदिव्औ' इत्यत्र औ परत उत्तरखण्डस्य पदत्वाभावादुत्वं न परन्तु पदादिविधौ प्रत्ययलक्षणं भवतीति बोध्यम् ।

( ख ) ननु 'रोऽरात्रिषु' इत्येकमेव योगं कृत्वाऽत्रापि र एव विधीयताम् । मैवम् । अहोभ्यामित्यादौ विसर्गस्य वार्भ्यामिति वद् इति पुना रं इति प्राप्नोति । तथा हेदीर्घाहो निदाघेत्यत्रापि रं एव श्रूयेत । यथा न्यासे तु नास्ति दोष इति 'रो रात्रिष्विति सूत्रेऽप्युक्तमस्ति । इति माधवः । 'अह्नः सः' इति पाठान्तरम् । कुत्र चित् सारस्वतप्रक्रियायामिदमाकारसूत्रमुपलभ्यते । नान्तादन्तयोः छन्दसि ङिङयोर्वा लोपः। छन्दस्यागमजानागमजयोर्लोपालोपौ च वक्तव्यौ । तेन-परमे व्योमन् सर्वा भूतानि इति ॥ इतः सारस्वते इदमधिकमस्ति ।

( सु० ) नदादेः ॥ नद आदिर्यस्य स नदादिस्तस्मान्नदादेर्गणात् स्त्रियामीप् स्यात् ॥ अनुपसर्जनादेवायं गौणमुख्यन्यायात् । नद इत्यव्यक्तं शब्दं करोतीति पचाद्य-प्रत्ययः । यस्येत्यल्लोपः । नदी ॥ गौणे तु नदीमतिक्रान्ता स्त्री अतिनदा ॥ सुपर्णशब्दाद-पत्येऽर्थे ण्यण् प्रत्ययः । आदिस्वरवृद्धिश्च । सुपर्णाया अपत्यं स्त्री सौपर्णेयी ॥ ऊरुः प्रमाणं यस्याः सा ऊरुद्वयसी नदी । यस्येत्यल्लोपः 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' इति द्वयसडादिः ॥ अक्षैर्दीव्यति 'केनेयेका' इति इकप्रत्ययः । आक्षिकी ॥ इण्नशजिसर्तिभ्यः क्वरबिति क्वरप् ॥ एति परपुरुषं तच्छीला इत्वरी अनसी । क्वरब्द्वयसडाद्यन्तोदाहरणचतुष्टयं टुम्ति इत्यत्र वक्तुमुचितम् । क्वचित्तु तथैव पाठस्तत्र न दोषः ॥ चुरा शीलमस्या इति चौरी । अण्प्रत्ययान्तः स्त्रीपुंसाभ्यामिति नञ्स्नञौ । स्त्रियां भवा स्त्रैणी । पुंसि भवा पौंस्नी ॥ शक्तिः प्रहरणमस्या इति शाक्तीकी । शक्तियष्ट्योरीकणितीकण् ॥ गर्गस्या-पत्यमिति गर्गादेरिति ण्यः । गार्ग्यः । स्त्र्यपत्ये तु नदादित्वादीप् । यस्येत्यल्लोपः । हलात्तद्धितस्येति यलोपे गार्गी । पक्षे गार्ग्यायणीति । ण्यन्ताद्गार्ग्यशब्दात् स्त्रियामाय-नणि नदादित्वादीप् स्वार्थे ॥ लोहितस्यापत्यं स्त्री लौहितायनी । लोहितादिर्गर्गाद्य-न्तर्गणः । ण्यान्ताल्लौहित्यशब्दात् स्त्रियामायनण् ॥ कतस्यापत्यं स्त्रीति ण्यन्तात् कात्य-शब्दात् स्त्रियामायनण् ॥ आसुरस्यापत्यं स्त्रीति अणन्तादासुरशब्दात्स्त्रियामायनण् ॥२०॥

( त० ) नदादेरिति ॥ नद आदिर्यस्य स नदादिर्गणः तस्मात् नदादेः । नदडादयो यद्यपि टितो निपातितास्तथापि इहाटित एव बोध्याः । स्वरार्थत्वं तु इहानपयुक्तमेव । वैदिकानामप्रतिपाद्यत्वात् । अत इत्यनुवृत्तं यथासंभवं विशेषणीयम् । अन्यथा सख्योत्यादि न सिद्ध्येत् । यदि तु पत्न्यादित्वमेषां तदाऽनुवृत्तविशेषणत्वेन संकोचः । नदमिच्छन्ती कुर्वन्ती वा नदीर्नदित्यत्रातिव्याप्तिवारणायात इत्यनुवृत्तिश्चावश्यमभ्युपेया । एकदेशविकृ-तन्यायेन नदशब्दत्वात् प्राप्तिः ॥ एवं वराकमिच्छन्ती कुर्वन्ती वा वाराकीर्वराक् इत्यत्रापि नेप् अनुवृत्तेस्तत्रापि सत्त्वात् ॥ २० ॥

**( अनन्त्यवयोवाचिनोऽदन्तात् स्त्रियामीप् )** (क) कुमारी । किशोरी । वधूटी । चिरण्टी । तरुणी । तलुनी । अदन्तात्किम् । शिशुः ॥२१॥

( सु० ) अनन्त्यवयोवाचिनोऽदन्तात् स्त्रियामीप् ॥ कालकृता शरीराऽवस्था वयः । वयांसि चत्वारि त्रीणि च सन्ति । यथा । "आद्ये वयसि नाधीतं द्वितीये नार्जितं धनम् ॥ तृतीये न तपस्तप्तं चतुर्थे किं करिष्यति ॥ पिता रक्षति कौमारे भर्ता रक्षति यौवने ॥ पुत्रस्तु स्थविरीभावे न स्त्री स्वातन्त्र्यमर्हति ॥" उपचयापचयलक्षणे द्वे वयसी इत्यन्ये । वधूटचिरण्टतरुणतलुनशब्दा यौवनवाचिनः ॥ कुमारस्तु प्रथमवयोवाची ॥ अल्पवयाः अथवा किशोरी ॥ २१ ॥

( त० ) कुमारीति ॥ प्रथमवयोवाची एष शब्दः न तु स्त्रत्वप्रयुक्तः । वृद्धकुमा

---

( क ) कालकृता शरीरावस्था वयः। अत्र वासुदेवः 'तत्र यद्यपि केचित्कौमारयौवनमध्यत्ववृद्धत्वानि चत्वार्याहुः । अन्ये तु कौमारयौवनस्थविरत्वानि त्रीणीच्छन्ति । अपरे—

'आषोडशाद्भवेद्बालो यावत्क्षीरनिवर्त्तकः, मध्यमः सप्ततिर्यावत् परतो वृद्ध उच्यते ।' इत्यन्यथा त्रिण्याहुः । तथापि यावत्यो वृद्धिमत्योऽवस्थास्ताः सर्वा एकीकृत्य प्रथमं वयः । याश्चापचयवत्यस्ता राशीकृत्य द्वितीयमिति ।

रीति तु गौणः प्रयोगः तरुणी शालेत्यपि मुख्यार्थे उत्पादितस्य गौर्वाहीक इतिवद्गौणत्वेऽपि संभवात् ॥ २१ ॥

**( ऊधसोऽन्तस्य बहुव्रीहेर्नङ् स्त्रियाम् )** कुण्डोध्नी । द्व्यूध्नी । अत्यूध्नी ॥ २२ ॥

( सु० ) **ऊधसोऽन्तस्य बहुव्रीहेर्नङ् स्त्रियाम्** ॥ अकार उच्चारणार्थः । बहुव्रीहिग्रहणेनैव तदन्तलाभादन्तग्रहणं स्पष्टप्रतिपत्त्यर्थम् । अण ईबिति प्राप्तस्येपो निषेधः अनेन प्रतिषिध्यते । यथा । डाप् वेति वैकल्पिको डाप् । उपधालोपिनो बहुव्रीहेर्वेति वैकल्पिक ईप् । अन्नन्ताद्बहुव्रीहेर्नेति निषेधश्च । कुण्डमिव ऊधो यस्याः सा । ईप्यनोऽल्लोप इत्यल्लोपे कुण्डोध्नी ॥ द्वे ऊधसी यस्याः सा द्व्यूध्नी ॥ अतिशयितमूधो यस्याः सा अत्यूध्नी ॥ स्त्रीयामिति किम् , कुण्डोधो धेनुकम् ॥ बहुव्रीहेरिति किम् । प्राप्ता ऊधः प्राप्तोधाः । द्वितीयातत्पुरुषः ॥२२॥

**संख्यादेर्दाम्न ईप्** ॥ संख्यादेर्बहुव्रीहेर्दामान्ताच्च ॥ डाबीपोर्विकल्पेन प्राप्तयोर्वचनम् । द्विदाम्नी ॥ २३ ॥

**वयोवाचिनो हायनस्येप्** ॥ संख्यादेर्बहुव्रीहेर्वयोवाचिहायनान्तादीप् स्यात् । आपि प्राप्ते वचनम् ॥ २४ ॥

**(त्रिचतुर्भ्यां हायनस्य णत्वम्)** त्रिहायणी । चतुर्हायणी ॥२५॥

( सु० ) **त्रिचतुर्भ्यां हायनस्य णत्वम्** ॥ आभ्यां परस्य वयोवाचकस्य हायनस्य णत्वं वाच्यम् ॥ त्रयो हायना यस्याः सा त्रिहायणी ॥ चत्वारो हायना यस्याः सा चतुर्हायणी बाला । "हायनोऽस्त्री शरत्समाः" इत्यमरः ॥ २५ ॥

**इन्द्रादेरानीप्** ॥ स्त्रियां पुंयोगे (क) ॥ इन्द्राणी । वरुणानी । भवानी । शर्वाणी । रुद्राणी । मृडानी ॥ २६ ॥

( सु० ) **इन्द्रादेरानीप्** ॥ इन्द्र आदिर्यस्य स इन्द्रादिस्तस्मादिन्द्रादेर्गणात् स्त्रियामानीप् स्यात् ॥ पुंयोगेत्यपकृष्यते । पित्करणसामर्थ्याल्लुक् सेप इत्यत्रानीपोऽपि ग्रहणं भवति ॥ ननु ह्रस्वादिरेवानीबस्तु किमनेन दीर्घोच्चारणेन । अत्राहुः । ब्रह्माणीति सिद्ध्यर्थं दीर्घग्रहणम् । ब्रह्मन्शब्दादानीपि कृते नो वेति टिलोपे ब्रह्माणीति ॥ अन्ये त्वाहुः । ब्रह्माणमानयति जीवयतीति 'अन प्राणने' ण्यन्तादस्मात्कार्येऽणित्यण् प्रत्ययः । नूण ईबितीपि च कृते ब्रह्माणीति सिद्ध्यत्येव ॥ माधवस्तु इन्द्रं करोति इन्द्रयति, इन्द्रेति 'नाम्नो निर्हित्करणे' इति क्यन्तात् क्विपि इन्द्र् तस्य इन्द्रः स्त्री इन्द्राणीति दीर्घपाठाद्वदति तन्न । क्विबन्तस्य क्रियाशब्दत्वेन पुंशब्दत्वाभावात् ॥ किंच इन्द्रमिच्छतीति इन्द्रीयति । नाम्नो य ई चास्येति यप्रत्ययान्तात् क्विपि कृते इन्द्रीः । इन्द्रियः स्त्री इन्द्राणीत्यतिव्याप्तेश्च ।

---

( क ) ननु इन्द्रादेरित्यादिना अनीबेव विधीयतां सवर्णदीर्घत्वे चेन्द्राणीत्यादिसिद्धेः । विधानसामर्थ्याच्च यस्य लोप इत्यल्लोपो न स्यात् । अन्यथा नीपमेव कुर्यात् इति चेत्सत्यम् । इन्द्रमाचष्ट इन्द्रयति । इन्द्रयतीतीन्द्र । तस्य स्त्री इन्द्राणीत्यादावपि दीर्घश्रुत्यर्थमानीब्विधिः । इति माधवः ।

वस्तुतस्तु ह्रस्वादिपाठेऽपि हानिर्न । इन्द्रस्य स्त्री इन्द्राणी ॥ वरुणस्य स्त्री वरुणानी ॥ भवशर्वमृडरुद्राः पर्यायशब्दाः ॥ २६ ॥

( त० ) इन्द्रादेरानीबिति ॥ अत्र 'पुंयोगे च' इत्यतः 'पुंयोगे' इत्यनुकृष्यते । दीर्घोच्चारणं तु क्वचिदतद्धितेऽपि यस्य लोप इति ज्ञापनार्थम् । अन्यथा आनीपि लोपे एवं न स्यात् । आकारोच्चारणस्य तु न समर्थं धर्मादनि सुधर्मेत्यादावपि तत्सामर्थ्याल्लोपाभावप्रसङ्गात् । इन्द्रं करोति इन्द्रयति ततः क्विपि इन्द्र् तस्य इन्द्रः स्त्री इन्द्रमिच्छतः इन्द्रियः स्त्रीत्यादौ अतः इत्यनुवृत्तेरनदन्तत्वादेव न । ब्रह्माणीति ब्रह्माणमानयति जीवयतीति विग्रहे 'अन प्राणने' इत्यतो ण्यन्तात्कर्मण्यणि अणन्तत्वात् ङीपि णत्वे च सिद्ध्यति । सूत्रं तु इन्द्रस्य स्त्रीति वाक्ये इन्द्रीत्यनिष्टरूपवारणायेति बोध्यम् । इन्द्रादेरान्वेति तु न सूत्रितम्, आगमलिङ्गाभावेन सर्वादेशप्रसङ्गात् । अनुगपि न कृतः अल्लोपः स्वर इति लोपप्रसङ्गात् । अकारोच्चारणस्य तु प्रकृत्यकारकरणार्थत्वेन चरितार्थत्वान्न सामर्थ्यम् । शर्वशब्दे च । अत्राहुः । आनुक् सुवचो मात्रालाघवादिति । अत्रेदं वक्तव्यं मात्रालाघवेऽपि प्रक्रियागौरवस्य सत्त्वेन तुल्यत्वात् । तथा हि । आनुकि सवर्णे दीर्घः सह, ङीष् ईबिति सूत्रद्वयम् आनीपि तु दीर्घसूत्रमेकमेवेति लाघवम् ॥ २६ ॥

## ( आचार्यादणत्वम् ) आचार्यानी ॥ २७ ॥

( सु० ) आचार्यादणत्वम् ॥ आचार्यशब्दात्परस्यानीपो नस्य णत्वं न स्यात् ॥ आचार्यस्य स्त्री आचार्यानी-पुंयोगाभावे आचार्या । स्वयं व्याख्यात्री ॥ २७ ॥

## ( हिमारण्ययोर्महत्त्वे ) महद्धिमं हिमानी ॥ महदरण्यमरण्यानी २८

( सु० ) हिमारण्ययोर्महत्त्वे ॥ महत्त्वयोगे आभ्यामानीप् स्त्रीत्वं च विधीयते ॥ महद्धिमं हिमानी ॥ "हिमानी हिमसंहतिः" इत्यमरः ॥ महदरण्यमरण्यानी । "महारण्यमरण्यानी" इत्यमरः ॥ २८ ॥

(त०) महत्त्वे इति ॥ लक्षणया महत्त्वम् । न दीर्घत्वमिति भावः । तदन्तश्च स्त्रियामिति वक्तव्यम् । अन्यथा धौ ह्रस्वः स्त्रियां य्वोरित्यादेः प्रवृत्तिर्न स्यात् स्त्रियमाभावात्।२८

## ( यवाद्दोषे ) दुष्टो यवो यवानी ॥ २९ ॥

( सु० ) यवाद्दोषे ॥ यवादानीप् स्त्रीत्वं च दोषेऽर्थे ॥ दुष्टो यवो यवानी ॥ यवत्वजात्यभावे तदाकारानुकृतिर्दोषः । यवाकारानुकृतिमजात्यन्तरमेवानेनाभिधीयते ॥ २९ ॥

( त० ) यवाद्दोष इति ॥ यवानीति जात्यन्तरमेवानेन विधीयते । अयमेव चास्य दोषः । यदि तु यवत्वजातेरभावेऽपि तदाकारानुकृतिः ॥ २९ ॥

## ( यवनाल्लिप्याम् ) यवनानां लिपिर्यवनानी ॥ ३० ॥

( सु० ) यवनाल्लिप्याम् ॥ यवनशब्दादानीप् लिप्यर्थे । स च स्त्रीलिङ्ग एव । देवतेदमर्थे इत्यणो बाधक आनीप् विधीयते । यवनानां लिपिर्यवनानी । लिखिताक्षरविन्यासो लिपिः ॥ ३० ॥

## ( मातुलोपाध्यायाभ्यां वा ) मातुलानी-मातुली ॥ उपाध्यायानी-उपाध्यायी ॥ ३१ ॥

( सु० ) मातुलोपाध्यायाभ्यां वा ॥ आभ्यामानीप् वा स्यात् । पक्षे पुंयोगे चेतीप् ॥ मातुर्भ्राता मातुलस्तस्य स्त्री मातुलानी–मातुली ॥ उपाध्यायस्य स्त्री उपाध्यायानी—उपाध्यायी ॥ ३१ ॥

( अर्यक्षत्रियोपाध्यायेभ्यो वा स्वार्थे ) अर्याणी–अर्या ॥ क्षत्रियाणी–क्षत्रिया ॥ उपाध्यायानी–उपाध्याया ॥ ३२ ॥

( सु० ) अर्यक्षत्रियोपाध्यायेभ्यो वा स्वार्थे ॥ एभ्यः स्वार्थे आनीप् वा स्यात् । पक्षे आप् ॥ अर्याणि—अर्या । स्वामिनी वैश्या वेत्यर्थः । अर्यः स्वामिवैश्ययोरित्यर्थद्वयेऽपि निपातनात् ॥ क्षत्रियाणी—क्षत्रिया । क्षत्रियजातीया स्त्रीत्यर्थः ॥ पुंयोगे तु अर्यी क्षत्रियी ॥ या तु स्वयमेवाध्यापिका तत्र वा ईप् वाच्यः । पक्षे आप् । उपाध्यायी उपाध्याया । उपेत्यास्या अधीयते इत्यपादाने स्त्रियां घञ् । "उपाध्यायान्युपाध्यायी" इत्यमरः ॥ ३२ ॥

( त० ) आर्याणीति ॥ स्वामिनी वैश्या वा स्वार्थे इति ॥ पुंयोगेऽसतीत्यर्थः॥३२॥

पुंयोगे च ॥ अदन्तात्स्त्रियामीप् । शूद्री । गणकी ॥ ३३ ॥

( सु० ) पुंयोगे च ॥ इह पुमिति षष्ठयन्तं साकृतिकं पृथक् पदम् । तच्चावर्त्यते । द्विरुच्चारणमावृत्तिः । पुंसः पुंस इति । योगे इति भावे निमित्ते वा सप्तमी । अधिकारान्नामेति लभ्यते । यत् पुंसो नाम पुंवाचकशब्दोऽदन्तः पुंसो योगे स्त्रियां वर्तते तत ईप् स्यात् ॥ योगः सम्बन्धः स चेह दाम्पत्यरूप एवेति नाग्रहः । किन्तु जन्यजनकभावोऽपि गृह्यते । तेन केकयस्य क्षत्रियस्य पुत्री केकयीत्यादि सिद्धम् । तदा च भट्टिः । "प्राक्केकयीतो भरतस्ततोऽभूत्" इति(क) ॥ कन्यादित्वात्केकयदुहिता कैकेयीत्यपी । तथा प्रागुक्तः "कैकेयि कामाः फलितास्तवेति" इति कालिदासेन(ख) ॥ पुंयोगे किम् । देवता । अयं हि संज्ञाशब्दः स्वभावात् स्त्रियां वर्तते न तु पुंवाचकशब्दयोगे ॥ अतः किम् । भानोः स्त्री भानुः ॥ ३३ ॥

( त० ) गणकीति ॥ गणकस्य स्त्रीत्यर्थः । स्त्रियां वृत्तिस्तु साहचर्यात् । तस्येयमिति सम्बन्धात् । तद्धितस्त्वभेदविवक्षातो न । यदि भेदविवक्षा तथा गणकेत्यपि भवत्येव । पुंयोगश्च न दाम्पत्यरूप एव किंतु जन्यजनकभावलक्षणोऽपि तेन केकयीत्यपि।३३।

( पालकान्तान्न ) गोपालिका । अश्वपालिका ॥ ३४ ॥

( सु० ) पालकान्तान्न ॥ पुंयोगे ईब् न स्यात् । गोपालकस्य स्त्री गोपालिका।३४।

( त० ) पालकान्तान्नेति ॥ चकारस्य व्यवस्थितत्वार्थत्वादित्यर्थः ॥ ३४ ॥

(सूर्याद्देवतायां चाप्) सूर्यस्य स्त्री देवता सूर्या । अन्या सूरी ॥३५॥

( सु० ) सूर्याद्देवतायां चाप् ॥ सूर्यशब्दात् पुंयोगे आप् स्यात् देवतायां ईपोऽपवादः ॥ देवतायां किम् । सूर्यस्य स्त्री सूरी मानुषी कुन्तीत्यर्थः । सूर्यागस्त्ययोरिति यलोपः ॥ ३५ ॥

---

( क ) सम्पूर्णश्लोको यथा—

कौशल्ययासाविसुखेन रामः प्राक्केकयीतो भरतस्ततोऽभूत् । प्रासोष्टशत्रुघ्नमुदारचेष्टमेका सुमित्रा सह लक्ष्मणेन

( ख ) कैकेयीति श्लोकः पूर्वोत्तरोक्तः ।

( त० ) सूरीति । सूर्यागस्त्ययोरीये ईपि चेति यलोपः ॥ ३९ ॥

( जातेरयोपधात् ) जातिवाचिनोऽयकारोपधादकारान्तात्स्त्रियामीप् प्रत्ययो भवति(क)॥ महिषी। हंसी ॥ योपधात्तु । क्षत्रिया। वैश्या ॥३६॥

( सु० ) जातेरयोपधात् ॥ जातिवाचकाद्य उपधा यस्य स योपधः न योपधः अयोपधस्तस्मादयोपधात् अदन्तात्स्त्रियामीप् स्यात् ॥ जातिलक्षणमाह । "आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ॥ १ ॥" आकृतिर्ग्रहणं यस्याः सा आकृतिग्रहणा जातिरुच्यते । आकृतिः संस्थानम् । गृह्यतेऽनेनेति ग्रहणम् । करणे ल्युट् । अवयवसन्निवेशविशेषव्यङ्ग्येत्यर्थः । यथा तटी । तटादेः सर्वलिङ्गत्वेऽपि आकृतिग्रहणत्वाज्जातित्वं भवति । अनेन लक्षणेन गोत्वादिजातिर्लक्षिता । ब्राह्मणत्वादिजातिस्तु न लक्षिता । ब्राह्मणक्षत्रियादीनां ह्यवयवसंस्थानस्य सदृशत्वात् ब्राह्मणादिष्वव्याप्तिवारणाय लक्षणान्तरमाह । चकारो भिन्नक्रमार्थः । या सकृदाख्यातनिर्ग्राह्या सा जातिरुच्यते । सकृदेकवारमाख्यातोपदिष्टा सती निर्ग्राह्या निश्चेतुं शक्या सा जातिरित्यर्थः । कीदृशी सा लिङ्गानां न सर्वभाक् । लिङ्गानामिति कर्मणि षष्ठी । सर्वाणि भजतीति सर्वभाक् । या सर्वाणि लिङ्गानि न भजतीत्यर्थः । सर्वशब्दस्य लिङ्गापेक्षत्वेऽपि गमकत्वात् भजो विण्प्रत्ययः समासश्च । असर्वलिङ्गत्वे सत्येकस्यां व्यक्तौ कथनाद्व्यक्त्यन्तरे कथनं विनापि सुग्रहो जातिरिति लक्षणान्तरम् । यथा वृषली । एकस्यां हि व्यक्तौ वृषलत्वे कथिते तदपत्यतत्सहोदरादौ कथनं विनापि वृषलत्वस्य सुग्रहः ॥ सकृदित्यादि किम् । देवदत्ता । यस्यां हि व्यक्तौ देवदत्तत्वं कथ्यते तत्समकालमन्या देवदत्ताव्यक्तिरप्रसिद्धेति न देवदत्तत्वं जातिः । उक्तलक्षणद्वयरहितत्वात् । तृतीयलक्षणमाह । चरणैः सह गोत्रं जातिरुच्यते । चरणशब्देन शाखाध्येतार उच्यन्ते । गोत्रशब्देनापत्यमुच्यते । अपत्यप्रत्ययान्तः शाखाध्येतृवाचकशब्दो जातिवाचक इत्यर्थः ॥ गोत्रस्यानाकृतिग्रहणत्वात् सर्वलिङ्गत्वाच्च पृथगुपादानम् । चरणशब्दानामध्ययनक्रियासम्बन्धेन प्रवृत्तत्वात् क्रियाशब्दा एव न जातिशब्दा इति चरणग्रहणं कृतम् । आकृतिग्रहणा यथा । महिषी । हंसी ॥ असर्वलिङ्गा यथा । ब्राह्मणी । वृषली ॥ गोत्रलक्षणा यथा । पैतृष्वस्रीयो । औपगवी अणन्तनिमित्तकमीपं परत्वादयं बाधते इति भावः । चरणलक्षणा यथा। कठेन प्रोक्तमधीयाना कठी । कारकादित्यण्प्रत्ययस्य लुक् च ॥ अत इति किम् । तित्तिरिः । गौः॥३६॥

( त० ) जातेरयोपधादिति ॥ जातिलक्षणमुच्यते "आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ॥" आकृतिग्रहणा जातिः । आकृतिः संस्थानं ग्रहणं यस्याः सा आकृतिग्रहणा । अवयवसन्निवेशविशेषव्यङ्ग्येत्यर्थः ।

( क ) जातिलक्षणं महाभाष्ये—
'प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः । असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः ॥' इति ।
अस्यायमर्थः—या सत्त्वस्य द्रव्यस्य प्रादुर्भावविनाशाभ्यामाविर्भावतिरोभावौ प्राप्नोति । यावद्द्रव्यभाविनीत्यर्थः। अत एव वृद्धत्वविरेत्यत्रैव न भवति । अयावद्द्रव्यभावित्वेन वृद्धत्वादेरजातित्वात् गुणैश्च युगपद्द्रव्येण सम्बध्यते । यथा निर्गुणं न भवति तथा जातिरहितमपीत्यर्थः । बह्वर्थामिति । अर्थशब्दो विषयवाची । बहुविषयां बहुव्यक्तिव्यापिनीमित्यर्थः । असर्वलिङ्गामिति तु ब्राह्मणी वृषलीत्याद्यर्थं लक्षणान्तरम् । न च प्राच्यलक्षणसंकोचकमिति तटादेः सर्वलिङ्गत्वेऽपि जातित्वं भवत्येव ।

अनेन गोत्वादिजातिर्लक्षिता ॥ ब्राह्मणत्वादिजातिस्तु न ब्राह्मणक्षत्रियादीनां संस्थानस्य-साद्दश्यात्। अतो लक्षणान्तरमाह। लिङ्गानां चेत्यादि ॥ सर्वाणि लिङ्गानि न भजतीत्ययमर्थो विवक्षितः। सर्वशब्दस्य लिङ्गापेक्षत्वेऽपि भजो विण्प्रत्ययः समासश्च बोधकत्वात्। लिङ्गानामिति कर्मणि षष्ठी। सर्वं लिङ्गं न भजतीत्यर्थः ॥ सकृदिति ॥ असर्वलिङ्गत्वे सत्येकस्यां व्यक्तौ कथनाद्व्यक्त्यन्तरे कथनं विनापि सुग्रहा जातिरिति लक्षणान्तरम्। अक्षरार्थस्तु एकस्मिन्पिण्डे सकृदेकवारमाख्याता अयं गौरित्युपदिष्टा पिण्डान्तरेषु निग्राह्या निश्चेतुं शक्येत्यर्थः ॥ अप्राप्तप्रापणं चेदं न तु पर्वलक्षणसङ्कोचकं तेन तटादेर्जातित्वम्। देवतादौ तु उपदेशाभावान्न लक्षणसमन्वयः। येषु सर्वेषु लिङ्गेष्वाचार्या जातिवाचित्वमुपदिशन्ति तेष्वेव वदन्तीत्यर्थः ॥ गोत्रं च चरणैः सहेति ॥ गोत्रशब्देनापत्यमुच्यते। चरणशब्देन शाखाध्यायिन उच्यन्ते। तेनापत्यप्रयान्तः शाखाध्येतृवाचो शब्दो जातिवाचक इत्यर्थः ॥ कुक्कुटी सूकरीति प्रथमस्योदाहरणम् ॥ ब्राह्मणी वृषलीति द्वितीयस्य ॥ गार्गी पैतृष्वस्रीयीति तृतीयस्य ॥ कठी वराकीति चतुर्थस्य ॥ गवयेत्यादिनोक्तस्यानित्यत्वादिति भावः ॥ ३६ ॥

( क्वचिन्न ) बलाका (क) ॥ ३७ ॥

( सु० ) क्वचिन्न ॥ यः शब्दो जातिवाची अयोपधः स्त्रियां नियतश्च ततो नेप् भवतीत्यर्थः। "बलाका बिसकण्ठिका" इत्यमरः ॥ ३७ ॥

(गवयहयमुकयमनुष्यमत्स्यानामनिषेधः) गवयी। हयी। मुकयी (ख) ॥ हसात्तद्धितयस्येति लोपः। मनुषी ॥ ३८ ॥

( सु० ) गवयहयमुकयमनुष्यमत्स्यानामनिषेधः ॥ योपधेभ्योऽप्येभ्य ईप् स्यात् ॥ हसात्तद्धितयस्येति लोपः। हसात्परस्य तद्धितयकारस्य लोपः स्यादीपि ॥ यस्येत्यलोपः। मनुषी ॥ ३८ ॥

( त० ) गवयहयेति ॥ हसात्तद्धितेत्यादि। एतद्बीजं तु यस्येति सूत्रव्याख्यानावसरे वोक्तम् ॥ ३८ ॥

( मत्स्यस्य यलोपः ) मत्सी ॥ ३९ ॥

( सु० ) मत्स्यस्य यलोपः ॥ मत्स्यशब्दस्य यकारस्य लोपः स्यादीपि। यस्येत्यलोपः। मत्सी ॥ ३९ ॥

( सूर्यागस्त्ययोरीये ईपि च ) सूरी। अगस्ती ॥ ४० ॥

( सु० ) सूर्यागस्त्ययोरीये ईपि च ॥ अनयोर्यकारस्य लोपः स्यात् ईयप्रत्यये ईप्प्रत्यये च ॥ सूरीयः। सूरी। अगस्तीयः। अगस्ती ॥ ४० ॥

---

( क ) अत्र केचित्—'जातेरयोपधात्' इति सूत्रे 'नोवे'त्यतो मण्डूकप्लुत्या वानुवृत्तेर्मक्षिका बलाकेत्यादौ स्त्रीमात्रविषयत्वाज्जातिवाचिनो न। इत्याहुः। बलाकात्वस्य आकृतिव्यङ्ग्यतया जातित्वेऽपि नियतस्त्रीलिङ्गत्वान्नेप्। यद्यपि बलां कायतीति यौगिकत्वे त्रिलिङ्गकत्वमस्ति, तथापि प्रवृत्तिनिमित्तैक्ये स्त्रीलिङ्गान्यलिङ्गरहितभिन्नत्वमिति विवक्षणान्न दोषः। जातिविशेषे नियतस्त्रीलिङ्गत्वात्। भाष्ये तु अनियतस्त्रीलिङ्गत्वमङ्गीकृत्य अजादित्वादापिति समाहितम्।

( ख ) गवयी गोसदृशश्चतुष्पाज्जातिविशेषः। मुकयी चतुष्पाज्जातिविशेषः।

**( तिष्यपुष्ययोर्नक्षत्राणि यलोपः )** तैषी । पौषी ॥ ४१ ॥

( सु० ) तिष्यपुष्ययोर्नक्षत्राणि यलोपः ॥ अनयोर्यकारस्य लोपः स्यात् । नक्षत्रसम्बन्धी योऽण् स नक्षत्राण् । नक्षत्रेण युक्तः काल इत्यण् । नक्षत्रे भव इत्यण् च तस्मिन् परतः ॥ तिष्येण युक्तः कालस्तैषः । पुष्येण युक्तः कालः पौषः । तथा तिष्ये भवस्तैषः । पुष्ये भवः पौषः । स्त्रियां नूण ईबितीप् । यस्येत्यलोपः । तैषी । पौषी ॥४१॥

**( जानपदादिभ्योऽर्थविशेषे ईप् )** जानपदी—वृत्तिश्चेत् । अन्या जानपदी ॥ कुण्डी—अमत्रं चेत् । कुण्डाऽन्या ॥ गोणी—आवपनं चेत् । गोणाऽन्या ॥ स्थली—अकृत्रिमा चेत् । स्थलाऽन्या ॥ भाजी—श्राणा चेत् । भाजाऽन्या ॥ नागी—स्थूला चेत् । नागाऽन्या ॥ काली—वर्णश्चेत् कालाऽन्या ॥ नीली ओषधिप्राणिनोः । नीलाऽन्या ॥ संज्ञायां वा । नीला-नीली ॥ कुशी—अयोविकारे । कुशाऽन्या ॥ कामुकी—मैथुनेच्छायाम् । कामुकाऽन्या ॥ कबरी—केशविन्यासे । कबरान्या ॥ ४२ ॥

( सु० ) पाणिनिसूत्रम् । जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु(क) एभ्य एकादशभ्य एष्वर्थेष्वीप् स्यात् ॥ जनपदे देशे भवा जानपदी । भवार्थ अण् वर्तते । वृत्तिर्जीविका चेद्यदि । अन्येति ॥ अन्याऽप्येवं जानपदी । वृत्त्यभावे आद्युदात्त इति स्वरे भेदः ॥ "अस्त्री कमण्डलुः कुण्डी" इत्यमरः ॥ अमत्रं पात्रम् । कुण्डी स्त्रीविषयत्वाभावादप्राप्त ईप् विधीयते । अन्या कुण्डा । कुडि दाहे । अस्माद्गुरोर्हसादित्यङ्प्रत्यये रूपम् । यस्तु "अमृते जारजः कुण्डः" इति मनुष्यजातिवाची कुण्डशब्दस्तो जातिलक्षण ईप् भवत्येव ॥ ओप्यते निक्षिप्यते धान्यं यस्मिन् तदावपनम् । गोणी । आङ्पूर्वाद्वपेरधिकरणे युट् । अन्या गोणेति यथेच्छं नाम ॥ अकृत्रिमा पुरुषेणासंस्कृता भूमिः स्थली । पुरुषकृता तु स्थला ॥ पुष्टा चेत् नागी । अन्या नागा ॥ वर्णयुक्ताचेत् काली । अन्या काला । अनाच्छादनं चेन्नीली ओषधिविशेषः । प्राणिनि तु नीली गौः । आच्छादने तु नीला शाटी ॥ अयसो लोहस्य विकारः अयोविकारः, फाल इति प्रसिद्धः । तत्र कुशी । अन्या कुशा । वेदे औदुम्बरसङ्कुं कुशा इति व्यवहरन्ति । "वल्गावक्षेपणी कुशा" इति हैमकोशे ॥ मैथुनेच्छायां सुरतवाञ्छायां कामुकी । वनादिकं कामयितुं शीलं यस्याः सा कामुका । षाकोकण इत्युकण् ॥ केशविन्यासे केशरचनायां कबरी । अन्या कबरा । चित्रेत्यर्थः(ख)॥४२॥

---

( क ) जानपद ॥ जानपदेत्यादि कबरादित्यन्तमेकपदम् । समाहारद्वन्द्वात् पञ्चमी । जानपदीति । जनपदे भवेत्यर्थः ।

( ख ) वृत्तिरीति । जीविका गम्याचेदित्यर्थः । कुण्डीति । 'पिठरं स्थाल्युखाकुण्डम्' इत्यमरः । अन्याकुण्डेति । दहनीयेत्यर्थः । तदेव विशदयति—कुडिदाहे इति । गुरोश्चेति । गुरुमतो हसान्ताद्धातोरप्रत्ययः स्यात् भावकर्मणोः स्त्रियामिति तदर्थः । ननु 'अमृते जारजः कुण्डो मृते भर्तरि गोलकः' इति मनुष्यजातिविशेषवाची कुण्डशब्दोऽपि प्रत्युदाहरणं किं न स्यात्—इत्यत आह—यस्त्विति । जातिलक्षण इति । जातेरयोपधात्' इति जातिनिमित्तक इत्यर्थः । ननु अमत्रेऽपि

(त०) जानपदेत्यादि ॥ पुंयोगे इत्यत्र चकारस्य व्यवस्थितत्वाश्रयणादिति भावः ॥ आवपन इति ॥ ओप्यते निक्षिप्यते धान्यं यस्मिन् तत्तस्मिन् । गोणाऽन्या यादृच्छिकं नाम ॥ अकृत्रिमायामिति ॥ असंस्कृतायामित्यर्थः । श्राणेति ॥ पक्वेत्यर्थः । अयोविकार इति ॥ फाल इत्यर्थः ॥ कुशा आदुम्बराः शङ्कवः ॥ ४२ ॥

**( शोणाद्वा )** शोणी-शोणा ॥ ४३ ॥

(सु०) शोणाद्वा ॥ शोणशब्दाद्वा ङीप् स्यात् ॥ "शोणः कोकनदच्छविः" इत्यमरः ॥

**( बहुव्रीहेर्जातिपूर्वात् क्तान्तात् )** ऊरुभिन्नी ॥ ४४ ॥

(बहुव्रोहेजातिपूर्वात् क्तान्तात् ॥ जातिवाचिपूर्वपदात् क्तान्तादन्ताद्बहुव्रीहेः स्त्रियामीप् ॥ भिन्नावूरू यस्या इति बहुव्रीहौ । भिन्नशब्दस्य बहुव्रीहौ विशेषणसप्तम्यन्तक्तान्तानामिति पूर्वनिपाते प्राप्ते क्वचिन्नेति परनिपातः ॥ ४४ ॥

( त० ) बहुव्रीहेरिति ॥ एतद्बीजं तु चकार एव ॥ ४४ ॥

**( जातान्तान्न )** दन्तजाता ॥ ४५ ॥

( सु० ) जातान्तान्न ॥ जातशब्दान्ताद्बहुव्रीहेर्जातिवाचिपूर्वपदादीप् न । दन्ता जाता यस्याः सा दन्तजाता ॥ ४५ ॥

**( अस्वाङ्गपूर्वपदाद्वा )** सुरापीति—सुरापीता ॥ ४६ ॥

( सु० ) अस्वाङ्गपूर्वपदाद्वा ॥ अस्वाङ्गवाचिपूर्वपदात् क्तान्तादन्ताद्बहुव्रीहेः स्त्रियां वेप् स्यात् । पीता सुरा यया सा सुरापीता । क्वचिन्नेति क्तान्तस्य परनिपातः ॥ बहुव्रीहेर्जातिपूर्वपदादित्यनेन नित्ये प्राप्ते विकल्पार्थमेतत् ॥ ४६ ॥

( त० ) सुरापीतीति । नाम्नः कृतेति व्युत्पत्तेः प्रागेव समासे सिवन्ते न । समासे तु सुरापीतेत्यादिकमेव ॥ ४६ ॥

**( पाणिगृहीती भार्यायाम् )** अन्या पाणिगृहीता ॥ ४७ ॥

( सु० ) पाणिगृहीती भार्यायाम् ॥ यस्याः पाणिरग्निसाक्षिको गृह्यते तस्यां वाच्यायां पाणिगृहीतशब्दादीप् स्यात् ॥ अन्येति ॥ कौतुकादिना पाणिर्गृहीतो यस्या दास्यादेः सा पाणिगृहीता ॥ ४७ ॥

**( क्रीतान्तात्करणादेः )** वस्त्रक्रीती । क्वचिन्न । धनक्रीता ॥४७॥

( सु० ) क्रीतान्तात्करणादेः ॥ आदिशब्दो ह्यवयववचनः । करणमादिरवयवो यस्य तस्मात् करणादेरेकपदादित्यर्थः । क्रीतान्तादन्तात् करणादेः स्त्रियामीप् स्यात् ॥ वस्त्रेण क्रीतेति वस्त्रक्रीती ॥ करणादेरिति किम् । गवा क्रीता ॥ अश्वेन क्रीता ॥ ४८ ॥

---

वाच्ये कुण्डशब्दाज्जातिलक्षणेपि सिद्धे तद्वचनं व्यर्थम् । न च अमत्र एवेपिति नियमार्थं तदिति वाच्यम् । एवं सति मनुष्यजातिविशेषवाचित्वे ईपोऽनुपपत्तेरित्यत आह—स्त्रीविषयत्वादिति । अमत्रे कुण्डशब्दो नित्यस्त्रीलिङ्गः । पदान्तरं विना स्त्रियां वर्त्तमानत्वं नित्यस्त्रीत्वमिति स्वीकारात् । 'कुण्डी-कमण्डलौ जारात् पतिवत्नीसुते पुमान्' इति मेदिनीकोशाच्च । अनाच्छादनं चेदिति । वस्त्रभिन्नं गवादिकमित्यर्थः । अयोविकारश्चेदिति । फाल इति प्रसिद्धः । 'लाङ्गलधुड्' इत्युत्कलभाषा । सम्याकुशेति । वेदे इति । छन्दोगसूत्रे 'प्रस्तोता तु कुशाः कारयेत्क्षत्रियस्य वृक्षस्य खदिरस्य दीर्घसत्रेष्वेके प्रादेशमात्रीः कुशपृष्ठास्त्वक्तस्समामभ्यक्ते' इति प्रसिद्धा । वनादिकमिति । आदिना वनादीभ्यावतीत्यर्थः ।

**(क्रान्तादल्पत्वे) अभ्रलिप्ती द्यौः ॥ अल्पत्वे किम् । चन्दनलिप्ताऽन्या मूर्तिः ॥ ४९ ॥**

( सु० ) क्रान्तादल्पत्वे ॥ करणादेः क्रान्तादन्तात्स्त्रियामीप् स्यादल्पत्वे द्योत्ये । अल्पैरभ्रैर्लिप्तेति अभ्रलिप्ती ॥ ४९ ॥

**स्वाङ्गाद्वा ॥ स्वाङ्गवाचिनोऽदन्तादसंयोगोपधादुपसर्जनाद्वा स्त्रियामीप् ॥ सुमुखी—सुमुखा । सुकेशी—सुकेशा । संयोगोपधात्तु सुगुल्फा ॥ ५० ॥**

( सु० ) स्वाङ्गाद्वा ॥ स्वाङ्गवाचकादकारान्तादसंयोगोपधाद्गौणाद्वा स्त्रियामीप् स्यात् ॥ यथा सुष्ठु मुखं यस्याः सा सुमुखी ॥ सुष्ठु केशा यस्याः सा सुकेशी । पक्षे आवत इत्याप् ॥ असंयोगोपधात्किम् । सुष्ठु गुल्फौ यस्याः सा सुगुल्फा ॥ उपसर्जनात्किम् । शोभना शिखेति सुशिखा । शोङो ह्रस्वश्चेति खप्रत्ययः । आवत इत्याप् ॥ किंच यद्यत्र स्वम् अङ्गं स्वाङ्गं गृह्येत तदा सुमुखा शालेत्यत्रापीप् स्यात् । मुखस्य शालाङ्गत्वात् । सुकेशी रथ्येत्यत्र चेप् न स्यात् । केशानां रथ्याङ्गत्वाभावात् । अतोऽव्याप्त्यतिव्याप्तिपरिहारार्थमाह । तत्स्वाङ्गं त्रिधा । तथा च । “अद्रवन्मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम् ॥ अतत्स्थं तत्र दृष्टं च तेन चेत्तत्तथा युतम्(क) ॥ १ ॥” तत्स्वाङ्गमुच्यते । कीदृशम् । अद्रवत् द्रवतीति द्रवत् न द्रवदद्रवत् ॥ सुष्ठु स्वेदो यस्याः सा सुस्वेदा । द्रवत्वादत्र स्वाङ्गं न ॥ पुनः कीदृशम् । मूर्तिमत् । स्पर्शवद्द्रव्यपरिमाणं मूर्तिः । मूर्तिरस्यास्तीति तन्मूर्तिमत् । सुष्ठु ज्ञानं यस्याः सा सुज्ञाना । अमूर्तत्वात् अत्र स्वाङ्गं न ॥ पुनः कीदृशम् । प्राणिस्थम् । मुखनासिकान्तः संचारो वायुः प्राणः । प्राणोऽस्यास्तीति प्राणी । प्राणिनि तिष्ठतीति तत्प्राणिस्थम् । सुष्ठु मुखं यस्याः सा सुमुखा शाला । अप्राणिस्थत्वादत्र स्वाङ्गं न ॥ पुनः कीदृशम् । अविकारजम् । वातपित्तकफानां विकृतिर्विकारः । विकाराज्जातं विकारजं न विकारजम् अविकारजम् । सुष्ठु शोफो यस्याः सा सुशोफा । “शोफस्तु श्वयथुः शोथः” इत्यमरः ॥ विकारजत्वादत्र स्वाङ्गं न ॥ यदि प्राणिस्थं स्वाङ्गं तर्हि रथ्यादिगतानां केशादीनां स्वाङ्गत्वं न स्यात् । सुकेशी रथ्या इति न सिद्ध्यत्यतो द्वितीयं लक्षणमाह । च पुनः अतत्स्थं तत्र दृष्टं स्वाङ्गमुच्यते । कदाचित्तत्र प्राणिनि दृष्टं तस्मिन् प्राणिनि तिष्ठतीति तत्स्थं न तत्स्थम् अतत्स्थम् अप्राणिस्थमित्यर्थः । अप्राणि-

---

( क ) अद्रवमित्यादिवाक्यं भाष्यकृतः । अथ व्याख्या—शरीरान्तरसञ्चारी वायुः प्राणः सोऽस्यास्तीति प्राणी तत्र तिष्ठतीति प्राणिस्थं तत्स्वाङ्गम् । एवं सति स्वेदस्यापि प्राणिस्थत्वात्स्वाङ्गता स्यात्तत्राह—**अद्रवमिति** । तस्य तु द्रवत्वान्न । एवमपि ज्ञानस्य प्राणिस्थत्वादद्रवत्वाच्च स्वाङ्गता स्यादत आह—**मूर्तिमदिति** । असर्वगतद्रव्यपरिमाणं काठिन्यादि स्पर्शविशेषो वा मूर्त्तिर्यस्यास्तीति तथा । ज्ञानस्यात्मगुणत्वेन परिमाणलक्षणस्य गुणस्पर्शलक्षणस्य वा तत्रानङ्गीकारादमूर्त्तिमत्त्वं ज्ञानस्येत्यर्थः । एवमपि शोफादेश्चोक्तलक्षणवत्त्वात्स्वाङ्गतास्यादत आह—**अविकारजमिति** । विकारो वातादिवैषम्यं ततो न जातम् । शोकादिस्तु विकारजः । रथ्यादिपतितकेशादेःस्वाङ्गतासङ्ग्रहार्थमाह—**अतत्स्थं तत्र दृष्टमिति** । तत्र प्राणिनि न दृष्टम् । अन्यदा तत्रावर्त्तमानमपि स्वाङ्गम् । एवमपि प्रतिपाद्यावयवानां मुखादीनां प्राणिस्थेनाविशेषादिना सम्बन्धः । तथा यद्यप्राणिनामपि सम्बधं स्यात्तदपि तथेत्यर्थः । प्राणिमुखादिसदृशमप्राणिमुखाद्यपि स्वाङ्गमिति भावः ।

उदाहरणं तु । क्रमेण सुमुखा शाला ॥ बहुस्वेदा । सुज्ञाना । सुशोफा । इत्यादि ॥

स्थस्यापि केशादेः पूर्वं प्राणिनि दृष्टत्वात् स्वाङ्गम् । एवमपि प्रतिमादिगतस्तनमुखादीनां स्वाङ्गत्वं न प्राप्नोति । प्राणिन्यदृष्टत्वात् । सुस्तनी प्रतिमेति न सिध्यत्यतस्तृतीयलक्षणमाह । तेन चेत्तत् तथा युतम् । अतत्स्थमित्यनुपज्यते । एतादृशं तदप्राणिस्थं मुखादिस्वाङ्गमुच्यते । कीदृशम् । चेयदि तेन प्राण्यङ्गेन मुखादिना सह तथा युतं प्राणिवद्युतं सहितं यथा प्राणियुतं तद्वदप्राणिनि युतं भवतीत्यर्थः । सुष्ठु स्तनौ यस्याः सा सुस्तनी प्रतिमा । प्राणिसदृशे प्रतिमादौ प्राणिनि इवेति प्राणिवत् स्तनादेः स्थितत्वात् स्वाङ्गमस्ति ॥५०॥

( त० ) स्वाङ्गाच्चेति ॥ स्वमङ्गं स्वाङ्गमित्युक्तौ सुमुखा शालेत्यत्रातिव्याप्तिः । मुखस्य शालावयवत्वात् । दीर्घकेशी रथ्येत्यत्राव्याप्तिश्च । केशानां रथ्याङ्गत्वाभावात् अतस्तत्परिहाराय स्वाङ्गलक्षणमुच्यते । ''अद्रवन् मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम् । अतत्स्थं तत्र दृष्टं च तेन चेत्तत्तथा युतम् ॥'' प्राणिस्थं स्वाङ्गं प्राणिनि तिष्ठतीति प्राणिस्थम् । एतेन श्लक्ष्णमुखा शालेत्यत्र न भवति । अप्राणिस्थत्वात् ॥ द्रवतीति द्रवत् । ततोऽन्यदद्रवत् । एवं च सुस्वेदाऽत्र न भवति द्रवत्वात् ॥ मूर्तिमदिति ॥ असर्वगतद्रव्यपरिमाणं मूर्तिः । असर्वगतानि यानि द्रव्याणि तेषां यत्परिमाणं ह्रस्वत्वादि सा मूर्तिः । स्पर्शनद्रव्यपरिमाणं मूर्तिरित्यन्ये । साऽस्यास्तीति तन्मूर्तिमत् । एवं च बहुज्ञानाऽत्र न भवति अमूर्तत्वात् । अविकारजमिति ॥ विकारो वातादिवैषम्यं ततो यज्जायते तन्न भवतीत्यविकारजम् । एवं सुशोफाऽत्र न भवती ॥ अतत्स्थमिति ॥ सांप्रतमप्राणिस्थमपि कदाचित्प्राणिनि दृष्टं चेत्तदपि स्वाङ्गं भवत्येवेत्यर्थः ॥ तथा च दीर्घकेशी रथ्येत्यत्र भवत्येव । इदानीम् अप्राणिस्थस्यापि पूर्वं प्राणिनि दृष्टत्वात् ॥ तेन चेदिति ॥ अतत्स्थमित्यनुपज्यते । अप्राणिस्थमपि मुखादि स्वाङ्गं तेन चेत् मुखादिना तत् अप्राणि द्रव्यं तथा युतं भवति । यथा प्राणि द्रव्यमित्यर्थः । एवं दीर्घमुखी प्रतिमेति भवति प्राणिवत्प्राणिसदृशेऽपि स्थितत्वात् ॥ ५० ॥

**( नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाद्वा )** तुङ्गनासिकी–तुङ्गनासिका । मन्दोदरी–मन्दोदरा । बिम्बोष्ठी–बिम्बोष्ठा ॥ एवं सुजङ्घी । सुदन्ती । सुकर्णी । सुशृङ्गी ॥ ५१ ॥

( सु० ) नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाद्वा ॥ एभ्यो ङीप् स्यात् ॥ नासिकोदरयोर्न क्रोडादिबहुस्वरादिति ओष्ठादीनां पञ्चानां तु असंयोगोपधादिति निषेधे प्राप्ते वचनम् ॥ तुङ्गा नासिका यस्याः सा तुङ्गनासिकी ॥ मन्दम् उदरं यस्याः सा मन्दोदरी ॥ बिम्बवत् ओष्ठौ यस्याः सा बिम्बोष्ठी ॥ सुष्ठु जङ्घे यस्या सा सुजङ्घी । पक्षे आप् सुजङ्घेति ५१

( त० ) नासिकेत्यादि ॥ वाग्रहणादेतत्सर्वम् । नासिकोदरयोर्बहुस्वरादप्राप्तिः । ओष्ठादीनां तु संयोगोपधत्वादप्राप्तिः ॥ ५१ ॥

**(अङ्गगात्रकण्ठपुच्छाच्च)** । स्वङ्गी । सुगात्री । सुकण्ठी । सुपुच्छी । पक्षे स्वङ्गेत्यादि ॥ ५२ ॥

( सु० ) अङ्गगात्रकण्ठपुच्छाच्च ॥ एभ्यो ङीप् स्यात् ॥ असंयोगोपधादिति निषेधे प्राप्ते वचनम् ॥ सुष्ठु अङ्गं यस्याः सा स्वङ्गी ॥ सुष्ठु गात्रं यस्याः सा सुगात्री ॥ सुष्ठु कण्ठो यस्याः सा सुकण्ठी ॥ सुष्ठु पुच्छं यस्याः सा सुपुच्छी ॥ पक्षे आप् ॥ ५२ ॥

(कबरमणिविषशरेभ्यः परात् पुच्छान्नित्यम्) कबरपुच्छी। मणिपुच्छी। विषपुच्छी। शरपुच्छी॥ ५३॥

(सु०) कबरमणिविषशरेभ्यः परात् पुच्छान्नित्यम्॥ ईप् स्यात्॥ कबरं चित्रं पुच्छं यस्याः सा कबरपुच्छी॥ मणिः पुच्छे यस्याः सा मणिपुच्छी॥ शरः पुच्छे यस्याः सा शरपुच्छी॥ विषं पुच्छे यस्याः सा विषपुच्छी॥ ६३॥

(उपमानात्पक्षपुच्छाभ्याम्) श्येनपक्षी। श्येनपुच्छी॥५४॥

(सु०) उपमानात्पक्षपुच्छाभ्याम्॥ उपमानात्पराभ्यां पक्षपुच्छाभ्यां नित्यमीप्॥ श्येनवत् पक्षौ यस्याः सा श्येनपक्षी॥ श्येन इव पुच्छं यस्याः सा श्येनपुच्छी।६४।

(न क्रोडादिबहुस्वरात्) कल्याणक्रोडा। सुजघना॥ ५५॥

(सु०) न क्रोडादिबहुस्वरात्॥ क्रोडादेर्बहुस्वराच्च स्वाङ्गान्नेप् स्यात्॥ अश्वानामुरः क्रोडा॥ सुष्ठु जघनं यस्याः सा सुजघना॥ ६५॥

(त०) कल्याणक्रोडेति॥ अश्वानामुरः क्रोडा। स्त्रीलिङ्गोऽयमिति हरदत्तादयः। तत्रान्यार्थत्वेन ह्रस्वत्वेऽदन्तत्वादीपः प्राप्तिः॥ अमरस्तु 'न ना क्रोडं भुजान्तरम्' इत्याह॥ रत्नमतिस्तु पुंस्त्वमाह। गणे च क्रोडेति प्रातिपदिकमात्रं पठ्यते न तु आबन्तमिति गणरत्नमहोदधिकारः। एवं चाविशेषाल्लिङ्गत्रयेऽपि उदाहरणं बोध्यम्॥ माधवस्तु तुदादिगणे 'क्रुड निमज्जने' इति धातोराह। क्रोडः घञ्। क्रोडा अश्वानामुरः। अयं स्वभावतो विशेषविषयः। क्रोडादिषु आबन्तस्यैव पाठात्। भुजान्तरमात्रवचनस्य क्रोडशब्दस्य बहुव्रीहौ स्वाङ्गलक्षण ईप्विकल्पो भवत्येव। कल्याणक्रोडी। कल्याणक्रोडादिराकृतिगणः।६५।

(सहनञ्विद्यमानपूर्वाच्च) सकेशा। अकेशा। विद्यमाननासिका५६

(सु०) सहनञ्विद्यमानपूर्वाच्च॥ सहेत्यादित्रिकपूर्वात्स्वाङ्गान्नेप् स्यात्॥ सह केशैः वर्तते या सकेशा। सहादेरिति सहस्य सः॥ अविद्यमानाः केशाः यस्याः सा अकेशा। ना इति नञोऽकारादेशः॥ विद्यमाना नासिका यस्याः सा विद्यमाननासिका। स्वाङ्गाद्वेत्यस्य नासिकोदरौष्ठेत्यस्य च बाधकोऽयं परत्वात्॥ ६६॥

(नखमुखात्संज्ञायाम्) शूर्पणखा। गौरमुखा॥ संज्ञायां किम्। ताम्रमुखी कन्या॥ ५७॥

(सु०) नखमुखात् संज्ञायाम्॥ आभ्यामीप् न स्यात् संज्ञार्थं॥ शूर्पणखा। *रावणस्य स्वसुर्नाम॥ यदा शूर्पवन्नखानि यस्याः सा इति योगमात्रं विवक्ष्यते न तु संज्ञा* तदा ईप् स्यादेव णत्वाभावश्च॥ गौरमुखेति कस्याश्चित् संज्ञा॥ असंज्ञायां। ताम्रं मुखं यस्याः सा ताम्रमुखी॥ ६८॥

वोर्गुणात्॥ उदन्ताद्गुणवाचिनो वा स्त्रियामीप् स्यात् (क)॥ पट्वी-

---

(क) वो। वा ओरिति च्छेदः। न स्वोरिति विच्छिद्यगुणादौ प्रत्ययो भवतीति। युक्तगुणस्य प्राक्निर्देशात्। सतो हि कार्यिणः कार्येण भाव्यमिति ओरित्यपि उवर्णस्य ग्रहणं न त्वोकारस्य प्रकृत्या गुणस्यादन्तत्वाभावात्तत्रापि तदन्तस्य ग्रहणं न केवलस्य उमात्रस्य गुणस्याभावात्। ओर्गुणाच्चेति स्वभिप्रेते ओर्गुणादित्येव निर्दिशेत्। गुणशब्दोऽपि गुणवचनपट्वादिपरः न तु स्वरूपपरः। स्वरूपस्याऽनुद-

पटुः । बह्वी-बहुः ॥ ५९ ॥

( सु० ) वोतो गुणवचनात् ॥ वा ओरिति छेदः । गुणशब्दोऽत्र गुणवत्परो न तु गुणमात्रवाचिपरो गुणमात्रवाचकानां स्त्रीलिङ्गाभावात् । "गुणे शुक्लादयः पुंसि" इत्युक्तत्वात् ॥ उदन्तादिति किम् । शुचिः ॥ गुणात्किम् । आखुः ॥ महाभाष्ये गुणलक्षणम् । "सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते । आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः(क) ॥ १ ॥" स गुण उच्यते । यः सत्त्वे द्रव्ये निविशते । द्रव्यमुपैतीत्यर्थः ॥ ननु द्रव्ये द्रव्यत्वं तत्रातिव्याप्तिरत आह । यः पृथक् द्रव्यादपैति अपगच्छति । द्रव्यं जहातीत्यर्थः ॥ यथा पीततायां जातायां नीलता फलादपैति नैवं द्रव्यत्वं द्रव्यादपैति । ननु गोषु गोत्वं तदश्वादेश्चापैति तत्रातिव्याप्तिरत आह । यः पृथग्जातिषु दृश्यते । द्रव्यान्तरेष्ववलोक्यते । यथाऽश्वे दृष्टा नीलता तृणादिष्वपि दृश्यते न तथा गोत्वं पृथग्जातिषु दृश्यते ॥ एवं तर्हि द्रव्ये क्रिया वर्तते सा द्रव्यादपैति पृथग्जातिषु दृश्यते चेति तत्रातिव्याप्तिरत आह । य आधेय उत्पाद्यः । स पुनः यः अक्रियाजोऽनुत्पाद्य इत्यर्थः । उत्पाद्यो यथा । घटादेः पाकजो रूपादिः । अनुत्पाद्यो यथा । आकाशादेर्महत्त्वादिः । क्रिया तु सर्वाऽप्युत्पाद्यैव ॥ ननूत्पाद्यायाः क्रियाया द्वैविध्याभावाद्गुणत्वाभावः । एवं तर्हि द्रव्यस्य गुणत्वं प्राप्नोति । तथा हि । अवयवि द्रव्यं ह्यवयवद्रव्येषु निविशते संयोगविनाशादवयवद्रव्यादपैति । पृथग्जातिषु हस्तपादादिषु दृश्यते । द्रव्यमुत्पाद्यानुत्पाद्यभेदेन द्विविधम् । तत्र निरवयवस्यात्मपरमाण्वादेरनुत्पाद्यत्वं नित्यत्वात् । अवयविद्रव्यस्य घटादेस्तूत्पाद्यत्वमस्त्यनित्यत्वादत आह । योऽसत्त्वप्रकृतिरद्रव्यस्वभावो द्रव्याद्भिन्न इत्यर्थः ॥ ६१ ॥

( त० ) वोतो गुणादिति ॥ वा ओः गुणादिति छेदः । औरिति तु न । औः प्रत्यय इति व्याख्याने न कार्यिणः प्रागनुद्देशात् । ततो हि कार्यिणः कार्येण भाव्यमिति । ओरित्यपि उवर्णान्तस्यैव ग्रहणम् न त्वोकारान्तस्य गुणस्य तदभावात् । केवलस्यापि

---

न्तस्यास्तत्रापि गुणवत्परो न गुणमात्रवाचिपरः । गुणैकार्थानां स्त्रियामप्रवृत्तेः । तथा चोक्तममरेण—
"गुणे शुक्लादयः पुंसि" । इति माधवः । गुणशब्देन मतुप उपादानादभेदोपचाराद्वा गुणवद्वाचको गृह्यते इति वासुदेवः ।

(क) सत्त्वे इति । सत्त्वं द्रव्यम् । वाक्यस्यान्ययोगव्यवच्छेदकत्वात्सत्त्वे निविशते इत्यनेन सत्त्वस्य द्रव्यमात्रवृत्तित्वं लक्ष्यते । अतश्च सत्ताव्यवच्छेदः । तस्या द्रव्यगुणकर्मसु वृत्तेः । एवं च द्रव्यत्वस्य द्रव्यमात्रवृत्तित्वात्तत्रातिव्याप्तिः स्यादत आह—अपैतीति । अपगच्छति । अर्थात् सत्त्वादेव यथा पीततायां जातायामाम्रादेर्नीलिमा । न चैवं द्रव्यत्वादिर्द्रव्यादेरपैति । यद्येवं गोत्वं सास्नादिमति वर्तमानमश्वादेरपैति । अत आह—पृथग्जातिषु दृश्यत इति । गोत्वं हि द्रव्यत्वावान्तरनानाजातिषु न दृश्यते । गुणस्य चाश्वादौ दृष्टस्य नीलादेस्तृणादिष्वपि दर्शनात् । एवं सकलजातिव्यवच्छेदे पूर्वोक्तविशेषणविशिष्टस्य कर्मण्यतिव्याप्तिवारणायाह—आधेयश्चाक्रियाजश्चेति । आधेय उत्पाद्यः पुष्पादियोगाद्वस्त्रादिष्विव गन्धनम् । अक्रियायां नित्यः आकाशादौ महत्त्वादिः । कर्म तूत्पाद्यमेव । नन्वेवं द्रव्येऽतिव्याप्तिः । तस्य स्वारम्भकावयवेषु निवेशात्तन्नाशादपगमादुत्पाद्यरूपत्वाच्चेत्यत आह—सोऽसत्त्वप्रकृतिर्गुण इति । गुणो न द्रव्यस्वभावः । द्रव्यं तु द्रव्यस्वभावमिति । ननु सत्तादीनां नित्यत्वानुत्पाद्योभयरूपत्वाभावादेवातिप्रसङ्गाभावात्पर्वोक्तविशेषणवैयर्थ्यमिति चेत्सत्यम् । नित्यगुणसंग्रहार्थमर्थ्याधिकरणोत्पाद्यगुणेनास्योभयरूपत्ववत् आकाशद्रव्यरूपजात्योर्मिलितयोरुत्पाद्यानुत्पाद्यरूपत्वादतिप्रसङ्गः स्यात्तद्वारणाय तदिति दिक् । 'कर्मणो व्यतिरिक्तो जातिमात्राश्रयो गुणः' इति तान्त्रिकाः इति वासुदेवः ।

उमात्रस्य गुणस्याभावात् । गुणशब्दोऽपि न स्वरूपपरः तस्यानुदन्तत्वात् । गुणमात्रवाचिपरोऽपि न तस्य स्त्रियामप्रवृत्तेः "गुणे शुक्लादयः पुंसि" इति वचनात् ॥ गुणलक्षणं तु "सत्वे निविशतेऽपैत्यन्यजातावस्थाप्यन्यत्र दृष्टो द्रव्यान्तरेष्वपि । वाचकः सर्वलिङ्गानां द्रव्यादन्यो गुणः स्मृतः" इति ॥

( खरुसंयोगोपधान्न ) खरुः । पाण्डुः ॥६० ॥

( सु० ) खरुसंयोगोपधान्न ॥ खरुशब्दात् संयोगोपधगुणवाचिनः शब्दाच्च नेप् स्यात् ॥ खरुः पतिंवरा कन्या । पाणिग्रहणोत्कण्ठावतीत्यर्थः ॥ ६० ॥

( त० ) खरुसंयोगेत्यादि ॥ वाशब्दादेतत् । खरुः पतिवरा कन्या । तत्र पाणिग्रहणोत्कण्ठाभिधायित्वाद् गुणवचनत्वम् (क) ॥ ६० ॥

( कृदिकारादक्त्यर्थात् ) आजी–आजिः । धूली–धूलिः । रात्री–रात्रिः । शकटी–शकटिः ॥ अक्त्यर्थात् किम् । भूतिः । अजननि ॥ ६१ ॥

( सु० ) कृदिकारादक्त्यर्थात् ॥ क्त्यादिभिन्नात्कृत्संबन्धिन इकारात् स्त्रियां नेप् स्यात् ॥ आजी संग्रामः ॥ धूली रजः ॥ अक्त्यर्थात् किम् । भूतिः । क्तिरिति स्त्रियां भावेऽर्थे क्तिः ॥ आक्रोशे नञ्यनिरिति जनेरनिप्रत्ययः । न जायते इत्यजननिः ॥ ६१ ॥

( पद्धत्यादिभ्यो वा ) पद्धती–पद्धतिः ॥ ६२ ॥

( सु० ) पद्धत्यादिभ्यो वा ॥ स्त्रियामेभ्यो नेप् स्यात् ॥ पद्भ्यां हन्यते इति पद्धतिर्मार्गः । क्तिप्रत्ययान्तत्वादप्राप्ते विध्यर्थम् । पद्धतिशब्दो गणे पठ्यते । पद्धतिपष्टिविकटविशालकल्याणपुराणचण्डकृपाणअहनित्यादयः ॥ ६२ ॥

ऐ च मन्वादेः ॥ मनुपूतक्रतुवृषाकप्यग्निकुसितकुसिदानामै आदेश इप् च स्त्रियां पुंयोगे ॥ पूतक्रतायी । कुसितायी । कुसिदायी । वृषाकपायी । अग्नायी ॥ ६३ ॥

( सु० ) ऐ च मन्वादेः ॥ मनुरादिर्यस्य स मन्वादिस्तस्मान्मन्वादेः । आदिशब्दः प्रकारे । स्त्रियां मन्वादेरीप् स्यात् पुंयोगे एषामन्तस्यैकारादेशश्च ॥ पूतः क्रतुर्यस्य येन वा पूतक्रतुः । पूतक्रतोः स्त्री पूतक्रतायी ॥ पुंयोगे किम् । पूतक्रतुः स्त्री । "यया तु क्रतवः पूताः स्यात्पूतक्रतुरेव सा" इत्यमरः ॥ अग्नेः स्त्री अग्नायी । "अथाग्नायी स्वाहा च हुतभुक्प्रिया" इत्यमरः ॥ वर्षति कामनिति वृषः । नाम्युपधात्क इति कः । आकम्पयति पापानित्याकपिः, अत्रान्तर्भावितणिप्रत्ययार्थोऽस्ति । 'इत्वखि' इति इप्रत्ययः । इदित इति न नुम् । आगमजमनित्यमित्युक्तत्वात् । वृषश्चासौ आकपिश्च वृषाकपिः वृषाकपेः स्त्री वृषाकपायी । "हरविष्णू वृषाकपी" इति । वृषाकपायी श्रीगर्यौ" इति चामरः ॥ ६३ ॥

( त० ) ऐ च मन्वादेरिति ॥ मनुरादिर्यस्य स मन्वादिः । आदिशब्दः प्रकारे । तेन वृषाकप्यग्निकुसितकुसिदा गृहीताः ॥ पूतक्रतायीति ॥ पूतः क्रतुर्येन स पूतक्रतुः तस्य स्त्रीत्यर्थः वृषाकपायीति ॥ वर्षति कामनिति वृषः । नाम्युपधात्कः । आकम्पयति पापानिति आकपिः । अन्तर्भावितण्यन्तः । इत्वखीति इः । यस्त्वागमजमनित्यमिति तन्न इप्रत्यये कित्वाभावादेव नुमोऽप्राप्तेरागमजत्वेनानित्यस्त्वाश्रयणस्य व्यर्थत्वात् । वृष-

( क ) वाशब्दादेतदिति । अयं भावः 'वोर्गुणादिति' वाशब्दव्यवस्थैव खरुसंयोगोपधान्नेति ।

आसावाकपिश्च वृषाकपिस्तस्य स्त्रीत्यर्थः ॥ "हरविष्णू वृषाकपी", "वृषाकपायी श्रीगौर्यौ ॥" इति अमरः ॥ पुंयोगे किम् । पूताः क्रतवो यया सा पूतक्रतुरेव ॥ ६३ ॥

**( मनोरैऔ वा )** मनावी–मनायी–मनुः ॥ ६४ ॥

( सु० ) मनोरैऔ वा ॥ मनुशब्दस्यौकारादेशः ऐकारादेशश्च वा ईपि ॥ मनोः स्त्री मनावी–मनायी–मनुः ईबभावः ॥ ६४ ॥

**पत्न्यादयः** ॥ पत्न्यादयो निपात्यन्ते(क) ॥ पत्नी । सपत्नी । एकपत्नी । वीरपत्नी । सखी । अशिश्वी । अनड्वाही–अनडुही ॥ ६५ ॥

( सु० ) पत्न्यादयः ॥ पत्नी आदिर्येषां ते पत्न्यादयः ॥ आदिशब्दः प्रकारे । पतिशब्दान्तस्य नान्तत्वं निपात्यते । नृण ईबितीप् । पत्नी ॥ समानः पतिर्यस्याः सा सपत्नी । सहादेरिति समानस्य समावः ॥ एकः पतिर्यस्याः सा एकपत्नी ॥ वीरः पतिर्यस्याः सा वीरपत्नी ॥ सखिशब्दशिशुशब्दाभ्यामीप् निपात्यते । सखी ॥ न विद्यते शिशुर्यस्याः सा अशिश्वी । "अशिश्वी तु शिशुं विना" इत्यमरः ॥ अनडुहः स्त्रियामीप् निपात्यते । अनडुहश्चेति वाऽऽम् । अनड्वाही–अनडुही ॥ प्रागादिशब्दादीक् निपात्यते गतौ । प्राची पूर्वा दिक् । नो कोप इति लोपः । पूजायां तु प्राञ्ची । पूजार्थाञ्चतेर्नेति नलोपाभावः । गतौ अचेर्दीर्घश्चेत्यकारलोपः ॥ पूर्वदीर्घं प्रतीची पश्चिमा दिक् । पूजायां प्रत्यञ्ची ॥ उदीची उत्तरा दिक् । तिरश्चादय इति उदीचादेशः ॥ अवाची दक्षिणा दिक् । "प्राच्यवाचीप्रतीच्यस्ताः पूर्वदक्षिणपश्चिमाः । उत्तरा दिगुदीची स्यात्" इत्यमरः ॥६५॥

( त० ) पत्न्यादय इति ॥ नत्वं निपात्यते । ईप् तु नान्तत्वादेव ॥ ६५ ॥

**( क्वचिद्वा )** दृढपत्नी–दृढपतिः । वृषलपत्नी–वृषलपतिः । एता–एनी । हरिता–हरिणी । रोहिता–रोहिणी । श्येता–श्येनी । असिता–असिक्नी । पलिता–पलिक्नी । इत्यादि ॥ ६६ ॥

( सु० ) क्वचिद्वा ॥ क्वचिद्वा निपातनं भवति ॥ दृढः पतिर्यस्याः सा दृढपत्नी दृढपतिः । वृषलः शूद्रः पतिर्यस्याः सा वृषलपत्नी–वृषलपतिः ॥ एतशब्दात् स्त्रियामीप् तकारस्य नकारादेशश्च वा निपात्यते । एता–एनी । कर्बुरेत्यर्थः ॥ "चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे" इत्यमरः हरिता–हरिणी । हरिद्वर्णेत्यर्थः ॥ रोहिता–रोहिणी । रक्तेत्यर्थः ॥ श्येता–श्येनी । श्वेतेत्यर्थः ॥ असितपलितशब्दयोरीप् तकारस्य क्नादेशश्च वा निपात्यते । असिता–असिक्नी । कृष्णेत्यर्थः ॥ पलिता–पलिक्नी । वृद्धेत्यर्थः ॥६६॥

( त० ) क्वचिद्वेति ॥ पुंयोगे इत्यतश्चकारानुवृत्तेरिति भावः ॥ ६६ ॥

**( इतो मनुष्यजातेरीप् )** दाक्षी । अवन्ती । कुन्ती ॥ ६७ ॥

( सु ) इतो मनुष्यजातेरीप् ॥ मनुष्यजातिवाचिन इकारान्तात् स्त्रियामीप् स्यात् ॥ दक्षस्यापत्यं दाक्षिः । अत इञितीञ् । अत्र गोत्रलक्षणा जातिः ॥ अवन्तेरपत्यं स्त्री । कुन्तेरपत्यं स्त्री । स्त्रियामवन्तिकुन्तीत्यपत्यप्रत्ययस्य लुक् । अत्रापि गोत्रलक्षणा जातिः ॥ ६७ ॥

---

( क ) पत्नीति यज्ञसंयोगे एवेति माधववासुदेवौ । तत्त्वप्रोन्नेयम् ।

**उत ऊः** ॥ उदन्तादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूः प्रत्ययः(क)॥ कुरूः ॥ अयोपधात्किम् । अध्वर्युः स्त्री ॥ ६८ ॥

( मु० ) उत ऊः ॥ कुरारपत्यं स्त्री कुरूः । स्त्रियामवन्तिकुन्तिकुरुभ्य इत्यपत्यप्रत्ययस्य लुक् । अत्रापि गोत्रलक्षणा जातिः ॥ अयोपधात्किम् । अध्वर्युर्ब्राह्मणी । शाखाध्येत्री शाखाध्यायिवंशोद्भवा वेत्यर्थः ॥ अत्र चरणलक्षणा जातिः ॥ अध्वरं यातीति विग्रहे मृग-य्वादयश्चेत्यौणादिकेन सूत्रेण याधातोः कुप्रत्यये अध्वरशब्दस्यान्त्यलोपश्च ॥ ६८ ॥

( त० ) उत ऊरिति ॥ अत्राहुः । ओरित्यनुवर्तमाने उत इति किमर्थम् । न च वाच्यमुदन्तान्मा भूदिति वधूरित्यादौ सत्यसति विशेषाभावादतस्तदनुवृत्तौ तत्सम्बद्ध-स्य गुणशब्दस्याप्यनुवृत्तिः स्यादिति पुनरुक्तमिति माधवस्तन्न, खलवं यवखमिति वि-शेषसत्त्वात् । अत्रेदमवधेयम् । मनुष्यजातिवाचिन उदन्तादूप्रत्ययस्य विधानेन खलप्वा-दिशब्दानां क्रियावाचकत्वेन जातिवाचित्वाभावादेवाप्राप्तौ विशेषस्यासम्भवात् । अथात्र मनुष्यजातिर्न विवक्षितेति न वाच्यम् । ऊङुत इति सूत्रविवरणे उदन्तान्मनुष्यजातिवा-चिन इति दीक्षितादिभिः सर्वैरेवोक्तत्वात् ॥ ६८ ॥

( **पङ्गोश्च** ) पङ्गूः ॥ ६९ ॥

( मु ) पङ्गोश्च ॥ पङ्गुशब्दो गुणवाची तस्मात् स्त्रियामूः स्यात् ॥ ६९ ॥

( **श्वशुरस्योकाराकारलोप ऊश्च** ) श्वश्रूः ॥ ७० ॥

( मु० ) श्वशुरस्योकाराकारलोप ऊश्च ॥ श्वशुरशब्दात् स्त्रियामूः स्यात् उका-राकारयोर्लोपश्च ॥ सन्निहितत्वादन्तस्यैवालोपो न त्वादेः । पुंयोगे चेतीपो निवारणार्थ-मिदम् ॥ ७० ॥

( त० ) श्वशुरस्येत्यादि ॥ एतन्मूलं तु दीर्घकरणमेवान्यथा उदन्तत्वात्सवर्णदीर्घे-णापि सिद्धेरूकरणं वृथा स्यात् । पुंयोगलक्षण ईपि प्राप्ते ऊः । तत्संयोगेन च विधीय-मानोऽलोपः सन्निहितत्वादन्तस्यैवाकारस्य न त्वादेः ॥ ७० ॥

**ऊरूत्तरपदादौपम्ये** ॥ उपमानवाचिपूर्वपदादूरूत्तरपदादूः ॥ कर-भोरूः ॥ ७१ ॥

( मु० ) ऊरूत्तरपदादौपम्ये ॥ उपमानवाचिपूर्वपदादूरूत्तरपदादूः ॥ उपमीयते-ऽनेन तदुपमानम् अधिकगुणविशिष्टमित्यर्थः ॥ करभवत् ऊरू यस्याः सा करभोरूः । "मणिबन्धादाकनिष्ठं करस्य करभो बहिः" इत्यमरः ॥ ७१ ॥

( त० ) उपमानवाचिपूर्वपदादिति ॥ "धात्रीकराभ्यां करभोपमोरुः" इत्यत्र तु न । करभशब्दस्योपमानवाचित्वेऽपि पूर्वपदत्वाभावात् ॥ ७१ ॥

( **संहितशफलक्षणवामसहितसहादेरनौपम्येऽपि** ) सं-हितोरूः । शफोरूः । लक्षणोरूः । वामोरूः । सहितोरूः । सहोरूः ॥ ७२ ॥

( मु० ) संहितशफलक्षणवामसहितसहादेरनौपम्येऽपि ॥ संहितादिपूर्वप-

---

(क) अत्राह वासुदेवः । इह पूर्वतो वानुवृत्त्यैव धेनुः रज्जुरित्यादौ न । यद्यपि ह्रस्वाकारविधानेऽ-पि दीर्घैकादेशाद्दीर्घश्रवणमुपपद्यते । तथापि दीर्घविधानसामर्थ्याद् ब्रह्मबन्धूः जीवबन्धूरित्यादौ समासा-न्तकप्रत्ययाभावार्थमित्यनुसन्धेयम् । इति ।

दारूरुत्तरपदान्नाम्नः स्त्रियामूः स्यात् ॥ उपमीयते अनयेत्युपमा तस्या भाव औपम्यं न औपम्यम् अनौपम्यं तस्मिन् । संहितौ मिलितौ ऊरू यस्याः सा संहितोरूः ॥ शफाविव ऊरू यस्याः सा शफोरूः । "शफं क्लीबे खुरः पुमान्" इत्यमरेण क्लीबत्वमुक्तं तथापि कोशान्तरे पुंस्त्वम् ॥ "शफः खुरे गवादीनां मूले विटपिनामपि" इति हेमचन्द्रः ॥ लक्षणमस्त्यस्मिन् स लक्षणः । अस्त्यर्थे अप्रत्ययः । लक्षणौ ऊरू यस्याः सा लक्षणोरूः ॥ वामौ सुन्दरौ ऊरू यस्याः सा वामोरूः ॥ हितेन सह सहितौ सहितौ ऊरू यस्याः सा सहितोरूः ॥ सहेते इति सहौ । सहौ ऊरू यस्याः सा सहोरूः ७२ ॥

( त० ) शफोरूरिति ॥ शफौ खुरौ ताविव । संश्लिष्टत्वादुपचारः । यद्यपि "शफं क्लीबे खुरः पुमान्" इत्यमरस्तथापि शफशब्दस्य पुंस्त्वमपि बहुसंमतम् । "शफः खुरे गवादीनां मूले विटपिनामपि" इति हेमचन्द्रकोशाच्च ॥ ७२ ॥

## ( नृनरयोर्वृद्धिश्च ) नारी ॥ ७३ ॥

( सु० ) नृनरयोर्वृद्धिश्च ॥ नृशब्दात् नृण ईरिति ईपि प्राप्ते नरशब्दात् जातिलक्षणे ईपि प्राप्ते वृद्ध्यर्थं वचनम् ॥ नुर्नरस्य वा स्त्री नारी ॥ ७३ ॥

( त० ) नृनरयोरिति ॥ नृशब्दात नृण ईरित्यनेन । नरशब्दात्तु जातिलक्षण एव ॥ ननु नरशब्देऽन्त्याकारस्य षष्ठीनिर्दिष्टत्वात् वृद्धिरस्त्विति न वाच्यम् । न चान्त्यवृद्धिविफला लोपं बाधित्वा प्रवृत्तेः । उच्यते । नरस्य अः नरः हलादित्वाट्टेर्लोपः । ना च नरश्च नृनरौ तयोरित्यर्थः । प्रश्लेषसामर्थ्यान्नान्त्याकारो गृह्यते ॥ ७३ ॥

## यूनस्तिः ॥ युवन्शब्दात् स्त्रियां तिः (क) । युवतिः ॥ ७४ ॥

## इति स्त्रिप्रत्ययाः ॥ १५ ॥

( सु० ) यूनस्तिः ॥ नृण ईरित्यस्यापवादः । नाम्नो न इति सूत्रे कश्चित् स्यादौ रसे इत्यनुवर्तयन्ति तन्मते युवन्शब्दात्तिप्रत्यये नलोपः कथं स्यात् । स्यादीनां रसस्य परत्वाभावात् । उच्यते । न इः इति छेदः कर्तव्यः । युवन्शब्दात्स्त्रियामिप्रत्ययो यूनोऽन्त्यस्य तादृशश्चेति । कथं तर्हि "युवतीकरनिर्मथितम्" इति प्रयोगः ॥ यौति मिश्रीकरोति पत्या सहेति यौतिः शत्रन्तात् ऋन्नित इति ईपि कृते बोध्यः । अत्रापि अनुपसर्जनादिति वक्तव्यम् । गौणे तु बहवो युवानो यस्यां बहुयुवा पूः । स्त्रीप्रत्ययान्तेभ्यः शब्देभ्यः प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषया स्याद्युत्पत्तिर्बोध्या॥७४॥

इति सुबोधिन्यां स्त्रीप्रत्ययाः ॥ १५ ॥

( त० ) यूनस्तिरिति ॥ वसां रस इत्यतो रस इत्यनुवृत्तेस्स्यादावपि रसे नलोपः । यद्वा तु इः इति छित्वा युवन्शब्दस्य तादृश इश्च प्रत्ययः स्त्रियामित्यर्थो वाच्यः । युवतीति यौतेः शत्रन्तादीपि बोध्यम् ॥ ७४ ॥

श्रीविद्यानगरस्थायिलोकेशकरशर्मणा । कृतायामिह टीकायां स्त्रीप्रत्ययविचारणम् ॥

इति तत्त्वदीपिकायां स्त्रीप्रत्ययाः ॥ १५ ॥

---

( क ) यूनस्तिरिति । युवन्शब्दात्तिप्रत्ययो भवति । ईपोऽपवादः । न लोपः । युवतिः । अथ कथं 'युवतीकरनिर्मथितम्' इति । उच्यते । यौति मिश्रीकरोति पत्या सहेति यौतिः शत्रन्तात् ऋन्नित इति ईपि कृते 'युवती' इति बोध्यः । इति चक्रधरास्यायां टिप्पण्यां स्त्रीप्रत्ययाः समाप्ताः ॥ १५ ॥

# अथ विभक्त्यर्थाः ॥ १६ ॥

**लिङ्गार्थे प्रथमा** ॥ नामार्थमात्रे लिङ्गमात्राधिक्ये च प्रथमा विभक्तिः ॥ नियतोपस्थितिको नामार्थः । उच्चैः । नीचैः । कृष्णः । श्रीः । ज्ञानम् । द्रोणः । खारी । आढकम् । एकः । द्वौ । बहवः । अलिङ्गा नियतलिङ्गाश्च नामार्थमात्रे इत्यस्योदाहरणम् । अनियतलिङ्गास्तु लिङ्गमात्राधिक्य इत्यस्य । तटः । तटी । तटम् ॥ १ ॥

( सु० ) अथ कारकप्रकरणम् (क) । स्वादयः प्रत्यया नाम्नो विहितास्तेषामर्थविशेषे व्यवस्थां दर्शयितुमारमते ॥ **लिङ्गार्थे प्रथमा** ॥ लिङ्गं च अर्थश्चानयोः समाहारो लिङ्गार्थम् । तस्मिन् लिङ्गार्थे । अर्थे प्रथमेत्युक्ते कस्यार्थे इत्याकाङ्क्षायां यस्मान्नाम्नः स्वादिर्विभक्तिर्विहिता तस्य नाम्नोऽर्थं एतीति नामार्थमात्रम् । "मात्रं कार्त्स्न्येऽवधारणे" इत्यमरः । तत्र प्रथमा विभक्तिर्भवति । स को नामार्थः । नियतोपस्थितिकः । नियतोपस्थितिर्यस्य स नियतोपस्थितिकः । तस्मिन् नाम्नि उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स नियतोपस्थितिको नामार्थ एव शक्य इत्युच्यते (ख) । अनियतलिङ्गग्रहणार्थं

---

( क ) **कारकमिति** । ननु किं नाम कारकत्वम् । अत्र केचित् । क्रियानिमित्तत्वं कारकत्वमिति । तन्न चैत्रस्य तण्डुलं पचतीत्यादौ तण्डुलसम्पादनद्वारा चैत्रस्य पाकनिमित्तत्वात्तत्र कारकत्वापत्तेर्दुर्वारत्वात् । सम्प्रदानादेरनुमतिप्रकाशनद्वारेव चैत्रस्य तण्डुलसम्पादनद्वारा पाकनिमित्तत्वसुगमात् ।

अथ 'विभक्त्यर्थद्वारा क्रियान्वयित्वं कारकत्व'मिति लक्षणम् । स्तोकं पचतीत्यादौ क्रियाविशेषणेऽति प्रसङ्गवारणाय विभक्त्यर्थद्वारेति । स्तोकमित्यत्र द्वितीया हि साधुत्वार्था । गुरुविप्रतपस्विदुर्गतानां प्रतिकुर्वीत भिषक् स्वभेषजैरित्यादौ नामाध्याहारः कर्तव्योऽतो नातिव्याप्तिः । सम्बन्धिनः क्रियानिमित्तत्वेऽपि क्रियान्वयित्वाभावान्नातिव्याप्तिः । वस्तुतस्तु सम्बन्धार्थकषष्ठीभिन्नविभक्त्यर्थकद्वारा क्रियान्वयित्वं कारकत्वमिति तेन मातुः स्मरति इत्यादौ न कर्मकारकत्वानुपपत्तिः । न वा चैत्रस्य पुत्रो गच्छतीत्यादौ कारकत्वापत्तिः ।

( ख ) अत्र अर्थशब्दो यदि वृत्तिविषयपरो जातिव्यक्तिलिङ्गं संख्या च नामार्थ इत्याश्रीयते, तदा लिङ्गस्यापि भासिरिति **रघुनाथादयः** । विस्तरस्तु लघुभाष्येऽवलोकनीयः । वृत्तिस्तु शक्तिलक्षणान्यतरसम्बन्धः । गौणी तु लक्षणान्तर्गता पृथगिति केचित् । शक्तिस्तु सा विजन्यधीविषयीभूतमभिधानामकं पदार्थान्तरमिति **मीमांसकाः** । लाघवात् संकेत एवाभिधानतत्पदार्थान्तरमिति **नैयायिकाः** । सङ्केतश्चास्मात्पदादयमर्थो बोद्धव्य इतीश्वरेच्छारूपः । ईश्वरीयज्ञानस्येच्छायाः कृतेर्वा शक्तिरूपत्वमिति विनिगमनाविरहादतिरिक्तैव शक्तिरिति **नव्याः** । बोधकत्वमेव शक्तिरिति बोधजनकत्वमत उक्तं **विवरणे**—बोधजननसामर्थ्यमेव शब्दस्यार्थेन सम्बन्ध इति । न चास्मात्पदादयमर्थो बोद्धव्य इत्याकारा शक्तिः । इदं पदमिममर्थं बोधयत्वित्याकारकेच्छाज्ञानं कृतिर्वा सा इत्यत्र विनिगमनाविरहेण सर्वेषां तत्त्वे गौरवात् अतिरिक्तेत्यपि न सम्यक्, अतिरिक्तपदार्थस्याश्रयभेदेन विषयभेदेन च भिन्नत्वेऽनन्तपदार्थकल्पनायां गौरवस्य स्पष्टत्वात् । न चैवं लक्षणादौ गङ्गापदस्य तीरबोधकत्वेन तत्रापि शक्तेरेव सत्त्वादिति वाच्यम् । इष्टापत्तेः । यथा नैयायिकैर्लाघवात्सर्वानुभवसिद्धापि व्यञ्जना लक्षणयैव निर्वाहेऽतिरिक्ता न स्वीक्रियते तथास्माभिरपि ततः शाब्दबुद्धित्वावच्छिन्नं प्रति बोधजनकज्ञानजन्योपस्थितत्वेनैव कारणतेत्येक एव कार्यकारणभाव इति लक्षणा न स्वीक्रियते इति दिक् । स्वशक्यसम्बन्धो लक्षणा । स्वं लाक्षणिकं पदं तस्य यच्छक्यं वाच्यं तत्सम्बन्धो लक्षणेत्यर्थः । सा द्विधा । गौणी तदन्या च । तद्भिन्नत्वे सति तद्गतभूयो धर्मवत्त्वं सादृश्यम् । तदात्मकशक्यसम्बन्धो गौणी । यथा—गौर्वाहीकः । अत्र गवाभेदस्याबा-

लिङ्गेति । लिङ्गे लिङ्गमात्राधिक्येऽपि प्रथमा । यद्यपि लिङ्गमात्र इत्येवाक्षरार्थस्तथापि नामार्थं विना लिङ्गादिप्रतीतेरसंभवादाधिक्ये इत्युक्तम् । प्रथमादयः सप्तम्यन्ताः प्राचां संज्ञास्ताभिरिहापि व्यवहारः । ननु सिंहो माणवक इत्यादौ प्रथमा न स्यात् । उच्यते शक्यार्थमादाय प्रथमाविभक्तेरुत्पत्तौ सत्यां पश्चात्पदान्तरसमभिहारो लक्ष्यार्थबोधकोऽस्तीति ॥ ननु वीरः पुरुष इत्यादौ प्रथमा न स्यात् । वीराभिन्नः पुरुष इत्यभेदसंसर्गस्याधिकस्य भानात् (क) । उच्यते । अत्र पदसंस्कारपक्षाभ्युपगमोऽस्ति । ततोऽन्तरङ्गत्वात् प्रथमप्रवृत्तपदसंस्कारेण प्रथमारूपे कृते पश्चाद्बहिरङ्गत्वात् अभेदसंसर्गो वाक्यार्थः कर्तव्य इति । नास्ति लिङ्गं येषां ते अलिङ्गाः । नियतं निश्चितं लिङ्गं येषां ते नियतलिङ्गा इति । उभयेषां नामार्थमात्रे उदाहरणं यथा । उच्चैरिह पदत्वाद्विसर्गसिद्धिः । किंचास्य प्रथमान्तत्वात् संग्राम उच्चैस्तव संग्राम उच्चस्ते इति विद्यमानपूर्वादिति सूत्रेण ते मे आदेशयोर्विकल्पसिद्धिरपि फलम् । कृष्णः । अयं नीलद्रव्येऽनियतलिङ्गस्तथापि वासुदेवे नियतलिङ्गः । ज्ञायते तत् ज्ञानम् । भावे युट् । खारी द्रोण आढकमित्यत्रापि नामार्थे एव प्रथमा । परिमाणार्थस्य नियतज्ञानात् । द्रोणो व्रीहिरित्यत्र तु द्रोणपरिच्छिन्नाभिन्नो व्रीहिरित्यभेदान्वयः । नामार्थयोरभेदान्वयस्य व्युत्पन्नत्वात् ॥ ननु एक द्वौ बहव इत्यत्र नाम्नैव संख्याया अभिधानात् प्रथमा न स्यात् । उच्यते । न केवला प्रकृतिः प्रयोक्तव्या नापि केवलः प्रत्यय इति नियमात् प्रथमोत्पत्तिर्बोध्या । अनियतं लिङ्गं येषां ते अनियतलिङ्गास्तेषामनियतलिङ्गमेवेति लिङ्गमात्रम् । अधिकस्य भाव आधिक्यं लिङ्गमात्रस्य आधिक्यं लिङ्गमात्राधिक्यं तस्मिन् । उदाहरणं बोध्यम् । किंच भाष्यकारमते पञ्चकः प्रातिपदिकार्थः । स्वार्थद्रव्यलिङ्गसंख्याकारकाणि इति । यथा दधि मध्वित्यादौ विनापि विभक्तिं प्रातिपदिकादेव तावतामर्थानां प्रतीतेः । कैयटमते आदितश्चतुष्कं प्रातिपदिकार्थः । वृत्तिकारमते आदितस्त्रिकं प्रातिपदिकार्थः । संख्याकर्मादयस्तु विभक्त्यर्था इति । आदितो द्विकं प्रातिपदिकार्थ इत्यन्ये(ख) । लिङ्गमात्रादि वाच्यमित्युक्तत्वात् । तत्र स्वार्थो विशे-

---

धात् गोपदेन गोसदृशो लक्ष्यते । गोसादृश्यं च गोगतजाड्यमान्द्यादिकमेव । तथा च जडो मन्दश्च वाहीक इति शाब्दबोधः । अन्या त्रिधा—जहत्स्वार्थाऽजहत्स्वार्था जहदजहत्स्वार्था च । यत्र शक्यार्थस्य केनापि रूपेण लक्ष्यार्थानन्वयस्तत्राद्या । यथा गङ्गायां घोषः । यत्र शक्यार्थस्यापि तदन्वयस्तत्रापरा । यथा छत्रिणो यान्ति । काकेभ्यो दधि रक्षताम् । यत्र शक्यार्थैकदेशबाधेनैकदेशान्वयस्तत्र तृतीया । यथा सोऽयं देवदत्तः तत्त्वमसीत्यादौ । व्यञ्जना । लक्षणान्तर्भूता न व्यङ्ग्यार्थबोधिका व्यञ्जना । यथाऽर्कोऽयमस्तं गतः । आलङ्कारिकास्तु व्यञ्जनाख्यं वृत्त्यन्तरमैच्छन् इति साहित्यदर्पणादौ विस्तरो ज्ञेयः ।

( क ) **अधिकस्य भानादिति** । संसर्गमर्यादयेति शेषः । तदुक्तं गदाधरेण **व्युत्पत्तिवादे**—"एकपदार्थेऽपरपदार्थस्य संसर्गः संसर्गमर्यादया भासते । स च क्वचिदभेदः क्वचिच्च तदतिरिक्त एवाधाराधेयप्रतियोग्यनुयोगिविषयविषयिभावादिः" इति । अभेदश्च तत्तद्धर्मिकत्वावच्छिन्नभेदाभावः । वीरः पुरुष इत्यादौ वीरत्वादिप्रकारेण भासमानानां तत्तद्व्यक्तीनां स्वस्मिन् सम्बन्धतया भासते ।

( ख ) तदुक्तम्—"स्वार्थो द्रव्यञ्च लिङ्गञ्च संख्या कारकमेव च
अमी पञ्चैव लिङ्गार्थास्त्रयः केषांचिदग्रिमाः ।" इति ।

अत्र स्वार्थो विशेषणम् । द्रव्यम् उक्तार्थश्च विशेष्यम् , लिङ्गं पुंस्त्वादि, संख्या एकत्वादिः, कारकं कर्मादि । तथाहि गौर्नित्या इत्यत्र स्वरूपविशेषणत्वात्स्वार्थः । शब्दो ह्यर्थं प्रतिपादयन् दीपवत्स्वरूपमपि प्रतिपादयति । जातिः आश्रयत्वात् द्रव्यम् । एवं पटीयः शुक्लः नीलो घटः पाचको मैत्रः दण्डी चैत्रः इत्या-

षणं द्रव्यं विशेष्यं द्रव्यगुणक्रियासन्निधाने द्रव्यवाचकस्यैव प्राधान्यमित्युक्तत्वात्। लिङ्गं स्त्रीत्वादि। संख्या एकत्वादि। कारकं कर्मादि ॥ १ ॥

( त० ) लिङ्गार्थे प्रथमेति ॥ लिङ्गं च अर्थश्च लिङ्गार्थं तस्मिन् लिङ्गार्थे। लिङ्गे अर्थे च प्रथमेत्यर्थः। कस्यार्थे इत्याकाङ्क्षायां यस्मात्स्वादिर्विभक्तिस्तस्यार्थे। स्वादयश्च नाम्नो विधीयन्ते अतो नामार्थे इति लब्धमेव ॥ नामार्थमाह ॥ नियमोपस्थितिक इति ॥ नियता उपस्थितिर्यस्य सः। यस्मान्नाम्नो योऽर्थो नियमेन भासते स तस्यार्थः। नियतत्वलाभश्चामन्त्रण इति सूत्रारम्भात्। नामार्थ एव द्विविधः तं दर्शयति—अलिङ्गा इत्यादि ॥ नालिङ्गा संख्या इत्यर्थः। प्रथमे उदाहरणमव्ययम्। द्वितीय उदाहरणं कृष्ण इत्यादि। यद्यपि नीलरूपवत्परोऽयमनियतलिङ्गस्तथापि वासुदेवे भगवति नियतलिङ्ग एवेति भावात्। कृष्णादौ लिङ्गमेव नामार्थस्तस्य नियमेन भानात्। तटादौ तु लिङ्गं नामार्थव्यतिरेकेणास्तीति लिङ्गमात्राधिक्ये नामार्थे प्रथमाविधानात्। कारकसंबन्धयोस्तु नाम्नो नियतभानाभावान्न तयोराधिक्ये प्रथमा। यदि त्वर्थशब्दो वृत्तिपरः वृत्तिस्तु शक्तिर्लक्षणा च गौणी तु लक्षणान्तर्भूता पृथग्वाऽस्तु त्रिकं च नामार्थ इत्याश्रीयते। तदा लिङ्गे इत्यपि माऽस्तु लक्ष्याणां विचित्रत्वेऽपि न क्षतिः नियमांशत्यागात्। शक्यं लक्ष्यं गौणं च पुलिङ्गं स्त्रीलिङ्गं नपुंसकलिङ्गं च लक्ष्यमिति वैचित्र्यम्। शक्य एवेति नियमस्य पुंस्त्वादिना लिङ्गस्य वाच्यतेति नियमस्य च त्यागात्। लिङ्गत्वेनैव लिङ्गस्य वाच्यताभ्युपगमात्। खारीत्यादिपरिमाणमपि नामार्थ एव नियमेन लाभात्। एक इत्यादिसंख्यायास्तु नाम्नैवाभिधानात्तदभिधायिका प्रथमा न इति चेत्सत्यं न केवला प्रकृतिः प्रयोक्तव्येति नियमात्। अन्यप्रयोगेऽप्येषोऽन्वयः स्यादिति अनुवादकप्रयोगस्यैव न्याय्यत्वात् ॥ ननु कृष्ण इत्यादावस्तीत्यध्याहारेणान्योक्ते प्रथमेत्यनेनैव सिद्धे किमेतेनेति चेत्सत्यम्। अध्याहारे गौरवात्। शुक्लोऽयं न पीत इत्यादौ सविशेषणवाक्येऽध्याहारस्यानावश्यकत्वाच्च ॥ ननु तस्मात्सिऔजसिति सूत्रेणैव विभक्तिविधानात्किं कारकप्रकरणेनेति चेत्सत्यम्। सिद्धे सत्यारम्भो नियमार्थः। स च द्विविधः। विभक्तिनियमोऽर्थनियमश्च। आद्ये नामार्थ एव प्रथमा। कार्य एव द्वितीया। करण एव तृतीयेत्यादि। अत्र पक्षेऽव्ययेभ्यो न प्राप्तिः। द्वितीये तु नामार्थे प्रथमैव। कार्ये द्वितीयैवेत्यादि। अत्र पक्षेऽव्ययेभ्योऽपि भवन्ति ॥१॥

**आमन्त्रणे च ॥ अभिमुखीकरणे प्रथमा॥ हे देव, हे देवौ, हे देवाः ॥२॥**

( सु० ) आमन्त्रणे च ॥ संबोधनाधिक्येऽप्राप्तौ वचनम्। आमन्त्र्यते प्रसन्नः क्रियते अनेनेति करणे युट्। अनभिमुखोऽभिमुखः क्रियते अनेनेत्यभिमुखीकरणमनुकूलकरणम्। तत्र प्रथमा भवति। 'देव मां पाहि' इति वाक्ये देवसंबन्धिसंबोधनविषयिका मत्कर्मकरक्षणक्रियेति बोधः। "सम्बोधनपदं यच्च तत्क्रियाया विशेषणम्" इत्युक्तत्वादिह संबोधनं प्रकृत्यर्थं प्रति विशेष्यं क्रियां प्रति विशेषणमिति ॥ २ ॥

( त० ) आमन्त्रणे इति ॥ आमन्त्रणमभिमुखीकरणमनुकूलकरणमिति यावत्।

---

दौ जातिगुणक्रियासम्बन्धाः स्वार्थाः विशेषणत्वात्, गुणघटमैत्रचैत्रादयो द्रव्याणि विशेष्यत्वात्। गोः सुन्दर इत्यादौ तु शक्याश्रयतया व्यक्तिरेव द्रव्यम्, जातिस्तु स्वार्थ इति। यद्यपि प्रयोजननिर्वाहकारितया व्यक्तयो जातेर्भिन्ना एव, तथापि ता एव व्यक्त्यास्तिरोहितभेदा जातिरुच्यते। तदुक्तम्—"अर्थक्रियाकारित्वा भिन्ना व्यक्तय एव च, ता एव व्यक्तयस्त्यक्तभेदा जातिरुदाहृता" इति। धर्मधर्मिणोरभेदवादिमते नेदम्।

आमन्त्र्यते प्रयत्नः क्रियतेऽनेनेति साधने युट् । इह सम्बोधनं प्रकृत्यर्थं प्रति विशेष्यं क्रियां प्रति विशेषणमिति सिद्धान्तः(क) । "सम्बोधनपदं यच्च तत् क्रियाया विशेषणम्" इत्युक्तत्वात् । एवं देव मां पाहीति वाक्यस्य देवसम्बन्धिसम्बोधनविषयकमत्कर्मकं रक्षणमर्थः(ख) ॥ २ ॥

**( भोस्भगोस्अघोस् भवद्भगवदघवतां वा निपात्या धौ ) भो हर । भगो नमस्ते अघो याहि ॥ ३ ॥**

**( म० ) भोस्भगोस्अघोस् भवद्भगवदघवतां वा निपात्या धौ** ॥ धिविषये एषां स्थाने एते निपात्यन्ते वा । हे भोः । हे भवन् । हे पूज्येत्यर्थः ॥ हे भगोः । हे भगवन् । हे ज्ञानिन्नित्यर्थः ॥ हे अघोः । हे अघवन् । हे पापिष्ठेत्यर्थः ॥ भोस् इत्यनेन विसर्गलोपः । भो हर ॥ इति प्रथमा(ग) ॥ ३ ॥

**( त० ) भोस्भगोस् इति** ॥ योग्यताबलाद्भवदादयः स्थानिनः आक्षिप्यन्ते ॥ इति प्रथमा ॥ ३ ॥

---

( क ) **इह सम्बोधनमिति** । "सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः, प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते । सम्बोधनं न वाक्यार्थ इति वृद्धस्य आगमः ।" इति हर्युक्तेः क्रियासु विनियोगफलकोऽभिमुखीभावः सम्बोधनम्' इति सूचितम् ।

अत्र सिद्धस्येत्यनेन तस्यानुवाद्यत्वम् । विनियुज्यत इत्यनेन प्रवर्त्तनाविषयक्रियासम्बन्धस्तस्येति बोधितम् । एवं च सम्बोधनविभक्तेरनुवाद्यविषयतयाऽनुवाद्यस्य च विधेय एवान्वयेन विधेयतायाश्च क्रियानिष्ठत्वेन तस्याभेनान्वय इति युक्तम् । सम्बोध्यतावच्छेदकरूपेण सम्बोध्यस्य सिद्धिं विनाऽनुपाद्यत्वासम्भवेन राजा भव युध्यस्व इन्द्रशत्रुर्वर्धस्वेत्यादौ न सम्बोधनविभक्तिः । अत एव राजन् युध्यस्वेत्यस्य कुमारावस्थायां राजा भव युध्यस्वेत्यस्य राजावस्थायां न प्रयोगः । व्रजासि देवदत्तेत्यादावपि जानीहीत्यध्याहारो वाक्यैकदेशन्यायेन वा । तत्र व्रजनस्य कर्मत्वाद् देवदत्तस्योद्देश्यत्वाद् उभयोःसमानवाक्यस्थत्वम् । उद्देश्यविधेयभावो वाक्यार्थः । अभिमुखीभवनानुकूलस्य सम्बोधनविभक्त्यन्तशब्दप्रयोगरूपस्य व्यापारस्येतरनैरपेक्ष्येणैव प्रतीतेरत्र वाक्यार्थ इति तदर्थ इति बोध्यम् ।

तत्र वाक्यैकदेशन्यायेन, अध्याहारेण वा व्रजासि देवदत्तेत्यनेनैव जानीहीत्येतद्घटितवाक्यार्थबोध इति 'एकतिङ् वाक्यम्' इति वाक्यलक्षणमपि श्रूयमाणैकतिङन्तपदवत्त्वमित्यर्थकं तत्रास्त्येवेति निघातसिद्धिः । एतन्मूलक एव सम्बोधनस्य कर्त्तृकारकत्वव्यवहारो वृद्धानाम् । तस्यैव त्वंपदार्थत्वेन विनियोज्यक्रियाकर्त्तृत्वात् ।

( ख ) **एवमिति** । 'अभिमुखीभवद्देवोद्देश्यकप्रवर्त्तनाविषयो मत्कर्मकं रक्षणम्' इति 'अभिमुखीभवद्देवदत्तोद्देश्यकप्रवर्त्तनाविषया मत्कर्तृकगमनकर्मकं ज्ञानमित्यर्थः ।

( ग ) कुत्रचित् सारस्वतादौ प्रथमाविभक्तिविचारप्रकरणे प्रथमाया अर्थविशेषे वचनविशेषमाह—**'जातावेकस्मिन् बहुत्वं वा** । गौरयं गाव इमे । सम्पन्नो यवः सम्पन्ना यवाः । **स्वरूपाणां बहुषु द्वयोश्चैकत्वम्** । दीर्घाः यवाः । दीर्घौ यवौ दीर्घो यवः । **युष्मदो गौरवे त्वेकत्वे द्वित्वे च बहुवचनम्** । त्वं मे गुरुः । युवां मे गुरू । यूयं मे गुरवः । **द्विवर्जं त्यदादिमात्राच्च** । द्विवर्जं त्यदादिमात्रादेकत्वे द्वित्वे च बहुवचनं वा भवति ते कुत्र तव गुरवस्तत्र ते विराजन्ते । **पूज्यवाचिभ्यस्त्वादराधिक्ये** । पितरः समादिशन्ति । तत्र भवन्तः कुर्वन्ति **अस्मदोऽविशेषणस्य च** । अविशेषणस्यास्मच्छब्दस्य प्रयोगे एकत्वे द्वित्वे बहुवचनं वा भवति । अहं पठामि । आवां पठावः । वयं पठामः । सविशेषणस्य तु पण्डितोऽहं पठामि । **क्वचिदूव्यभिचरति च—**

'सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः, सा पीनोन्नमितपयोधरयुगं धत्ते सखेदा वयम् । साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं, दोषैरन्यजनाश्रयैरपटवो जाता स्म इत्यद्भुतम्'' ।

**शेषाः कार्ये कर्तृसाधनयोर्दानपात्रे विश्लेषावधौ सम्बन्ध आधारभावयोः ॥** द्वितीयाद्या विभक्तय एष्वर्थेषु भवन्ति ॥

कार्ये कर्मकारके द्वितीया (क) ।

कटं करोति कारुको रूपं पश्यति चाक्षुषः ।
राज्यं प्राप्नोति धर्मिष्ठः सोमं सुनोति सोमपाः ॥ ४ ॥

( ४० ) **शेषाः कार्ये कर्तृसाधनयोर्दानपात्रे विश्लेषावधौ सम्बन्ध आधारभावयोः ॥** शिष्यन्ते इति शेषाः । कर्मणि घञ् प्रत्ययः । प्रथमायाः शेषाः अन्याः

---

( क ) **कार्य्ये कर्मकारके इति** । मूल **शेषाः कार्य्ये इत्यादि** । एतेन कर्मणो यौगिकलक्षणमुक्तं भवति । किं तत् । उच्यते । यत् क्रियते कर्त्रा स्वक्रियया निष्पाद्यते तत् कार्य्यं=कर्मेति । करोतेर्निखिलक्रियावाचकत्वात् कर्तृव्यापारैर्यत् साध्यते तत् कर्मेत्यर्थः । अतएव क्रियाव्याप्यं कर्मेति **क्रमदीश्वरः** । 'कर्तुरीप्सिततमं कर्मेति' **पाणिनिः** । कर्तुः किं माषेष्वश्वं बध्नाति । कर्मण ईप्सिता माषा न कर्तुः । तमब्ग्रहणं किम् । पयसा ओदनं भुङ्क्ते । इत्यादि परिष्कृतं **भट्टोजिना** । तथा चानीप्सितम् । ओदनं भुञ्जानो विषं भुङ्क्ते इति च । **अपरे तु**—कर्तृभिन्नत्वे सति क्रियाजन्यफलशालित्वं कर्मत्वमिति । परसमवेतक्रियाजन्यफलशालित्वं कर्मत्वमिति **जयकृष्णः** । 'वाराणसीं व्रजति' इत्यादौ संयोगरूपफलशालित्वेऽपि कर्तरि नातिव्याप्तिः । वस्तुतस्तु कर्मशब्दस्य यौगिकत्वादेव फलनिरूपिताश्रये सर्वत्र द्वितीयासिद्धत्वात् कर्मसंज्ञाविधायकानि सूत्रान्तराणि न कृतानीति । तच्च कर्म द्विविधम् । ईप्सितानीप्सितकर्मभेदात् । तत्र प्रथमं त्रिविधम् 'निर्वर्त्य-विकार्य-प्राप्यं चेति । यदसदुत्पद्यते सदेवाभिव्यज्यते तन्निर्वर्त्यम् । वैशेषिकादिमते घटो सन्नेवोत्पाद्यते । सांख्यादिसत्कार्यवादिमते तु पटः सन्नेवाभिव्यज्यते । उदाहरणं—कटं करोतीति मूले । प्रकृतधातूपात्तोत्पत्त्याख्यफलशालित्वं निर्वर्त्यमिति सामान्यलक्षणम् । यत्र तु साध्यत्वेन विषयत्वरूपकर्मत्वं तन्निर्वर्त्यमिति सारमञ्जर्यां जयकृष्णः । यल्लब्धसत्ताकमेवावस्थान्तरमापद्यते तद्विकार्यम् । यत्र तु प्रकृत्युच्छेदजनितरूपान्तरवत्त्वं तद्विकार्य्यमिति जयकृष्णः । तदपि द्विविधम् । किञ्चित्प्रकृत्युच्छेदसंभूतं । किञ्चिद्गुणान्तरोत्पत्त्या च । तत्राद्यं यथा—काष्ठं भस्म करोतीत्यादि । प्रकृतेः प्रकृतिभूतस्यात्मन उच्छेदसम्भूतत्वाद्विकार्य्यत्वम् । द्वितीयं यथा सुवर्णं कुण्डलं करोतीत्यादि । नन्वत्र काष्ठादौ कथं धातूपात्तफलाश्रयमिति चेदुच्यते, प्रकृतिविकारयोरभेदविवक्षया निरूढयानुत्पत्त्याश्रयत्वमित्यन्यत्र विस्तरः । परे तु संस्कार्यमपि पृथक्कर्मेति वदन्ति । व्रीहीन् प्रोक्षति पुत्रमुपनयतीत्यत्र प्रत्यक्षानुमानाभ्यां क्रियाकृतः कश्चिद्विशेषो न दृश्यते तत्प्राप्यम् । यथा आदित्यं पश्यतीति । न ह्यत्रादित्ये दर्शनक्रियया कश्चिद्विशेषः क्रियते । यद्यपि विषयतारूपः क्रियाकृतो विशेषो भवत्येव, अन्यथा कर्मत्वानुपपत्तेस्तथापि प्रतिपत्तृव्यतिरिक्तपुरुषापेक्षया विशेषो न गम्यते इति बोध्यम् । यत्र कर्मणो धात्वर्थजन्यफलवत्त्वं तत्प्राप्यमिति जयकृष्णः । द्वितीयं चतुर्विधम् । औदासीन्यप्राप्यद्वेष्यसंज्ञान्तरानाख्यतान्यपूर्वकभेदात् । औदासीन्यप्राप्यं यथा—तृणं स्पृशतीति । द्वेष्यं यथा—विषं भुङ्क्ते । संज्ञान्तरैरनाख्यानं यथा—गां दोग्धि पय इति । अन्यपूर्वकं यथा क्रूरमभिक्रुध्यति । अक्षान् दीव्यति ।

तदुक्तं हरिणा—निर्वर्त्यं च विकार्य्यं च प्राप्यं चेति त्रिधा मतम् । तत्रेप्सिततमं कर्म चतुर्द्धान्यत्तु कल्पितम्

तथा सञ्जायते पूर्वं जन्मनो यत्प्रकाशते । तन्निर्वर्त्यं विकार्य्यं च कर्म द्वेधा व्यवस्थितम् ॥
प्रकृत्युच्छेदसम्भूतं किञ्चित्काष्ठादि भस्मवत् । किञ्चिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ।
क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते । दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते
औदासीन्येन यत्प्राप्यं यच्च कर्तुरनीप्सितम् । संज्ञान्तरैरनाख्यानं यद्यच्चाप्यन्यपूर्वकम्' इति ।

प्रकृत्यनुच्छेदतदुच्छेदाभ्यां संस्कार्यविकार्ययोर्भेदो न वास्तव इति वासुदेवः । सारमञ्जर्यादौ तु त्रिविधमेवोदाहृतम् । अनेकवैमत्यात्संस्कार्य्यस्य न वास्तवो भेद इति गुरवः ।

षड् विभक्तयस्ताः कार्यादिषु षट्सु यथाक्रमं प्रवर्तन्ते इत्यर्थः ॥ कार्ये द्वितीया ॥ क्रियते कर्त्रा स्वक्रियया निष्पाद्यते यत्तत् कार्यम् । धातूपात्तफलमित्यर्थः । तस्मिन् अनुक्ते कार्ये कर्मणि द्वितीया स्यात् । उक्ते कर्मणि तु प्रथमैव । उक्तं त्वाख्यातकृत्तद्धितसमासनिपातैर्भवति ॥ आख्यातोक्ते हरिः सेव्यते ॥ कृदुक्ते लक्ष्म्या सेवितो हरिः ॥ तद्धितोक्ते शतेन क्रीतः शत्यः ॥ कारकात्क्रियायुक्ते इति शेषः ॥ समासोक्ते प्राप्त आनन्दो यं स प्राप्तानन्दः॥ निपातोक्ते 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतमिति ॥ "कटं करोति कारुको रूपं पश्यति चाक्षुषः । राज्यं प्राप्नोति धर्मिष्ठः सोमं सुनोति सोमपाः ॥ १ ॥" अत्र सर्वत्राख्यातादिनाऽनुक्ते कर्मणि द्वितीया । कारुकः पुमान् कटं करोति । कटनिष्ठोत्पत्त्यनुकूलाएककर्तृका वर्तमाना करोतिक्रियेति शाब्दबोधः(क) ॥ चक्षुषा पश्यतीति चाक्षुषः पुमान् । कारकादित्यण् । रूपं पश्यति । रूपनिष्ठसाक्षात्कारोत्पत्त्यनुकूला एककर्तृका वर्तमाना दृशिक्रिया ॥ धर्मोऽस्त्यस्येति धर्मी । अस्त्यर्थे इन् । अतिशयेन धर्मीति इष्ठप्रत्ययः । धर्मिष्ठः पुमान् । राज्ञः कर्मेति राज्यं प्राप्नोति । राज्यनिष्ठोत्पत्त्यनुकूला एककर्तृका वर्तमाना प्राप्नोतिक्रिया ॥ सोमं पिबतीति सोमपाः पुरुषः । सोमममृतवल्लीं सुनोति खण्डयतीत्यर्थः । सोमनिष्ठखण्डनोत्पत्त्यनुकूला एककर्तृका वर्तमाना सुनोतिक्रियेति । क्रियाप्रधानमाख्यातमिति सिद्धान्तात् क्रियाविशेष्यकः शाब्दबोधः कर्तव्यः(ख) ॥ यास्कोऽप्याह ।

---

( क ) ननु कोऽयं शाब्दबोधः । तत्राह—एकपदार्थेऽपरपदार्थान्वयावगाहि ज्ञानं शाब्दबोधः । समवायेनात्मनिष्ठो गुणविशेषः । केचिदिमं प्रत्यक्षानुमित्याद्यतिरिक्तं न मन्यन्ते । तद्धि नैयायिकादयो न सहन्ते । तथा च शब्दशक्तिप्रकाशिकायां जगदीशः—

'साकाङ्क्षशब्दैर्यो बोधस्तदर्थान्वयगोचरः । सोऽयं नियन्त्रितार्थत्वान्न प्रत्यक्षं न चानुमा ।'

इत्यादिकारिकाव्याख्यानावसरे शाब्दबोधस्य प्रत्यक्षानुमितित्वरूपखण्डनपुरःसरमतिरिक्तत्वं प्रदर्शितमिति तत्रोन्नेयम् । शाब्दबोधप्रकारमाह भाषापरिच्छेदे विश्वनाथः—

यथा—पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः । शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी' ॥

ननु तादृशशाब्दबोधे किं कारणमित्यपेक्षायामाह विश्वनाथो भाषापरिच्छेदे—

यथा—"आसत्तियोग्यताकाङ्क्षातात्पर्यज्ञानमिष्यते, करणम्' इति ।

आसत्तिर्यत्पदार्थेन यत्पदार्थस्यान्वयोऽपेक्षितस्तयोरव्यवधानम् । तेन गिरिर्भुक्तमग्निमान् देवदत्तेन इत्यादावसत्तिविरहान्न शाब्दबोधः । योग्यता एकपदार्थेऽपरपदार्थसम्बन्धः । योग्यताज्ञानस्याकारणत्वे वह्निना सिञ्चतीति वाक्यादपि सेके वह्निकरणकत्वरूपार्थस्य बोधः स्यात् । योग्यताज्ञानस्य कारणत्वे तु उक्तस्थले सेके वह्निकरणकत्वाभावरूपयोग्यतानिश्चयेन प्रतिबन्धान्न शाब्दबोधः। तदभावनिश्चयस्य लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतज्ज्ञानमात्रे प्रतिबन्धकत्वात् शाब्दबोधं प्रत्यपि प्रतिबन्धकत्वं सिद्धम्, ननु तर्हि भ्रमरूपस्य शाब्दबोधस्यानुपपत्तिरिति चेन्न, तत्रापि योग्यताभ्रमेण भ्रमात्मकशाब्दबोधस्योपपत्त्या सामञ्जस्यात् । यत्पदेन विना यस्य पदस्यान्वयाननुभावकत्वं तेन सह तस्याकाङ्क्षा॥आकाङ्क्षाया अकारणत्वे घटः कर्मत्वम् आनयनं कृतिरित्यादौ शाब्दबोधप्रसङ्गः स्यात्। आकाङ्क्षायाः कारणत्वे घटः कर्मत्वमित्यादौ तदभावान्न शाब्दबोधः। सविस्तरस्तु मुक्तावल्यादाववगन्तव्यम् ।

( ख ) केचित्तु नामार्थमुख्यविशेष्यकशाब्दबोधो भवतीति वदन्ति । तेषां मते शाब्दबोधस्य सर्वत्र प्रथमान्तार्थमुख्यविशेष्यत्वनियमात्। यथा 'चैत्रस्तण्डुलं पचती'त्यत्र तण्डुलपदेन तण्डुलपदार्थोपस्थितिः, द्वितीयया कर्मतारूपफलोपस्थितिः, वृत्तित्वं संसर्गः। तेन तण्डुलवृत्तिकर्मत्वमिति बोधः। पचधातुना पाकोपस्थितिः, तत्रानुकूलत्वसंसर्गेण तादृशकर्मत्वान्वयः । तेन तण्डुलवृत्तिकर्मतानुकूलपाक इति बोधः। तत आख्यातेन कृत्युपस्थितिः, तत्रानुकूलत्वसंसर्गेण तादृशपाकेऽन्वयः। तेन तण्डुलवृत्तिकर्मतानुकूल-

भावप्रधानमाख्यातं, सत्त्वप्रधानानि नामानीति। पश्य मृगो धावतीत्यादौ तु मृगकर्तृकम्मनं दृशिक्रियां प्रति कर्म। प्रधानं तु दृशिक्रियैव। उक्तं च। "सुबन्तं हि यथाऽनेकं तिङन्तस्य विशेषणम्। तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम् ॥१॥" (क) इति ॥ ननु उक्ते कर्मणि प्रथमेत्युक्तम्। तेन पक्वमोदनं भुङ्क्ते इत्यत्र द्वितीया न स्यात्। क्तप्रत्ययेन कर्मण उक्तत्वात्। उच्यते। इह हि पचिभुजिनिरूपिते द्वे कर्मत्वशक्ती। तत्र प्रधानीभूतभुजिक्रियानिरूपितामनुक्तां शक्तिमादाय द्वितीयोत्पत्तिर्भवतीति। उक्तं च हरिणा—प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्॥ शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ॥१॥ प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते। यदा गुणे तदा तद्वदनुक्ताऽपि प्रतीयते ॥२॥" अत एव। पक्वौदनो भुज्यते देवदत्तेनेत्यत्र भुजिप्रत्ययेन उक्ते कर्मणि प्रथमैव भवति। पचेरप्राधान्यात्।

अथ प्रसङ्गात्पाणिनिसूत्राणि लिख्यन्ते ॥ अकथितं च ॥ अपादानादिविशेषैरनुक्तं कारकं कर्मसंज्ञं स्यात्(ख)। 'दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्। कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥ १ ॥" दुहादीनां द्वादशानां तथा नीप्रभृतीनां चतुर्णां कर्मणा यद्युज्यते तदेवाकथितं कर्म ज्ञेयम्। कर्मणा युज्यते इति कर्मयुक्। क्विबन्तम्। मुख्यकर्मणा सह क्रियया सम्बध्यमानमपादानादिविशेषैरकथितं यत्कारकं तत्कर्मसंज्ञकं भवतीत्यर्थः। एतेन दुहादीनां द्विकर्मकत्वमुक्तम्(ग)। दुह प्रपूरणे। गां दोग्धि पयः स इत्यत्र पयः कर्मकं गोसम्बन्धि दोहनमर्थः(घ)। पयोऽत्र मुख्यं कर्म,

---

पाकानुकूलकृतिरिति बोधः। ततश्चैत्रपदेन चैत्रोपस्थितिः, तत्राश्रयत्वसंसर्गेण तादृशकृतेरन्वयः। तेन तण्डुलवृत्तिकर्मतानुकूलपाकानुकूलकृत्याश्रयश्चैत्र इति वाक्यार्थबोधः।

( क ) विशिष्यते सम्बुध्यते येन तत् विशेषणम्। इतरव्यावर्तकमिति यावत्। विशिष्यते विशेषणपदैः सम्बुध्यते सम्यक्ज्ञायते यत् तद्विशेष्यम्।

( ख ) अकथितं चेति। केनाकथितमित्याशंकायामाह—अपादानादिविशेषैरिति। अपादानं सम्प्रदानमधिकरणं कर्म करणं कर्ता हेतुरित्येतैर्विशेषैरित्यर्थः। अनुक्तमिति। अविवक्षितमिति पाठः। आपादानादिविशेषोक्तौ तु गोर्दोग्धि पयः। बलेर्याचते वसुधाम्। अजेऽवरुणद्धि गाम्। इत्येवं पञ्चम्यादय एव भवन्तीति। अथ तत्त्वबोधिनी—"एतेन पाणिनिना कांस्यपात्र्यां दोग्धीत्यत्र करणाधिकरणयोरतिप्रसङ्गः। तयोस्तु दण्डेन करोति, कटे निषीदतीत्यादिरवकाशो दुहादिपरिगणनादित्याक्षेपो निरस्तः। करणाधिकरणयोरिह विवक्षितत्वात्। यदि तु सूत्रेऽकथितशब्दोऽप्रधानपर्यायो न त्वनुक्तपर्याय इत्यभ्युपगम्येत, तदा स्यादेवायमाक्षेपो न त्वन्यथा" इति। कारकमिति। ततश्च ब्राह्मणस्य पुत्रं पृच्छतीत्यत्र नातिप्रसङ्गः।

( ग ) दुह्याजिति। इह तु दण्ड्यग्रहणार्थो न तु नियमार्थः। प्रच्छीत्यागन्तुकेनेकारेण निर्देशो न त्विका 'ग्रहिज्या'—संप्रसारणप्रसङ्गात्। द्विकर्मत्वमुक्तमिति। अन्ये त्वाहुः—कर्मयुगित्यत्र कर्मशब्देन क्रियोच्यते इति क्रियान्वयीत्यर्थः। अत्र केचित्—कर्मयुगिति कर्मयुक्तत्वं च भुविशास्यतिरिक्तधातुयोगे धात्वर्थव्यापारात्प्रागेव कर्मसंबद्धत्वम्। तेन 'पाणिना कांस्यपात्र्यां दोग्धि' इत्यत्र करणाधिकरणयोरविवक्षायामपि न कर्मसंज्ञापत्तिः।

( घ ) 'गोसंबन्धि' इति। 'इह 'राज्ञः पुरुष' इत्युक्ते राजा पुरुषमपेक्षते—'ममाय'मिति, पुरुषोऽपि राजानमपेक्षते 'अहमस्य' इति, तयोरभिसम्बन्धस्य षष्ठी वाचिका तथा 'काष्ठं श्रित' इति क्रियाकारकयोरभिसंबन्धस्य द्वितीयावाचिका भविष्यति" इति समर्थसूत्रभाष्यानुरोधेनात्र क्रियाकर्मभाव एव संबन्धो ग्राह्य इति 'गोकर्मकम्' इत्येव बोधोऽङ्गीकार्य्यः। अन्तः स्थितद्रवद्रव्यनिष्ठविभागानुकूलव्यापारो दुहेर-

धात्वर्थफलाश्रयत्वात् । गौस्तु पयसो निमित्ततामात्रेणोपात्ता न त्ववधिभावेनेत्यपादानसंज्ञाया अप्रवृत्तेरनेन कर्मसंज्ञा । विवक्षायां त्वपादानादिसंज्ञा भवत्येव । विवक्षातः कारकविभक्तयो नाना भवन्तीति शाब्दिका इत्युक्तत्वात् । गोदोग्धि पयः स इति ॥ टुयाचृ याच्ञायाम् । बलिं याचते वसुधां हरिः । अत्र प्रार्थनार्थस्य याचतेर्वसुधा मुख्यं कर्म । तेन कर्मणा युक्तो बलिः । तस्यापादानत्वाविवक्षायामनेन कर्मसंज्ञा(क) । अपादानविवक्षायां तु बलेर्याचते वसुधामिति ॥ अविनीतं विनयं याचते सः । अविनीतं विनयायानुनयतीत्यर्थः । अविनीतमिति मुख्यं कर्म विनयस्य तादर्थ्याविवक्षायामनेन कर्मसंज्ञा(ख) । विवक्षायां तु अविनीतं विनयाय याचते ॥ डुपचष् पाके तण्डुलानोदनं पचति सः । ओदनं निर्वर्तयतीत्यर्थः । ओदनमिति मुख्यं कर्म । करणत्वाविवक्षायां तण्डुलानित्यत्रानेन कर्मसंज्ञा (ग) । विवक्षायां तु तण्डुलैरोदनं पचतीति ॥ दण्ड दण्डग्रहणे चुरादिः । गर्गान् शतं दण्डयति सः । शतमिति मुख्यं कर्म । गर्गानित्यत्र त्वपादानत्वाविवक्षायामनेन कर्मसंज्ञा(घ) । विवक्षायां तु गर्गेभ्यः शतं दण्डयतीति ॥ रुधिर आवरणे । व्रजमवरुणद्धि गां सः । गामिति मुख्यं कर्म व्रजमित्यत्र त्वधिकरणत्वाविवक्षायामनेन कर्मसंज्ञा(ङ) । विवक्षायां तु व्रजेऽवरुणद्धि गामिति ॥ प्रच्छ ज्ञीप्सायाम् । माणवकं पन्थानं पृच्छति सः । पन्थानमिति मुख्यं कर्म । तादर्थ्याविवक्षायां माणवकमित्यत्रानेन कर्मसंज्ञा(च) । विवक्षायां तु माणवकाय पन्थानं पृच्छति ॥ चिञ्

---

र्थः। पयसः कर्मता तु 'कर्तुरीप्सिततमम्' इत्यनेनेति तदेव मुख्यं कर्म गौस्तु दोहनात् प्राक् पयसा युक्तत्वेन कर्मयुक्तादप्रधानं कर्मेति 'अप्रधाने दुहादीनाम्' इति प्रत्ययः । यदा तु अन्तःस्थितद्रवद्रव्यनिष्ठविभागानुकूलव्यापारानुकूलव्यापारो दुहेरर्थः, तदा 'कर्तुरीप्सित'—इत्यनेनैवोभयोः कर्मत्वे प्रधानव्यापारजन्यव्यापाररूपफलाश्रयत्वेन गोः कर्मत्वं मुख्यम् , विभागाश्रयत्वेन पयसो गौणं कर्मत्वमिति 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' इति प्रधानकर्मणि गवि प्रत्ययः । प्रधानकर्मत्वं च कर्तृप्रत्ययसमभिव्याहारे प्रकृतधात्वर्थप्रधानव्यापारजन्यफलाश्रयत्वम् ।

( क ) प्रार्थनार्थस्येति । परस्वत्वनिवृत्तिपूर्वकस्वस्वत्वोत्पत्त्यनुकूलव्यापारस्यैव याच्यर्थत्वेन स्वस्वत्वोत्पत्तिरूपफलाश्रयत्वेन वसुधाया मुख्यं कर्मत्वम् । बलौ वसुधायाःस्वामित्वसंबन्धात् कर्मयुक्तत्वमिति गौणकर्मत्वमितिभावः ।

( ख ) मुख्यं कर्मेति । अत्र स्वीकारानुकूलव्यापारार्थत्वाद्याचेः स्वीकाररूपफलाश्रयत्वाद्विनयस्य मुख्यं कर्मत्वम् । अविनीते विनयस्य स्वविषयकज्ञानवत्त्वेन वृत्तित्वात्कर्मयुक्तत्वेन गौणकर्मत्वमिति भावः।

( ग ) तण्डुलानिति । निर्वर्त्यमानस्य पचेरोदनो मुख्यं कर्म । ओदनं निर्वर्त्तयतीत्यर्थः । तण्डुलास्तु करणत्वाविवक्षायामकथितं कर्म । अन्ये त्वाहुः—'द्व्यर्थः पचिः' इति भाष्यपर्यालोचनया तण्डुलानोदनं पचतीत्यस्य तण्डुलान्विक्लेदयन्नोदनं निर्वर्त्तयतीत्यर्थः । दुह्यादिषु पचेः परिगणनमप्रामाणिकं भाष्यकैयटयोरनुक्तत्वादिति तत्त्वबोधिनी ।

( घ ) गर्गानिति। स्वसम्प्रदानकदानानुकूलव्यापारानुकूलशासनरूपव्यापारार्थत्वेन दण्डेर्द्विकर्मकत्वे स्वसम्प्रदानकदानानुकूलव्यापाररूपफलाश्रयत्वेन गर्गा प्रधानं कर्म स्वसम्प्रदानकदानाश्रयत्वे शतमप्रधानं कर्मेति सर्वेष्टसिद्धौ परिगणनायामस्याप्रामाणिकः पाठ इति ज्ञेयम् ॥ उद्देश्यतालक्षणं प्राधान्यं तु शतस्यैवेति अनुद्देश्यगर्गानुरोधान्नोद्देश्यशतावृत्तिरिति न वृद्धिसंज्ञासूत्रस्थभाष्यवैमत्यम् ।

( ङ ) गामिति मुख्यमिति । निर्गमप्रतिबन्धपूर्वकचिरस्थित्यनुकूलव्यापारस्य रुधेरर्थत्वे चिरस्थित्याश्रयत्वेन गोः प्रधानं कर्म । व्यापाराद्वयार्थत्वेन 'कर्तुरित्येवोभयोः कर्मत्वे सत्यसौलभ्येन चिरस्थित्यनुकूलव्यापाराश्रयत्वेन व्रजे प्रधानकर्मता गोर्गौणकर्मतेति ज्ञेयम् ।

( च ) पन्थानं पृच्छतीति । जिज्ञासाविषयार्थज्ञानानुकूलव्यापारस्य प्रच्छिधात्वर्थत्वे विषयतास-

चयने । वृक्षमवचिनोति फलानि सः । फलानीति मुख्यं कर्म वृक्षमित्यत्रापादानत्वाविवक्षायामनेन कर्मसंज्ञा(क) । विवक्षायां तु वृक्षादवचिनोति फलानीति ॥ ब्रूञ् व्यक्तायां वाचि । शासु अनुशिष्टौ । माणवकं धर्मं ब्रूते शास्ति वा सः । धर्ममिति मुख्यं कर्म । माणवकमित्यत्र तु तादर्थ्याविवक्षायामनेन कर्मसंज्ञा(ख) । विवक्षायां तु माणवकाय धर्मं ब्रूते शास्तीति वा ॥ जि जये । शतं जयति देवदत्तं सः । शतमिति मुख्यं कर्म । देवदत्तमित्यत्र स्वपादानत्वाविवक्षायामनेन कर्मसंज्ञा(ग) । विवक्षायां तु शतं जयति देवदत्तात्सः ॥ मन्थ विलोडने । सुधां क्षीरनिधिं मथ्नाति हरिः । सुधामिति मुख्यं कर्म । क्षीरनिधिमित्यत्राधिकरणत्वविवक्षायामनेन कर्मसंज्ञा (घ) । विवक्षायां तु सुधां क्षीरनिधौ मथ्नाति ॥ मुष स्तेये । देवदत्तं शतं मुष्णाति । शतमिति मुख्यं कर्म । देवदत्तमित्यत्रापादानत्वाविवक्षायामनेन कर्मसंज्ञा(ङ) । विवक्षायां तु देवदत्ताच्छतं मुष्णाति सः ॥ णीञ् प्रापणे । हृञ् हरणे । कृष विलेखने । वह प्रापणे । ग्राममजां नयति सः । एवं हरतीत्यादि । अजामिति मुख्यं कर्म । ग्राममित्यत्र स्वधिकरणत्वाविवक्षायामनेन कर्मसंज्ञा विवक्षायां तु ग्रामेऽजां नयति हरति कर्षति वहति वेति ॥ एतदर्थका धातवो ऽन्येऽपि संज्ञेयाः। माणवकं धर्मं भाषते अभिधत्ते वक्तीत्यादि ॥ **अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्** ॥ कुरून् स्वपिति । मासमास्ते। गोदोहमास्ते । क्रोशमास्ते(च)॥ **गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि**

---

म्बन्धेन जिज्ञासाविषयार्थज्ञानरूपफलाश्रयस्य पथो मुख्यकर्मत्वम् । ज्ञानाश्रयस्य माणवकस्य कर्मयुक्त्वेन गौणकर्मत्वम् ।

( क ) **वृक्षमवचिनोतीति** । विभागपुरःसरादानानुकूलव्यापारार्थकचिञः फलानामादानाश्रयत्वेन मुख्यकर्मत्वम् । व्यापारात्पूर्वं फलसम्बन्धिनो वृक्षस्य गौणकर्मत्वम् । आदानानुकूलविभागानुकूलव्यापारानुकूलव्यापारार्थत्वे 'कर्त्तु'रित्येवं द्वयोरपि कर्मत्वे विभागानुकूलव्यापाराश्रयत्वेन वृक्षस्य मुख्यकर्मत्वम् । विभागाश्रयत्वेन फलानां गौणकर्मत्वमिति ज्ञेयम् ।

( ख ) **ब्रूते शास्तीति** । ज्ञानानुकूलः शब्दप्रयोगरूपो ब्रुवोऽर्थः । प्रवृत्तिपर्यवसायी सः शासेरर्थः । फलतावच्छेदकविषयतासंसर्गेण ज्ञानाश्रयतया धर्मस्य मुख्यकर्मत्वम् । वचनादिकर्मणा धर्मेण माणवकस्याभिप्रेयमाणत्वात्प्राप्तायाः सम्प्रदानसंज्ञाया अविवक्षायां कर्तृव्यापारोत्तरं तज्ज्ञानाश्रयत्वेन कर्मयुक्त्वाद् गौणकर्मत्वम् । ज्ञानानुकूलव्यापारानुकूलव्यापारार्थत्वेन 'कर्त्तु' रित्येव द्वयोः कर्मत्वे पुनर्ज्ञानानुकूलव्यापाराश्रयत्वेन माणवकस्य मुख्यकर्मत्वम् । विषयतया ज्ञानाश्रयत्वेन धर्मस्य गौणकर्मत्वम् ।

( ग ) **शतं जयतीति** । स्वस्वत्वोत्पत्त्यनुकूलव्यापारानुकूलव्यापारार्थकजयतेः प्रयोगे 'कर्त्तु'रित्येव द्वयोरपि कर्मत्वे स्वस्वत्वोत्पत्त्याश्रयत्वेन शतस्य गौणकर्मत्वम् । स्वस्वत्वोत्पत्त्यनुकूलव्यापाराश्रयत्वेन देवदत्तस्य मुख्यकर्मत्वमिति परिगणनायां जिधातोः पाठस्यायुक्तिकत्वमिति ज्ञेयम् ।

( घ ) **क्षीरनिधिं मथ्नातीति** । अन्तःस्थितद्रव्यप्रकाशनानुकूलव्यापारानुकूलव्यापारार्थकमन्थतेः प्रयोगे 'कर्त्तु'रित्येव द्वयोरपि कर्मत्वे प्रकाशाश्रयत्वेनामृतस्य गौणकर्मत्वम् । प्रकाशानुकूलव्यापाराश्रयत्वेन क्षीरनिधेर्मुख्यकर्मत्वमिति परिगणनायां मन्थधातुपाठस्याप्रामाणिकत्वमिति ज्ञेयम् ।

( ङ ) **देवदत्तं शतं मुष्णातीति** । स्वस्वत्वोत्पत्त्यनुकूलाज्ञानानुकूलव्यापारस्य मुष्धात्वर्थे 'कर्त्तु'रित्येव द्वयोरपि कर्मत्वे स्वस्वत्वोत्पत्त्याश्रयत्वेन शतस्य गौणकर्मत्वम् । अज्ञानाश्रयत्वेन देवदत्तस्य मुख्यकर्मत्वमिति परिगणनायां मुष्धातोः पाठाप्रामाणिकमिति ज्ञेयम् । इत्येवं यथायथरूपेण 'अजां ग्रामं नयति हरति' इत्यादौ बोध्यम् ।

( च ) **देश इति** ग्रामसमूहात्मककुरुपाञ्चालावन्त्यादिपरोऽत्र देशशब्दो न तु ग्रामादिरपि तेन

(र्थे) कर्ता स णौ(र्णौ) ॥ गत्यार्थानां शब्दकर्मकाणामकर्मकाणां च धातूनामणौ यः कर्ता स णौ कर्म स्यात् । प्रत्यवसानं भक्षणम् । शब्दः कर्म कारकं येषां ते शब्दकर्मकाः । अनुत्पन्ने णिप्रत्यये शुद्धधातुवाच्यां क्रियां प्रति यः कर्ता स णिप्रत्ययान्तधातुवाच्यां क्रियां प्रति कर्मसंज्ञः स्यादित्यर्थः(क) । यथा "शत्रूनगमयत्स्वर्गं वेदार्थं स्वानवेदयत् । आशयच्चामृतं देवान् वेदमध्यापयद्विधिम् ॥ आसयत्सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः॥" गत्यर्थो यथा । शत्रवः स्वर्गमगच्छन् । तान् शत्रून् श्रीहरिः स्वर्गमगमयदिति । गमेरणि-प्रत्ययान्तावस्थायां शत्रवः कर्तारस्ते ण्यन्तावस्थायां कर्माभवन् । स्वर्गकर्मकं शत्रुनिष्ठं बहुमनं तदनुकूलो हरिकर्तृकश्चिरातीतो व्यापारः ॥ बुद्ध्यर्थो यथा । स्वे स्वकीयाः वेदार्थ-मविदुस्तान् स्वान् श्रीहरिर्वेदार्थमवेदयत् । विदेरण्यन्तावस्थायां स्वे कर्तारस्ते ण्यन्ताव-स्थायां कर्माभवन् ॥ प्रत्यवसानार्थो यथा । देवाः अमृतमश्नन् ॥ तान् देवान् श्रीहरिर-मृतमाशयत् । अशेरण्यन्तावस्थायां देवाः कर्तारस्ते ण्यन्तावस्थायां कर्माभवन् ॥ शब्द-कर्मको यथा विधिर्वेदमध्यैत । तं ब्राह्मणं श्रीहरिर्वेदमध्यापयदपाठयदित्यर्थः । अण्यन्ताव-स्थायां विधिः कर्ता स ण्यन्तावस्थायां कर्माभवत् ॥ अकर्मका यथा । सलिले जले पृथ्वी

---

ग्रामे स्वपितीत्यत्र द्वितीया न भवति । अत्र च 'अधिपूर्वाणां शीङ्स्थासा'०इति लिङ्गम् । अन्यथा अधिशेते, अधितिष्ठति, अध्यास्ते वा वैकुण्ठं हरिरित्यत्राप्यनेनैव कर्मत्वसिद्धेस्तद्वैयर्थ्यं स्पष्टमेवेत्यभिप्रेत्योदाहर-ति—कुरूनिति । देवदत्त इति शेषः । कुरुषु निद्रां करोतित्यर्थः ॥ कुर्वादिशब्दाः जनपदविशेषेषु स्वभा-वान्नित्यबहुवचनान्ताः ।

मोदोहमिति । च चेह कालत्वात् सिद्धिः । लोके कालत्वेन प्रसिद्धस्य मासादेरेव कालशब्देन ग्रहणात् । तेन घटमास्ते इत्यादि न भवति । जन्यमात्रं कालोपाधिरिति घटादेरपि कालत्वात् । यत्तु प्राचा—"अकर्मकधातुभिर्योगे देशकालाध्वभावैर्ध्या द्वितीया" इति केचिदित्युक्त्वा नदीमास्ते इत्युदाहृतम् । तदसङ्गतम् । ग्रामसमूहः कुर्वादिरेव देशो गृह्यते न तु देशमात्रम् । तेन ग्रामं स्वपितीति न भवतीत्याक-रात् विस्तरस्तु तत्त्वबोधिन्यां बोध्यः ।

( क ) शब्दकर्मणामिति । कर्मशब्दोऽत्र कारकपरः । न तु क्रियापरः । कृत्रिमे कार्यसम्प्रत्ययात् । कर्मग्रहणसामर्थ्याच्च । अन्यथा 'गतिबुद्धिप्रत्यवसानशब्दार्थाकर्मकाणामित्येव ब्रूयात् । गतीत्यादि किम् । पाचयत्योदनं देवदत्तेन । अण्यन्तानां किम् । गमयति देवदत्तो यज्ञदत्तं—तमपरः प्रयुङ्क्ते—गमयति देवदत्तेन यज्ञदत्तं विष्णुमित्रः । विष्णुमित्रकर्तृकः यज्ञदत्तकर्मकगमनानुकूलदेवदत्तकर्तृकव्यापारानुकूलो वर्तमानो व्यापारः । इति शाब्दबोधः । 'नीवह्योर्न' । नाययति वाहयति वा भारं भृत्येन । 'नियन्तृकर्तृकस्य वहेरनिषेधः । वाहयति रथं वाहान् सूतः । 'आदिखाद्योर्न' । आदयति खादयति वान्नं बटुना । 'भक्षेर-हिंसार्थस्य न । भक्षयत्यन्नं बटुना । अहिंसार्थस्य किम् । भक्षयति बलीवर्दान् सस्यम् । 'जल्पतिप्रभृती-नामुपसंख्यानम्' । जल्पयति भाषयति वा धर्मं पुत्रं देवदत्तः । 'दृशेश्च' । दर्शयति हरिं भक्तान् । सूत्रे ज्ञान-सामान्यार्थानामेव ग्रहणं न तु तद्विशेषार्थानामित्यनेन ज्ञाप्यते । तेन स्मरतिजिघ्रतीत्यादीनां न । स्मार-यति घ्रापयति वा देवदत्तेन । 'शब्दायतेर्न' 'शब्दाययति देवदत्तेन । धात्वर्थसंगृहीतकर्मत्वेनाकर्म-कत्वात्प्राप्तिः । येषां देशकालादिभिन्नं कर्म न संभवति तेऽत्राकर्मकाः । न त्वविवक्षितकर्माणो-ऽपि । तेन मासमासयति देवदत्तमित्यादौ कर्मत्वं भवत्येव । देवदत्तेन पाचयतीत्यादौ तु न । 'हृक्रोरन्यतरस्याम्' हृक्रोरणौ यः कर्ता स णौ वा कर्म स्यात् । हारयति कारयति वा भृत्यं भृत्येन वा कटम् । 'अभिवादिदृशोरात्मनेपदे वेति वाच्यम्' । अभिवादयते दर्शयते देवं भक्तं भक्तेन वा । 'क्रियाविशेषणं कर्म' । क्रियाविशेषणं कर्मसंज्ञं नपुंसकलिङ्गमेकवचनं च स्यात् । स्तोकं पचति । इत्यादि तन्त्रान्तराद्बोध्यम् । कुत्रचित् क्रियाविशेषणानामपि करणत्वम् । प्रत्यक्षेण पश्यति । कार्त्स्न्येन करोति । सुखादीनां वा । सुखं सुखेन वा करोतीत्यादिप्रयोगानुसारेण बोध्यम् ।

आस्ते तां पृथ्वीं श्रीहरिः सलिले आसयत् स्थापयति स्म । आसेरण्यन्तावस्थायां पृथ्वी कर्त्री सा ण्यन्तावस्थायां कर्माभवत् । स श्रीहरिर्मे मम गतिः स्यादित्यन्वयः(क) ॥४॥

इति द्वितीया ॥

( त० ) शेषाः कार्ये इत्यादि ॥ शिष्यन्त इति शेषाः कर्मणि घञ् । उक्तायाः प्रथमाया अन्याः परिविभक्तयः शेषाः द्वितीयाद्या इति यावत् । कार्यादयोऽर्थाश्च षड्भिः पदैर्निर्दिष्टास्तेषां यथाक्रमं प्रवृत्तिः । तत्र प्रथमनिर्दिष्टमाह—कार्ये इति ॥ क्रियते कर्त्रा प्रवर्त्यते । यष्टा स्वव्यापारेण यागं वर्गं च साधयति । तदाश्रये च द्वितीया । तत्सम्बन्धात् द्वितीयावाच्यस्तदाश्रय एव न तु फलं तस्य धातुनैव लाभात् । अनन्यलभ्यस्य शब्दार्थत्वात् । वाच्यतावच्छेदकत्वाश्रयस्तमत एव नाश्रयत्वं वाच्यम् । आश्रयत्वस्य वाच्यतावच्छेदकत्वे गौरवात् । तच्च कर्म द्विविधम् । ईप्सितमनीप्सितं च । तत्रेप्सितं त्रिविधम् । निर्वर्त्यं विकार्यं प्राप्यं च । अनीप्सितं तु चतुर्विधम् । औदासीन्येन प्राप्यं द्वेष्यं संज्ञान्तरैरनाख्यातम् अन्यपूर्वकं चेति । तत्र निर्वर्त्यं यथा । पूर्वमनुत्पन्नमेवोत्पद्यते सदवस्थात्वात्प्रकटीभवति । तत् विकार्यं तु द्विविधम् । प्रकृत्युच्छेदसम्भूतं गुणान्तरोत्पत्त्या वा । कटं करोतीत्यादि । कटं पूर्वमसत् तमुत्पादयतीत्यर्थः ॥ रूपं पश्यतीति प्राप्यम् । चाक्षुष इति । प्रशस्तचक्षुरस्यास्तीति चाक्षुषः । प्रशंसायां मत्वर्थीयोऽण् । राज्यं प्राप्नोतीति संस्कार्यं पृथगिच्छतीति संस्कार्यम् कर्म । सोमं सुनोतीति गुणान्तरोत्पत्त्या विकार्यम् । अन्यदप्युदाह्रियते । प्रकृत्युच्छेदसंभूतविकार्यं यथा । प्रकृतेः प्रकृतिभूतस्यात्मनः उच्छेदसम्भूतम् । तद्यथा । काष्ठं भस्म करोति । औदासीन्यं तु तृणं स्पृशति द्वेष्यं तु विषं भुङ्क्ते । संज्ञान्तरैरनाख्याते यथा । गां दोग्धि पयः । अन्यपूर्वकं यथा । क्रूरमभिक्रुध्यति । अक्षान् दीव्यति । ईप्सितानीप्सितयोः शाब्दबोधस्त्वेक एव । ईप्सितत्वादेस्तत्र भानाभावात् । कटं करोति कारुकः इत्यस्य कटनिष्ठोत्पत्त्यनुकूल एककारुकाभिन्नाश्रयको वर्तमानो व्यापारः ॥ विषं भुङ्क्ते इत्यत्र गलादधोदेशसंयोगस्यानुकूल एकाश्रयको व्यापारः । इत्यादावीप्सितानीप्सितयोरभानादेकरूप एव शब्दबोधः । एवं च कर्मशब्दस्य यौगिकत्वादेव सिद्धे कर्मसंज्ञाविधायकानि नानासूत्राणि कृतानि । कर्मणि द्वितीयेत्यस्य फलनिरूपिताश्रये सर्वत्र द्वितीयायाः सिद्धत्वात् । असत्कार्यवादे तु निर्वर्त्यस्य कर्मकारकत्वाप्राप्तिः । तस्यासत्त्वादेव फलाश्रयत्वानुपपत्तेः । क्रियाजनकत्वाभावात्कारकत्वानुपपत्तेश्च । क्रियां कुर्वत् हि कारकमिति सिद्धान्तत्वात् ॥ ४ ॥

इति द्वितीया ॥

## कर्तरि करणे च तृतीया ॥

भिन्नः शरेण रामेण रावणो लोकरावणः ।
कराग्रेण विदीर्णोऽपि वानैरर्युध्यते पुनः ॥ ५ ॥

( मु० ) कर्तरि करणे च तृतीया ॥ क्रियां करोति स कर्त्ता । धातूपात्तव्या-

---

( क ) स्वर्गकर्मकं शत्रुनिष्ठं यद्गमनं तदनुकूलो यन्निष्ठो व्यापारः सः श्रीहरिर्मे गतिरिति वाक्यार्थः एवं सर्ववाक्यार्थो बोध्यः ।

पाराश्रय इत्यर्थः । उक्तं च—"धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते" इति । व्यापाराश्रयः कर्तेत्युक्तम् । व्यापारो धातुवाच्य आश्रयस्तृतीयावाच्योऽनन्यलभ्यत्वात् । स त्रिविधः । स्वतन्त्रः प्रयोजकः कर्मकर्ता चेति(क) । क्रिया साध्यतेऽनेनेति साधनं क्रियासिद्ध्युपकारकमित्यर्थः । तदेव करणम्(ख) । अत्र तृतीयाया व्यापार आश्रयश्च पृथग् वाच्यौ । तत्र सर्वत्र प्रकृत्यर्थ आश्रये अभेदेन संसर्गेण विशेषणम् । व्यापारस्तु भावनायां विशेषणं भवति(ग) । उक्तं च-"क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् । विवक्ष्यते यदा यत्र तत्तत्र करणं स्मृतम्(घ) ॥ १ ॥" तत्रानुक्ते कर्तरि करणे च तृतीया विभक्तिर्भवति । रामेण कर्त्रा शरेण करणेन रावणो भिन्नः । कीदृशः । लोकान् रावयतीति लोकरावणः । भिदेः कर्मणि क्तः । यद्यपि क्रियां प्रति कारकाणां विशेषणतैव तथापि कृदुक्तानां कारकाणां विशेष्यतैव ज्ञेया । सत्त्वप्रधानानि नामानीत्युक्तत्वात् । रामनिष्ठो यो व्यापारो धनुराकर्षणादिस्तत्प्रेरितो यो बाणस्तदभिन्नाश्रयको यो व्यापारः शरीरभेदाना-

---

( क ) **क्रियां करोतीति** । स्वातन्त्र्येणेति शेषः । तथा च पाणिनिः—'स्वतन्त्रः कर्त्ता' इति । अथ किमिदं स्वातन्त्र्यम् ? न तावत्पराप्रयोज्यत्वम् , प्रयोज्यकर्तुः कर्तृत्वानुपपत्तेः । अत्राहुः—'प्रधानीभूतधात्वर्थाश्रयत्वं स्वातन्त्र्यम् इति । स्थाल्यादीनां वस्तुतः स्वातन्त्र्याभावेऽपि विवक्षातः स्थाली पचति काष्ठानि पचन्तीति प्रयोगः साधुरेव । तथोक्तं भट्टोजिना–क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्त्ता स्यात् । इति तस्य बीजम् ।

**उक्तमिति** । अयं सम्पूर्णश्लोकः—धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते ।
व्यापारे च प्रधानत्वात् स्वतन्त्र इति चोच्यते ।

**व्यापाराश्रय इति** । नैयायिकास्तु 'क्रियानुकूलकृतिमत्त्वं कर्तृत्वमिति वदन्ति । आस्तामन्यत्र विस्तरः । **त्रिविध इति** । यथा हरिः सेव्यतेऽत्र स्वतन्त्रः । तदभिन्नाश्रयको हरिकर्मकसेवानुकूलव्यापार इति शाब्दबोधः । कार्यते हरिणाऽत्र प्रयोजकः । हर्यभिन्नाश्रयक उत्पादनानुकूलो व्यापार इति शाब्दबोधः । गमयति कृष्णं गोकुलमत्र कर्मकर्त्ता । गोकुलकर्मकगमनानुकूलकृष्णाश्रयकव्यापारानुकूलो व्यापार इति शाब्दबोधः । व्यापाराश्रयः कर्त्ता फलाश्रयं कर्मेति सर्वत्रोह्यम् ।

( ख ) साधकतमं करणमिति पाणिनिः । क्रियासिद्धौ प्रकृष्टोपकारकं कारकं करणसंज्ञं स्यात् । तमब्ग्रहणं किं ? गङ्गायां घोष इति भट्टोजिश्च । यद्व्यापारानन्तरं फलनिष्पत्तिस्तत्प्रकृष्टम् । तच्च करणं बाह्याभ्यन्तरभेदेन द्विविधम् । बाह्यं शरीरादि । अभ्यन्तरं चित्तादि । सूत्रे—साधकतमञ्च कारकान्तरासहकृतत्वे सति फलहेतुत्वम् । कारकान्तरव्यापारमनुत्पाद्य फलहेतुत्वमित्यर्थः । अन्ये तु—व्यापारवत्कारणं करणमिति । व्यापारत्वं च तज्जन्यत्वे सति तज्जन्यजनकत्वमिति । ननु 'चक्षुषा घटं पश्यति' इत्यादौ विषयेन्द्रियसन्निकर्षरूपस्य व्यापारस्योभयनिष्ठत्वाद् यथा 'चक्षुषा' इत्यस्य व्यापारवत्त्वेन कारणत्वेन च करणे तृतीया भवति तथा घटस्यापि विषयविधया कारणत्वाद् व्यापारवत्त्वाच्च कथं न तृतीयेति चेन्न, करणलक्षणघटककारणपदस्य असाधारणकारणरूपार्थत्वात् । अथ वा तद्भिन्नत्वे सतीति विशेषणदानेन तद्वारणसम्भवात् ।

( ग ) **भावनायामिति** । ननु केयं भावनेति । अत्राहुः—'भावना नाम भवितुर्भवनानुकूलो भावयितुर्व्यापारविशेषः' इति । तथा हि—यजेतेत्यादावस्त्यंशद्वयं यजिः प्रत्ययश्च । प्रत्ययेऽप्यस्त्यंशद्वयम् ! आख्यातत्वं लिङ्त्वञ्च । तत्राख्यातत्वं सर्वलकारसाधारणम् । लिङ्त्वन्तु लिङ्येव । उभाभ्यामप्यंशाभ्यां भावनैवोच्यते । सा च शाब्दीत्वार्थीत्वभेदेन द्विधा विस्तरस्त्वन्यत्र द्रष्टव्यः ।

( घ ) **क्रियाया इति** । विवक्ष्यत इत्यनेन 'स्थाली पचति' इत्यादौ स्थाल्यादीनामपि कारणत्वमस्तीति सूचितम् । आह च—"वस्तुतस्तदनिर्देश्यं, न हि वस्तु व्यवस्थितम् । स्थाल्या पच्यत इत्येषा, विवक्षा दृश्यते यत" इति ॥

विस्तत्साध्यप्राणवियोगाश्रयो रावण इत्यर्थः ॥ रावणं हन्ति । रावणो हन्यते । इत्यत्र तु क्रियाविशेष्यकः शाब्दबोधः । भावप्रधानमाख्यातमित्युक्तत्वात् । रावणनिष्ठो यः प्राणवियोगः शराभिन्नाश्रयशरीरभेदनादिव्यापारसाध्यसाधनानुकूलो रामनिष्ठधनुराकर्षणादिव्यापार इत्यर्थः । अनुक्ते कर्तरि किम् । हरिः करोति । वाचकः । कर्तरि वुण् । तद्धितोक्त शाब्दिकः । इकः प्रत्ययः । समासोक्ते कृतं विश्वं येन स कृतविश्वः ॥ अनुक्ते करणे किम् । जीवत्यनेनेति जीवनः । करणे युट् प्रत्ययः ॥ ९ ॥

इति तृतीया ॥

( त० ) कर्तरि करणे चेति ॥ क्रियां करोतीति कर्ता धातूपात्तव्यापाराश्रयः । यदा यदीयो व्यापारो धातुनोपादीयते तदा स कर्ता । काष्ठानि पचन्ति । आ विक्लृत्तेः सम्यग्ज्वलन्तीत्यर्थः । अग्निः पचति । सम्यक्पाचयतीत्यर्थः । स्थाली पचति । स्वस्मिन्समावेशयतीत्यर्थः । तत्र व्यापारस्य धातुनैव लाभादाश्रयमात्रं तृतीयावाच्यम् । अनन्यलभ्यस्य शब्दार्थत्वात् । स च त्रिविधः । स्वतन्त्रः प्रयोजकः कर्मकर्ता चेति । तद्यथा । मया हरिः सेव्यते । कार्यते हरिणा । गमयति कृष्णं गोकुलम् । मदभिन्नाश्रयको हरिकर्मकसेवानुकूलव्यापारः । हर्यभिन्नाश्रयक उत्पादनानुकूलो व्यापारः । गोकुलकर्मकगमनानुकूलकृष्णाश्रयकव्यापारानुकूलो व्यापार इति शाब्दबोधः । क्रिया साध्यतेऽनेनेति साधनं क्रियासिद्ध्युपकारकम् । तदेव करणं व्यापारवत्कारककरणमविलम्बेन क्रियोत्पादनं वा । तत्र तृतीया । तस्याश्च व्यापार आश्रयश्च पृथक्पृथग् वाच्यौ ॥ भिन्नः शरेणेत्यादि ॥ एकरामाश्रयको यो व्यापारस्तत्प्रेरितो यः शरस्तदभिन्नाश्रयको यो व्यापारः संयोगभेदनादिः तत्साध्यो यः प्राणवियोगस्तदाश्रयो रावण इत्यर्थः ॥ ९ ॥

इति तृतीया ॥

**दानपात्रे चतुर्थी** ॥ वेदविदे गां ददाति ॥ ६ ॥

(मु०) **दानपात्रे चतुर्थी** । दीयते इति तद्दानम् । कर्मणि युट् । दानस्य पात्रं दानपात्रं दानयोग्यमित्यर्थः । "योग्यभाजनयोः पात्रम्" इत्यमरः ॥ अस्य संप्रदान संज्ञा । सम्यक्प्रदीयतेऽस्मै तत्संप्रदानम्(क) । अपुनर्ग्रहणाय स्वस्वत्वनिवृत्तिपूर्वकं यत परस्वत्वोत्पा

---

( क ) **सम्प्रदानमिति** । तथा च पाणिनिः—'कर्मणा यमभिप्रैति स संप्रदानम्' । अयमर्थः—करणीभूतकर्मजन्यफलभागित्वेनोद्देश्यत्वं सम्प्रदानत्वम् । स्वस्वत्वध्वंसपूर्वकपरस्वोत्वोत्पत्त्यवच्छिन्नत्यागस्य दानपदार्थत्वात् । अथ वा उद्देश्यगतस्वामित्वसम्पादकत्यागस्य दानपदार्थत्वात् । वेदविदे गां ददातीत्यत्र वेदविदुद्देश्यकं यद्गोवृत्तिस्वत्वं गोनिरूपितस्वामित्वं वा तज्जनको यस्त्यागस्तदनुकूलकृतिमानिति शाब्दबोधः वैयाकरणमते तु—वेदविदुद्देश्यको गोनिष्ठो यः स्वस्वत्वत्यागस्तदनुकूल एकाश्रयको वर्त्तमानव्यापार इति । तत्कारणं त्रिविधम् । अनिराकर्तृ । प्रेरकम् । अनुमन्तृ चेति । तत्रानिराकर्तृ यथा-आदित्यायार्घ्यं ददाति । प्रेरकं यथा-विप्राय गां ददाति । मह्यं गां ददातु प्रेरितो ददातीत्यर्थः । अनुमन्तृ यथा—गुरवे गां ददाति । गुरुर्हि न प्रार्थयते दीयमानं तामनुमन्ते भद्रं कृतमिति । तदुक्तं हरिणा—

'अनिराकरणात्कर्तुस्त्यागाङ्गं कर्मणेप्सितम् । प्रेरणानुमतिभ्यां च लभते सम्प्रदानताम् ।' इति ॥

अथात्र दानसम्बन्धे किञ्चित्प्राचां वचनम्—

"न विद्यया केवलया तपसा वापि पात्रता । यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम् ॥

सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे । अधीते शतसाहस्रमनन्तं वेदपारगे ॥

पूजानुग्रहकाभ्यामिः स्वद्रव्यस्य परार्पणम् । दानं तस्यार्पणस्थानं सम्प्रदानं प्रकीर्तितम् ॥

दत्तं तद्दानम् । अत एव रजकस्य वस्त्रं ददातीत्यादौ न चतुर्थी । रजकस्येति संबन्धे षष्ठी । श्रोत्रियाय कन्यां ददातीत्यादौ चतुर्थी न स्यात् स्वत्वत्यागाभावात् । उच्यते । स्वस्य भावः स्वत्वम् आत्मत्वम् आत्मीयत्वं ज्ञातित्वं धनत्वं च । आत्मत्वात्मीयत्वयोस्त्यागो नास्तीति ज्ञातिस्वस्य त्यागोऽस्ति । परगोत्रप्रवेशाद्धनत्वस्य च त्यागः । अतोऽत्र परस्व-स्वत्वापादानरूपं मुख्यं दानम् । तत्र दानपात्रे अनुक्ते संप्रदाने कारके चतुर्थी स्यात् । वेदं वेत्तीति वेदवित्तस्मै वेदविदे चैत्रो गां ददाति । अत्र चतुर्थ्या उद्देश्योऽर्थः । वेदविदु-द्देश्यकः गोनिष्ठस्वत्वत्यागानुकूल एककर्तृको वर्तमानो व्यापारः ॥ अनुक्ते किम् । दानी-यो विप्रः । दीयतेऽस्मै इति दानीयो विप्रः । बाहुलकात्संप्रदाने अनीयप्रत्ययः ॥ ६ ॥

( त० ) दानपात्रे चतुर्थी ॥ दीयते इति दानम् । कर्मणि युट् , दानस्य पात्रं योग्यमित्यर्थः । "योग्यभाजनयोः पात्रम्" इत्यमरः ॥ वेदविदे गां ददाति । वेदविदुद्दे-श्यको गोनिष्ठो यः स्वत्वत्यागस्तदनुकूल एकाश्रयको वर्तमानव्यापार इत्यर्थः ॥ तथा च स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनं दानम् । खण्डिकोपाध्यायस्तस्मै चपेटां ददातीत्या-दौ तु उद्देश्यकत्वाच्चतुर्थी । श्रोत्रियाय कन्यां ददातीत्यत्र स्वात्मतात्मीयतयोरत्यागेऽपि-परगोत्रत्वेन ज्ञातिस्वत्वस्यैव त्यागादिति वृद्धाः । परस्वत्वापादनरूपस्य दानस्य च सत्त्वा-त् । स्वस्य भावः स्वत्वं स्वशब्दस्यार्थचतुष्टये आत्मात्मीयज्ञातिधनरूपे वृत्तेः ॥ ६ ॥

**( क्रियया यमाप्नोति तत्रापि चतुर्थी ) पत्ये शेते ॥ ७ ॥**

( सु० ) क्रियया यमाप्नोति तत्रापि चतुर्थी ॥ क्रियया कर्ता यमाप्नोति संबन्धाद् यमभिप्रैति तत्र चतुर्थी स्यात् ॥ पत्ये शेते । शयनक्रियया पतिमभिप्रैति तदा-भिमुख्येन शेते इत्यर्थः ॥ राज्ञे करं ददाति । दानक्रियया राजानमभिप्रैति तदाभिमुख्येन ददातीत्यर्थः ॥ इति चतुर्थी ॥ ७ ॥

( त० ) पत्ये शेत इति । पत्युद्देश्यकशयनानुकूल एकाश्रयको व्यापारः ॥ ७ ॥

इति चतुर्थी ॥

**विश्लेषावधौ पञ्चमी ॥** विश्लेषो विभागस्तस्यावधौ पञ्चमी ॥ हिमवतोऽवतरति गङ्गा । धावतोऽश्वादपतत् ॥ ८ ॥

( सु० ) विश्लेषावधौ पञ्चमी ॥ श्लेषणं श्लेषः संयोगः । विगतो विरुद्धो वा श्लेषो विश्लेषो विभागः । अवधीयते एकरूपतया ज्ञायते सोऽवधिः । विश्लेषस्यावधिर्वि-श्लेषावधिस्तस्मिन् विश्लेषावधौ ॥ अस्यापादानसंज्ञा (क) । उक्तं च हरिणा । "अपा-

गुरुदेवद्विजातीनां भावशुद्धया कृतं हि यत् । ध्यानावनतिदानैश्च पूजामाननमुच्यते ॥
विरूपोन्मत्तनिःस्वानामकुत्सापूर्वकं हि यत् । पूरणं दानमग्नाभ्यामनुग्रह उदाहृतः ॥
यत्किञ्चित्फलमुद्दिश्य दानयज्ञजपादिकम् । क्रियते कायिकं यच्च तत्काम्येति प्रकीर्तिम् ॥
दानपात्रं सम्प्रदानं त्रिधा तच्च निरूपितम् । देहीति प्रेरणात्किंचित् प्रेरकं याचको यथा ॥
महत्त्वाद्याचते नैव भक्त्या ददन्तु मन्यते । अनुमन्तृकमेतत्स्याद् गुणवानतिथिर्यथा ॥
न स्वीकरोति माहात्म्यान्न निराकुरुते तथा । अनिराकर्तृकं तत्स्याद्यथा चैत्यः कृपानिधिः ॥" इति ।

( क ) उक्तं हि पाणिनिना—'ध्रुवमपायेऽपादानम्' अपाये विभागाश्रये यद्ध्रुवं विभागजनकक्रिया-शून्यं तदपादानकारकं भवतीत्यर्थः । नैयायिकैस्तु—परकीयक्रियाजन्यविभागाश्रयत्वमपादानत्वमिति प्रोच्यते । तच्चापादानं त्रिविधम् । उक्तं च हरिणा—

ये यदुदासीनं चलं वा यदि वाऽचलम् । ध्रुवमेवातदावेशात्तदपादानमुच्यते ।।" अपाये विश्लेषे साध्ये सति ध्रुवमवधिभूतं कारकमतदावेशात् विश्लेषजनकक्रियानावेशादपादानमुच्यते। कीदृशम् । चलमचलमुदासीनं वेत्यर्थः । तत्रानुक्ते अपादानकारके पञ्चमी स्यात् । अत्र प्रकृत्यर्थः पञ्चम्यर्थेऽवधावभेदेन संसर्गेण विशेषणं प्रत्ययार्थोऽवधिस्तु क्रियायां विशेषणं भवति कारकाणां क्रिययैव संबन्धात् । हिमवतः पर्वताद्गङ्गाऽवतरति । अत्रावतरणविशिष्टाया गङ्गाया विश्लेषावधिभूता हिमवान् । हिमवदभिन्नावधिकनिःसरणानुकूलो गङ्गाभिन्नाश्रयको वर्तमानो व्यापारः ॥ धावतोऽश्वाच्चैत्रः पतति । पतनक्रियाविशिष्टस्य चैत्रस्य विश्लेषावधिरश्वः । शीघ्रगत्यनुकूलव्यापाराश्रयोऽश्वस्तदभिन्नावधिकं चैत्रनिष्ठं पतनमित्यर्थः ॥ अनुक्ते किम् । उपाध्यायो विप्रः । उप समीपेऽधीतेऽस्मादित्यपादाने घञ् ॥ ८ ॥

इति पञ्चमी ॥

( त० ) विश्लेषेति ॥ श्लेषणं श्लेषः संयोगः विगतः श्लेषो विश्लेषः॥ फलितार्थमाह—विभाग इति ॥ अवध्याविति ॥ अवधीयते एकरूपतया ज्ञायते सोऽवधिः । प्रकृतधातूपात्तगत्याद्यनाश्रयत्वे सति तज्जन्यविभागाश्रयः ॥ हिमवत इति ॥ हिमवदभिन्नावधिकनिःसरणपूर्वकः अवतरणानुकूलगङ्गाऽभिन्नाश्रयको वर्तमानो व्यापारः ॥ धावत इति ॥ शीघ्रगत्यनुकूलो यो व्यापारस्तदाश्रयो योऽश्वस्तदवधिकोऽधोदेशसंयोगानुकूल एकाश्रयकोऽतीतो व्यापारः । इह क्रियाविशिष्टस्याप्यश्वस्य प्रकृतधातूपात्तक्रियां प्रत्यवधित्वं न विरुध्यते । तथा परस्परात् मेषावपसरत इत्यत्र सुधातुना गतिद्वयस्याप्युपादानादेकमेषनिष्ठां गतिं प्रत्यपरस्य विश्लेषावधित्वमस्त्येव । मेषावधिको यः उत्तरदेशसंयोगस्तदनुकूलो मेषाभिन्नाश्रयको वर्तमानो व्यापारः। पर्वतात्पततोऽश्वात्पतति चैत्रः । पर्वताभिन्नावधिकोऽधोदेशसंयोगानुकूलो यो व्यापारस्तदाश्रयो योऽश्वस्तदवधिकोऽधोदेशसंयोगानुकूलएकचैत्राभिन्नाश्रयको वर्तमानो व्यापारः । विश्लेषश्च कश्चिन्मानसोऽपि क्वचिदध्याहृतक्रियापेक्षयाऽपि । अधर्माज्जुगुप्सते । स्वार्थाद्धीयत इत्यादौ मानसाधर्मविश्लेषाध्याहृतनिःसरणक्रियापेक्षया विश्लेषयोरवधित्वस्य सत्त्वात् ॥ इति पञ्चमी ॥ ८ ॥

**सम्बन्धे षष्ठी ॥ राज्ञः पुरुषः(क) ॥ ९ ॥**

( मु० ) संबन्धे षष्ठी ॥ विशेष्यविशेषणविश्लिष्टः संबन्धः । आह च । एतौ सं-

'निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा । अपेक्षितक्रियं चेति त्रिधापादानमुच्यते ॥'

यत्रोपात्तधातुनाऽपायलक्षणः संज्ञाविषयो निर्दिश्यते तन्निर्दिष्टविषयम् । यथा—'विद्यालयादागच्छति । यत्र धातुर्धात्वन्तरार्थाङ्गं स्वार्थमाह तदुपात्तविषयम् । यथा–'बलाहकाद् विद्योतते विद्युत् । यत्र क्रिया न श्रूयते प्रमाणान्तरेण तु प्रतीयते तदपेक्षितक्रियम् । यथा–आगच्छन्तं दण्डिनं प्रत्यक्षेण पश्यन्नाह–। 'कुतो दण्डी' इति । सोपि तदेव प्रत्यक्षमागमनमुपजीवन्नाह–'प्रयागात्' इति ॥ अत्रायमाशयः–विश्लेषद्विधा । शाब्दो मानसश्च । आद्यो'हिमवतोऽवतरति गङ्गा । द्वितीयः–अधर्माज्जुगुप्सते विरमति प्रमाद्यति वा । अत्र संश्लेषकविश्लेषाभावान्मानसः । तत एव पञ्चमी तन्त्रान्तरे तु जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' इति वार्तिकं भूत्वोदाहृतम्–पापाज्जुगुप्सते । विरमति । प्रमाद्यति' इति । एवं सर्वत्र पञ्चम्यनेनैव यथासम्भवं मृग्या । सर्वत्रात्र बुद्धिकल्पनातो विश्लेषोऽस्तीति विश्लेषावधावेव पञ्चमी सिद्धेति न तदर्थं यत्नान्तरं कृतं सूत्रकृतेति माधवः ।

( क ) सम्बन्धे षष्ठीति । कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव । सतां गतम् । सर्पिषो जानीते । एधोदकस्योपस्कुरुते । भजे शम्भोश्चरणयोः । फलानां तृप्तः ।

बद्धौ इति प्रतीतिजनकः संबन्धः । समानार्थो न नियतज्ञानाभावात् । स संबन्धो द्विविधः । क्रियाकारकसंबन्धो द्रव्यगुणसंबन्धश्चेति । क्रियाकारकसंबन्धोऽपि द्विविधः । विशेषः सामान्यं चेति । तत्र विशेषे कर्मकत्वादिरूपे संबन्धे विहिता अपवादभूता द्वितीयाद्या विभक्तः । सामान्यसंबन्धे तु षष्ठी । उक्तं च । "संबन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः । श्रुतायामश्रुतायां च क्रियायां सोऽभिधीयते" ॥ नटस्य शृणोति । माषाणामश्नाति । नटसंबन्धिश्रवणानुकूल एककर्तृको व्यापारः । माषसंबन्धिभोजनानुकूल एककर्तृको व्यापारः । विशेषविवक्षायां तु नटेन गीतं शृणोति । माषानश्नातीति ॥ द्रव्यगुणसंबन्धो यथा । राज्ञः पुरुषः । अत्र सेव्यसेवकरूपः ॥ राज्ञः पुत्रः । अत्र पितृपुत्ररूपः ॥ तन्तूनां पटः । अवयवावयविरूपः ॥ पटस्य रूपम् । गुणगुणिरूपः ॥ माषाणां राशिः । समूहसमूहिरूपः ॥ कुरूणां राजा । पाल्यपालकरूपः ॥ चैत्रस्य वाहनम् । वाह्यवाहकरूपः ॥ शब्दस्यार्थः । अत्र वाच्यवाचकरूपः ॥ चक्षुषो विषयो रूपम् । अत्र बोध्यबोधकरूपः ॥ अग्नेर्धूमः । अत्र व्याप्यव्यापकरूपः । पटस्याभावः । अत्र प्रतियोग्यनुयोगिरूपः ॥ उपगोरपत्यम् । अत्रापत्यापत्यवद्रूपः ॥ कुशूलस्यान्नम् । अत्राधाराधेयरूपः । इत्यादि ॥ ननु सम्बन्धस्योभयनिष्ठत्वात् कस्मात्षष्ठी । उच्यते । विशेषणात्षष्ठी भवति । उक्तं च । "भेद्यभेदकयोः श्लिष्टः संबन्धोऽन्योन्यमीक्ष्यते । द्विष्ठो यद्यपि संबन्धः षष्ठ्युत्पत्तिस्तु भेदकात्" ॥ भेद्यभेदकयोः स्वरूपं यथा । "परार्थे स्वार्थनिक्षेपादप्रधानं विशेषणम् । विशेष्यं तु प्रधानं स्यात्स्वार्थस्यैव प्रकाशनात्" ॥ (क)ननु शुक्लः पट इत्यत्रापि विशेषणे षष्ठी स्यात् । मैवं वद । विशेषणस्याभेदविवक्षातो न षष्ठी । विशेषणस्य भेदविवक्षायां तु षष्ठी भवत्येव । उक्तं च । "नाम्नो द्विधैव संबन्धः सर्वथा क्येष्ववस्थितः । सामानाधिकरण्येन षष्ठ्या वापि क्वचिद्भवेत्" ॥ अत्र प्रकृत्यर्थः प्रत्ययार्थे संबन्धे विशेषणम् । प्रत्ययार्थः संबन्धस्तु पुरुषे विशेषणं भवति । राज्ञः पुरुषः । राजनिरूपितसेवकत्वसंबन्धवान्पुरुषः ॥ इति षष्ठी ॥ १ ॥

( त० ) सम्बन्धे षष्ठीति ॥ एतौ संबद्धाविति प्रतीतिजनकः संबन्धस्तत्र षष्ठीत्यर्थः । स च द्विविधः । क्रियाकारकसंबन्धद्रव्यगुणसंबन्धभेदात् । आद्यो द्विविधः । सामान्यं विशेषश्च । विशेषः कर्मत्वादिरूपः । तत्र द्वितीयादिरपवादः । सामान्ये षष्ठी । तद्यथा । नटस्य शृणोति । नटसंबन्धिश्रवणानुकूलो वर्तमानो व्यापारः । विशेषे तु नटेन गीतं शृणोति । नटाभिन्नाश्रयको यो व्यापारस्तत्साध्यगीताभिन्नाश्रयं यत् गानतानादि तदनुकूल एकाभिन्नाश्रयो वर्तमानो व्यापारः । अन्त्यं दर्शयति—राज्ञ इति ॥ राजसंबन्धवान् पुरुष इत्यर्थः । संबन्धश्चात्र सेव्यसेवकरूपः । एवमन्यत्राप्यूह्यम् ॥ नन्वत्र संबन्धस्योभयनिष्ठत्वात्कथं षष्ठी एकस्मात्कुतो वेति चेत्सत्यम् । विशेषणस्याप्रधानत्वेन ततः षष्ठी । राज्ञः पुरुष इत्यत्र प्रकृत्यर्थो विशेषणं पुरुषस्तु नामार्थमात्रनिष्ठ एव प्रतिपाद्यते न विशेषणत्वेन । यदा तु विशेषणत्वेन विवक्षितस्तदा षष्ठी भवत्येव । पुरुषस्य

---

( क ) विशेषणात् षष्ठीति । राज्ञः पुरुष इत्यादौ क्रियायोगिनः पुरुषादयः प्रधानभूता राजादिभिरप्रधानभूतैर्विशिष्यन्त इति राज्ञ इत्यादौ षष्ठी । पुरुषादौ तु लिङ्गार्था प्रथमैव । यदा पुनः पुरुषो विशेषणं तदा पुरुषस्य राजेत्येव । यदा चोभावपि अप्रधानत्वेन विवक्ष्येते तदोभाभ्यामपि षष्ठ्येव । यथा—राज्ञः पुरुषस्य वस्त्रमिति ।

राजेति। यथा। "परार्थं स्वार्थनिक्षेपादप्रधानं विशेषणम्। विशेष्यं तु प्रधानं स्यात्स्वार्थस्यैव प्रकाशनात्" इति ॥ शुक्लः पट इत्यत्र तु अभेदविवक्षणान्न षष्ठी। भेदविवक्षायामेव षष्ठीति विधानात्। राहोः शिर इत्यत्र तु सतोऽप्यभेदस्याविवक्षा ॥ यथाऽनुदरा कन्येति। भेदवतो वस्तुनः असतोऽप्यभेदस्य विवक्षा यथा। समुद्रः कुण्डिका। जलाधिक्यात्कुण्डिकायां समुद्रत्वम्। अगस्त्यापेक्षया समुद्रस्यापि कुण्डिकात्वम्। इति षष्ठी ॥९॥

**आधारे सप्तमी** ॥ औपश्लेषिकः सामीपिकोऽभिव्यापको वैषयिको नैमित्तिक औपचारिकश्चेति षोढा सः ॥

कटे शेते कुमारोऽसौ वटे गावः सुशेरते।
तिलेषु विद्यते तैलं हृदि ब्रह्मामृतं परम् ॥
युद्धे संनह्यते धीरोऽङ्गुल्यग्रे करिणां शतम् ॥ १० ॥

(मु०) **आधारे सप्तमी** ॥ आध्रियन्ते क्रिया अस्मिन्नित्याधारः। संज्ञायामकर्तरि चेत्यधिकरणे घञ्। अधिकरणमित्यर्थः (क)। स आधारः षड्विधः अस्येति षोढा। अन्यत्र सिद्धयोराधाराधेययोः प्रादेशिकः सम्बन्ध उपश्लेषः। उप उपरि श्लेषः उपश्लेषः

(क) उक्तं च पाणिनिना—'आधारोऽधिकरणम्' इति। कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणसंज्ञः स्यात्।, कर्तृकर्मान्यतरद्वारा क्रियाश्रयत्वे सति तत्क्रियोपकारकत्वमधिकरणत्वमिति नैयायिकाः। उपकारकत्वं तु निष्पादकत्वम् ॥ तेन पीठे स्थित्वा गृहे स्थाल्यामोदनं पचतीत्यत्र सप्तम्यर्थोऽधिकरणत्वम्। कर्तृप्रभृतिष्वतिव्याप्तिवारणाय सत्यन्तम्। गेहस्य तु पाकक्रियाश्रयत्वं तदुपकारकत्वञ्च कर्तृद्वारा। स्थाल्याश्चौदनरूपकर्मद्वारा। क्रियाश्रयत्वं तदुपकारकत्वञ्चेति बोध्यम्। पीठस्य तु स्थितिक्रियापेक्षयेति निष्कर्ष इति कृष्णः। **षड्विध इति**। केचित्तु त्रैविध्यं मन्यन्ते आधारस्य ॥ आधारत्रितयपक्षे सामीपिकनैमित्तिकौपचारिकानामौपश्लेषिकेऽन्तर्गतिः। तदुक्तम्—

"कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम्। उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्।
आधारस्त्रिविधो ज्ञेयः कटाकाशतिलेषु च। निमित्तादिप्रभेदाच्च षड्विधः कैश्चिदिष्यते" ॥

अत्र "कैश्चिदिष्यते" इति वचनात् षड्विधपक्षस्यापि नाप्रामाण्यम्। इति ॥

**औपश्लेषिक इति**। आधाराधेययोरभिव्याप्य वृत्तिसम्बन्ध उपश्लेषः। तत्र भव औपश्लेषिकः। यथा—'कटे शेते' इति मूलम्। कटाभिन्नाधारको निद्रानुकूल एककुमाराभिन्नाश्रयको वर्तमानो व्यापारः। **सामीपिक इति**। समीपः सान्निध्यं संयुक्तसंयोगाल्पकत्वम्, तत्र भवः सामीपिकः। यथा—'वटे गाव' इति मूलम्। एकवटाभिन्नाधारकनिद्रानुकूलो बहुगोभिन्नाश्रयकवर्तमानो व्यापारः। **अभिव्यापक इति**। पृथग्देशयोराधाराधेययोः। सर्वावयवसम्बन्धिकोऽभिव्यापकः। यथा—'तिलेष्विति' मूलम्। बहुतिलाभिन्नाधारक आत्मधारणानुकूल एकतैलाभिन्नाश्रयको वर्तमानो व्यापारः। **वैषयिक इति**। आप्तिरूपसंयोगसमवायातिरिक्तसम्बन्धेन यदधिकरणं तद्वैषयिकम्। यथा—हृदि ब्रह्मेति' मूलम्। हृदयाभिन्नाधारक आत्मधारणानुकूलः स्फुरणानुकूलो वा एकब्रह्माभिन्नाश्रयको वर्तमानोव्यापारः। **नैमित्तिक इति**। निमित्तं हेतुस्तत्र भवं नैमित्तिकं निमित्तं फलं तदस्यास्तीति वा नैमित्तिकः। यथा—'युद्धे सन्नह्यते धीरः" इति मूलम्। कवचसन्नहनस्य युद्धफलकत्वात् तन्निमित्तम्। युद्धाभिन्नाधारकः कवचबन्धनानुकूल एकधीराभिन्नाश्रयको वर्तमानो व्यापारः। **औपचारिक इति**। उपचारो नामारोपः। तत्र भव औपचारिकः। यथा—'अङ्गुल्यग्रे करिणां शतमिति' मूलम्। अङ्गुल्यग्राभिन्नाधारक आत्मधारणानुकूलः करिसम्बन्धिशताभिन्नाश्रयको वर्तमानो व्यापारः। करिभूम्योराधाराधेयभावोऽङ्गुल्यग्रे आरोप्यत इति बोध्यम्।

उपश्लेषोऽस्यास्तीति उपश्लेषो भव इति वा औपश्लेषिकः । 'अइकौ च मत्वर्थे' इतीकः। णिता वेति णित्वाद्वृद्धिः । भवार्थं इको वा ॥ सामीप्यं सांनिध्यम् । सामीप्ये भवः सामीप्यमस्यास्तीति वा सामीपिकः । केनेयेका इतीकः । अइकौ चेति वा इकः ॥ अभिप्रदेशयोराधाराधेययोः सर्वावयवसंबन्धिकः अभिव्यापकः । अभितः सर्वतो व्याप्यते आधेयेनेत्यभिव्यापकः । कर्मणि घञ् । ततः स्वार्थे कः ॥ अन्यत्र भावो विषयः । विषये भवो वैषयिकः । केनेयेका इति इकः ॥ निमित्तं हेतुः । निमित्ते भवो नैमित्तिकः । केनेयेका इति इकः । निमित्तं फलं तदस्यास्तीति वा अइकौ चेतीकः ॥ अन्यत्र विद्यमानस्य सम्बन्धस्यान्यत्रारोपः उपचारः । उपचारे भव औपचारिकः । केनेयेका इतीकः । उपचारोऽस्यास्तीति वा । अइकौ चेतीकः ॥ अत्राधिकरणे कारके सप्तमी स्यात् । अत्र सप्तम्या आश्रयोऽर्थः । प्रकृत्यर्थस्त्वभेदेन संसर्गेणाश्रये विशेषणम् । आश्रयस्तु क्रियायां विशेषणं भवति । कारकाणां क्रिययैवान्वयात् । उक्तं च । "आश्रयोऽवधिरुद्देश्यः सम्बन्धः शक्तिरेव वा । यथायथं विभक्त्यर्थाः सुपां कर्मेति चाक्रमतः" ॥ १ ॥ कर्मणि द्वितीया । कर्तृसाधनयोस्तृतीया । आधारे सप्तमी । नामाश्रयाऽर्थो निरूप्यभेदाभेदः । अवधिः पञ्चम्यर्थः । उद्देश्यः चतुर्थ्यर्थः । सम्बन्धः षष्ठ्यर्थः । शक्तिः प्रथमार्थः । यथासंख्यं षण्णामुदाहरणान्याह । असौ कुमारः कटे शेते । गावः वटे सुशेरते स्वपन्ति । तैलं तिलेषु विद्यते । हृदि अमृतं सुखरूपं परमुत्तमं निरुपाधिकं ब्रह्म वर्तते । हृदयब्रह्मणोः प्रकाश्यप्रकाशकरूपः सम्बन्धः । धीरः संनह्यते युद्धे कवचबन्धनस्य युद्धफलकत्वात्तन्निमित्तम् ॥ करिणां शतमङ्गुल्यग्रे वर्तते । करिभूम्योराधाराधेयरूपः सम्बन्धः अङ्गुल्यग्रे आरोप्यते ॥१०॥

( त० ) आधारे सप्तमीति ॥ आध्रियते क्रियाऽस्मिन् इत्याधारः । कर्तृकर्मद्वारा क्रियाधारत्वं न तु (क)साक्षात् । आधारस्य षड्विधत्वमाह—औपश्लेषिक इत्यादि ॥ उप उपरिश्लेषः संयोगः सोऽस्यास्तीति अइकावितीकः । णितो वेति णित्वाद्वृद्धिः ॥ समीपे भवः सामीपिकः केनेयेका इतीकः । अभितः सर्वतो व्याप्यते आधेयैरिति अभिपूर्वादाप्नोतेः कर्मणि घञन्तात्स्वार्थे कः ॥ अपृथग्देशयोराधाराधेययोः सर्वावयवसम्बन्धिकः ॥ विषयः प्रकाशनसामर्थ्यं तदस्यास्तीति पूर्ववत्प्रक्रिया ॥ निमित्तं हेतुस्तत्र भवः फलं वा तदस्यास्तीति वा पूर्ववत् ॥ अन्यत्र विद्यमानस्य सन्बन्धस्यान्यत्रारोप उपचारः । तत्र भवः सोऽस्यास्तीति वौपचारिकः ॥ निमित्तप्रभेदाच्च 'षड्विधः कैश्चिदिष्यते' इति (ख)वचनादस्य पक्षस्यापि प्रामाण्यम् । उदाहरणान्याह । कटे शेते कुमारोऽसौ । एककटाभिन्नाधारको निद्रानुकूल एककुमारभिन्नाश्रयकवर्तमानो व्यापारः ॥ वटे गावः सुशेरते । एकवटाभिन्नाधारकनिद्रानुकूलो बहुगोऽभिन्नाश्रयकवर्तमानो व्यापारः ॥ तिलेषु विद्यते तैलम् । बहुतिलाभिन्नाधारक आत्मधारणानुकूल एकतैलाभिन्नाश्रयको वर्तमानो व्यापारः । हृदि ब्रह्मामृतं परं विद्यते इति योज्यम् । हृदयाभिन्नाधारक आत्मधारणानुकूलः स्फुरणानुकूलो वा एकब्रह्माभिन्नाश्रयको वर्तमानो व्यापारः । अमृतं सुखरूपं मरणशून्यं वा । परमुत्तमम् उपाधिशून्यमित्यर्थः । द्वयमपि ब्रह्मविशेषणम् । प्रकाश्यतासम्बन्धेन

( क ) अस्य विशेषसमालोचना उपर्युक्ताधारलक्षणव्याख्याटिप्पण्यां कृता ।

( ख ) 'कैश्चिदिष्यते' इति सम्पूर्णश्लोकः प्रागुक्तः ।

ब्रह्म मनसि वर्तते(क) ॥ युद्धे सन्नह्यते धीरः । युद्धाभिन्नाधारकः कवचबन्धनानुकूलः एकधीराभिन्नाश्रयको वर्तमानो व्यापारः । कवचबन्धनस्य युद्धफलकत्वात्तन्निमित्तम् ॥ अङ्गुल्यग्रे करिणां शतम् । विद्यते इत्यस्यानुषङ्गः । अङ्गुल्यग्राभिन्नाधारक आत्मधारणानुकूलः करिसंबन्धिशताभिन्नाश्रयको वर्तमानो व्यापारः । करिभूम्योराधाराधेयभावोऽङ्गुल्यग्रे आरोप्यते ॥ औपश्लेषिकत्वादिकं तु शाब्दबोधे न भासते अन्यपदोच्चारणात्तु भासते गौर्वाहीक इत्यत्रोपसर्जनत्ववत् ॥ १० ॥

( क्रियालक्षणं भावस्तत्रापि सप्तमी ) वर्षति देवे चोर आयातः ॥ गोषु दुह्यमानासु गतः ॥ ११ ॥

( म० ) क्रियालक्षणं भावस्तत्रापि सप्तमी ॥ भवनं भावः क्रिया प्रसिद्धैव ग्राह्या व्याख्यानात् । भावोऽस्ति यस्मिन् स भावः । मत्वर्थीयोऽप्रत्ययः । प्रसिद्धक्रियावानित्यर्थः । प्रसिद्धक्रियावांस्तु सापेक्षत्वादप्रसिद्धक्रियावन्तं संलक्ष्यैव भवति । अत आह । क्रियालक्षणम् । क्रियायां प्रसिद्धं क्रियाया लक्षणं चिह्नम् । निराश्रयायाः क्रियाया असंभवादाश्रय आक्षिप्यते । अप्रसिद्धक्रियावतो लक्षणमित्यर्थः । लक्षणरूपा प्रसिद्धा लक्षणया वा प्रसिद्धैव संभवति प्रसिद्धया अप्रसिद्धायाः साधनौचित्यात् । लक्ष्यलक्षणभावसंबन्धे षष्ठ्यां प्राप्तायां सप्तमी विधीयते । अप्रसिद्धक्रियावल्लक्षणे प्रसिद्धक्रियावति कर्तरि कर्मणि च सप्तमी स्यादित्यर्थः ॥ कर्तर्युदाहरणमाह–देवे मेघे वर्षति सति चोर आयातः । अत्र देवनिष्ठा प्रसिद्धा क्रिया सा चोरनिष्ठामप्रसिद्धां क्रियां लक्षयति वर्षतीत्यत्र लक्षणहेत्वोः क्रियाया इति सूत्रेण कर्तरि शतृप्रत्ययः । कर्ता च देवः अतस्तयोः सामानाधिकरण्यात् सप्तमी ॥ कर्मण्युदाहरणमाह । गोषु दुह्यमानासु सतीषु चोरो गतः । दुह्यमानास्वित्यत्र कर्मणि यक् ॥

इति सप्तमी ॥ ११ ॥

( त० ) क्रियालक्षणं भाव इति ॥ भवनं भावः क्रिया । भावोऽस्यास्तीति मत्वर्थीयोऽप्रत्ययः । लक्ष्यत इति लक्षणम् । क्रियायां लक्षणं क्रियालक्षणं बोधकमिति यावत् । अप्रसिद्धक्रियाबोधिका या प्रसिद्धक्रिया तद्वतः सप्तमीत्यर्थः ॥ वर्षतीत्यादि ॥ देवाभिन्नाश्रयिका या वर्षणक्रिया तयोपलक्षितभूतं यदागमनं तदाश्रयश्चोर इत्यर्थः । इतोऽन्यार्थे द्वितीयादिसिद्ध्यर्थं शेषा इत्यस्य योगविभागः कार्यः ॥

इति सप्तमी ॥

( विनासहनमस्तेनोनिर्द्धारणस्वाम्यादिभिश्च ) एतैर्योगे द्वितीयाद्या विभक्तयः ॥ विनादियोगे द्वितीया । विना पापं सर्वं फलति । अन्तरेणाक्षिणी किं जीवितेन । अन्तरा त्वां मां हरिः । जपमनु प्रावर्षत् । अनु हरिं सुराः भक्तो हरिमभि । उपहरिं सुराः । नदीमन्ववसिता सेना ।

---

( क ) ब्रह्मेति । 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद् ब्रह्म' इति, 'सत्यं ज्ञानमानन्दं ब्रह्म' इत्यादिश्रुत्या च जगत्कारणभूतं सत्यरूपं ज्ञानरूपमानन्दरूपं ब्रह्म ॥ ननु 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' 'अवाङ्मनसगोचरम्' इत्यादिनानुपपन्नं ब्रह्मणो मनोगोचरत्वमित्यत आह—प्रकाश्यतासम्बन्धेनेति । वस्तुतस्तु मनसि वर्तत इति भाक्तप्रयोगः ।

अति देवान् कृष्णः । अभितो ग्रामम् । सर्वतो नगरम् । धिग् जाल्मम् । उपर्युपरि पर्वतम् । अध्यधि लोकम् । अध्यधि सुखम् । अधोऽधो ग्रामम् । उभयत कृष्णम् ॥ एवं परितःसमयानिकषाहाप्रतिपरियोगेपि ॥ १२ ॥

( छ० ) अथोपपदविभक्तिमाह-**विनासहनमस्कृतेनिर्द्धारणस्वाम्यादिभिश्च** ॥ विना च सहश्च नमश्च ऋते च निर्द्धारणं च स्वामी च ते विनासहनमस्कृतेनिर्द्धारणस्वामिनः ते आदयो येषां ते विनासहनमस्कृतेनिर्द्धारणस्वाम्यादयस्तैर्विनासहनमस्कृतेनिर्द्धारणस्वाम्यादिभिः । 'द्वन्द्वान्ते श्रूयमाणः प्रत्येकं संबध्यते' इत्यादिशब्दः प्रत्येकं योज्यः । शेषा इत्यनुवर्तते । शेषा द्वितीयाद्य विभक्तयो यथाक्रममेषां योगे भवन्ति ॥ विनादियोगे द्वितीया । पापं विना सर्वं फलति । पापस्याभावे सर्वं कर्म फलप्रदं भवतीत्यर्थः ॥ अक्षिणी अन्तरेण । नेत्रयोरभावे चक्षुषी विना इत्यर्थः ॥ अन्तरेणेति निपातो मध्यार्थकोऽपि यथा । "मृणालसूत्रामलमन्तरेण स्थितश्चलच्चामरयोर्द्वयं सः" (क) इत्यत्र चलच्चामरयोर्द्वयस्य मध्ये स्थित इत्यर्थः ॥ अन्तरा त्वां मां तव मम च मध्ये इत्यर्थः । योगे इति किम् । अन्तरा त्वां मां हरेर्मूर्तिः । अत्र हरिशब्दान्न द्वितीया अन्तराशब्देनान्वयाभावात् ॥ हेतुमदहीनार्थकानुयोगे द्वितीया । यथा । जपमनु मेघः प्रावर्षत् । हेतुभूतजपोपलक्षितं वर्षणमित्यर्थः । हेतौ तृतीयाबाधिका द्वितीयाऽत्र ॥ नदीमनु नद्या सह सेना अवमिता । संबद्धेत्यर्थः(ख) । षिञ् बन्धने । अस्मात् क्तः । षष्ठीबाधिका द्वितीयाऽत्र ॥ अनुहरिं सुराः हरेर्हीना इत्यर्थः(ग) ॥ भक्तो हरिमभि हरिमभिवर्तत इत्यर्थः ॥ उत्कृष्टादेव द्वितीया नापकृष्टात् । शक्तिस्वभावात् ॥ हीनार्थकोपयोगे द्वितीया यथा । उपहरिं सुराः हरेर्हीना इत्यर्थः । अत्राप्युत्कृष्टादेव द्वितीया नापकृष्टात् ॥ अतिक्रमणपूजार्थकातियोगे द्वितीया यथा । उचितादधिकस्यानुष्ठानमतिक्रमणम् । अतिदेवान् कृष्णः । देवानतिक्रान्तो देवानां पूज्यश्चेत्यर्थः । अभितो ग्रामं ग्रामस्य पार्श्वद्वये इत्यर्थः ॥ सर्वतो ग्रामं ग्रामस्य समन्तादित्यर्थः ॥ जाल्मं मूर्खं धिक् तस्य निन्दनेत्यर्थः ॥ उपर्युपरि पर्वतम् । पर्वतस्योर्ध्वमित्यर्थः ॥ अध्यधि दुःखं सुखस्योपरिष्टात्समीपकाले दुःखमित्यर्थः ॥ अधोऽधो ग्रामं ग्रामस्याधस्तात् समीपदेशे इत्यर्थः ॥ उभयतः कृष्णम् । कृष्णस्य पार्श्वद्वये इत्यर्थः ॥ परितः सर्वत इत्यर्थः ॥ समया-निकषा-निपातौ समीपार्थकौ । "विलङ्घ्य लङ्कां निकषा हनिष्यति" इति माघः(घ) ॥ हा मूर्खम् । तस्य शोच्यतेत्यर्थः ॥ 'बुभुक्षितं न प्रतिभाति किंचित् ।' बुभुक्षितस्य पुरुषस्य किंचित् प्रतिभाति नेत्यर्थः ॥ १२ ॥

---

( क ) सम्पूर्णश्लोकोऽयम्—

'मृणालसूत्रामलमन्तरेण स्थितश्चलच्चामरयोर्द्वयं सः ।
भेजेऽभितः पातुकसिद्धसिन्धोरभूतपूर्वां रुचमम्बुराशेः' ॥ तृ० स० श्लो० ३ ॥

( ख ) नदप्रतियोगिकसाहित्यसम्बन्धविशिष्टा सेनेत्यर्थः ।

( ग ) हरेर्हीनेति । स्वावधिकापकर्षरूपहीनत्वसंम्बन्धोऽनुद्योत्यो द्वितीयाविभक्तेरर्थः ।

( घ ) सम्पूर्णश्लोको यथा—

'स्मरत्यदो दाशरथिर्भवन् भवानमुं वनान्तादवनितापहारिणम् ।
पयोधिमाबद्धचलज्जलाविलं विलङ्घ्य लङ्कां निकषा हनिष्यति' ॥ इति ॥ प्र० स० श्लो० ६८॥

( त० ) कारकविभक्तिं दर्शयित्वोपपदविभक्तिं दर्शयति–विनासहेत्यादि ॥ विना च सहश्च नमश्च ऋते च निर्द्धारणं च स्वामी च ते आद्यो येषामिति द्वन्द्वगर्भो बहुव्रीहिः । द्वन्द्वान्ते श्रूयमाणत्वादादिशब्दः प्रत्येकं संबध्यते । द्वितीयादीनां चात्र यथाक्रममन्वयः ॥ **विनावियोगे** इति ॥ **विना पापमिति** । पापसंबन्धाभावे सर्वं कर्म फलप्रदं भवतीत्यर्थः । द्वितीयाद्या उपपदविभक्तयः षष्ठ्यपवादाः ॥ **जपमनु** इति॥ हेतुभूतजपोपलक्षितमतीतकालमेकाश्रयकं वर्षणमित्यर्थः ॥ **उपहरिमिति** ॥ हरेर्हीना इत्यर्थः ॥ **नदीमिति**॥ नद्या सह संबद्धेत्यर्थः । षिञ् बन्धने क्तः ॥ **अतिदेवानिति** ॥ देवानां पूज्य इत्यर्थः॥ **अभित** इति ॥ उभयत इत्यर्थः ॥ **धिगिति** ॥ निर्भर्त्सननिन्दयोः ॥ **उपरीति** ॥ पर्वतस्योपरिष्टात्समीपे देश इत्यर्थः ॥ **अधीति** ॥ सुखस्योपरिष्टात्समीपकाले दुःखमित्यर्थः॥ **अध इति** ॥ ग्रामस्याधस्तात्समीपदेश इत्यर्थः ॥ १२ ॥

**( कालाध्वनोर्नैरन्तर्ये )** मासमधीते । क्रोशं पर्वतः । मासं गुडधानाः । मासं कल्याणी । क्रोशं कुटिला नदी ॥ नैरन्तर्ये किम् । मासस्य द्विरधीते । क्रोशस्यैकदेशे पर्वतः(क) ॥ १३ ॥

( सु० ) कालाध्वनोनैरन्तर्ये ॥ कालश्च अध्वा च कालाध्वानौ तयोः कालाध्वनोः । निर्गतमन्तरं यस्मात्तत् निरन्तरं निरन्तरस्य भावो नैरन्तर्यं तस्मिन्नैरन्तर्ये । क्रियागुणद्रव्यैः सह कालाध्वनोर्निरन्तरसंबन्धे कालाध्ववाचकाद् द्वितीया स्यात् ॥ मासमधीते । निरन्तरा मासस्याध्ययनक्रियेत्यर्थः॥ क्रोशं पर्वतः । निरन्तरः क्रोशस्य पर्वत इत्यर्थः ॥ मासं गुडधानाः । निरन्तरा मासस्य गुडेन मिश्रा धानाः गुडधानाः । "धाना भृष्टयवे स्त्रियाम्" इत्यमरः ॥ मासं कल्याणी । निरन्तरा मासस्य शोभनगुणवती ॥ क्रोशमधीते । निरन्तरा क्रोशस्याध्ययनक्रिया ॥ क्रोशं कुटिला नदी । निरन्तरा क्रोशस्य वक्रा नदी ॥ **लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः** ॥ लक्षणेत्थंभूताख्यानभागवीप्सार्थकानां प्रतिपर्यनूनां योगे द्वितीया । लक्षणे यथा । वृक्षं प्रति पर्यनु वा विद्योतते विद्युत् ॥ लक्ष्यलक्षणभावसंबन्धं प्रत्यादयो द्योतयन्त्यत्र(ख) ॥ इत्थंभूताख्याने । भक्तो विष्णुं प्रति पर्यनु वा । विष्णोर्भक्तश्च विषयविषयिभावसंबन्धं प्रत्यादयो द्योतयन्त्यत्र । भक्तः कृष्णस्य कंचित्प्रकारं भक्तत्वं प्राप्त इत्यर्थः (ग) । भागे यथा । लक्ष्मीः कृष्णं प्रति पर्यनु वा । लक्ष्मीरूपस्य भागस्य कृष्णेन सह स्वस्वामिसंबन्धः । तं प्रत्यादयो द्योतयन्त्यत्र । कृष्णस्य भाग इत्यर्थः(घ) ॥ वीप्सायाम् । वृक्षं प्रति पर्यनु वा वृक्षं वृक्षमित्यर्थः ॥ लक्षणेत्थंभूताख्यानवीप्सार्थकाभियोगे

---

( क ) **कालाध्वनेति** । येन कालेन अध्वना वा गुणक्रियाद्रव्यैरभावे चावयवान्तरेण निरन्तरसन्निकर्षस्तद्वृत्तिभ्यामेव सम्बन्धेन द्वितीयेत्यर्थः । तेन मासं शयनाभाव इत्यपि भेत्स्यति । **मासमिति** । मासपदेन सावयवत्रिंशद्दिनसमूहः कथ्यते । द्वितीयाया अर्थो व्यापकत्वम् ।

( ख ) **वृक्ष प्रतीति** । वृक्षसम्बन्धिद्योतनमर्थः । सम्बन्धश्च लक्ष्यलक्षणभावः । वृक्षप्रकाशेन हि तत्समीपदेशविशेषावच्छिन्ना विद्युद्दोध्यत इति वृक्षो लक्षणम् ।

( ग ) **इत्थं भूतेति** । इत्थं किञ्चित्प्रकारं भूतः प्राप्त इति इत्थम्भूतः । इत्थंभूत आख्यायतेऽनेनेतीत्थं भूताख्यानम् ।

( घ ) **कृष्णस्य भाग इति** । कृष्णस्वामिकेति बोधः ॥ अथ वा–स्वनिष्ठस्वामित्वनिरूपितस्वत्वसम्बन्धेन कृष्णविशिष्टा लक्ष्मीरिति ।

द्वितीया ॥ लक्षणे यथा । हरिमभि वर्तते भुक्तिः । हरिं लक्षयित्वेत्यर्थः । लक्ष्यलक्षणभाव-सम्बन्धोऽत्र । इत्थंभूताख्याने । भक्तो हरिमभि । विषयविषयिभावसंबन्धोऽत्र । हरेः कंचित्प्रकारं भक्तत्वं प्राप्त इत्यर्थः ॥ वीप्सायाम् । देवमभिनमति । देवंदेवमित्यर्थः ॥ पृथग्नानादक्षिणेन उत्तरेण इत्यादियोगेऽपि द्वितीया ॥ १३ ॥

( त० ) कालाध्वनोरिति ॥ कालश्च अध्वा च कालाध्वनौ तयोः । निर्गतमन्तरं यस्मात्तन्निरन्तरम् । तस्य भावः नैरन्तर्यं तस्मिन् । क्रियागुणद्रव्यैः कालाध्वनोः निरन्तरं संबन्धे कालाध्वभ्यां द्वितीया ॥ मासमिति ॥ निरन्तरं माससंबन्धी एकाश्रयोऽव्यवनानुकूलो व्यापारः ॥ मासं कल्याणीति ॥ अव्यवच्छिन्नमाससंबन्धिशोभनगुणवती ॥ मासं गुडेति ॥ अव्यवच्छिन्नमाससंबन्धी इत्यर्थः ॥ १३ ॥

**( अधिपूर्वाणां शीङ्स्थाऽऽसामाधारः कर्म )** अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः (क) ॥ १४ ॥

( सु० ) अधिपूर्वाणां शीङ्स्थाऽऽसामाधारः कर्म ॥ शीङ् स्वप्ने । ष्ठा गतिनिवृत्तौ । आस उपवेशने । अधिपूर्वकाणामेषामाधारः कर्मसंज्ञकः स्यादनुक्ते कर्मणि द्वितीयेत्यर्थः ॥ १४ ॥

( त० ) अधिशेते इत्यादि ॥ अत्र त्रयाणां फलं स्थितिः । अवस्थानजन्यवैकुण्ठनिष्ठसंयोगानुकूल एकहर्यभिन्नाश्रयको वर्तमानो व्यापारः ॥ १४ ॥

**( अभिनिपूर्वस्य विशः )** अभिनिविशते सन्मार्गम् (ख) ॥ १५ ॥

( सु० ) अभिनिपूर्वस्य विशः ॥ द्वन्द्वेऽल्पस्वरप्रधानेतिनेः पूर्वनिपाते कर्तव्ये विपरीतोच्चारणमीदृशसङ्घातविवक्षार्थम् । अभिनीत्येतत्सङ्घातपूर्वस्य 'विश प्रवेशने' इत्यस्याधारः कर्मसंज्ञकः स्यात् ॥ १५ ॥

( त० ) अभिनि इति ॥ नेरल्पस्वरत्वेन पूर्वनिपाते कर्तव्ये विपरीतोच्चारणमीदृशसमुदायविवक्षार्थम् । तेनेह न । "निविशते यदि शूकशिखा पदे" इति(ग) ॥ अभिनिविशत इति । अभिनिवेशजन्यसन्मार्गाभिन्नाश्रयः सम्बन्धस्तदनुकूल एकाभिन्नाश्रयको-वर्तमानो व्यापारः ॥ १५ ॥

**( उपान्वध्याङ्पूर्वस्य वसः )** उपवसति अनुवसति अधिवसति आवसति वा वैकुण्ठं हरिः (घ) ॥ १६ ॥

( सु० ) उपान्वध्याङ्पूर्वस्य वसः ॥ उपादिपूर्वस्य वसेराधारः कर्मसंज्ञकः स्यात्

---

( क ) अधिपूर्वाणामिति । अधिकरणसंज्ञापवादोऽयम् । अधिस्तु सप्तम्यर्थस्याधारस्य द्योतकः । वैकुण्ठे शेते तिष्ठत्यास्ते वेत्यर्थः ।

( ख ) अभिनिविशते सन्मार्गमिति । आग्रहवानित्यर्थः । अप्रतिहतप्रवृत्तिमानिति यावत् ।

( ग ) सम्पूर्णः श्लोको यथा—

'निविशते यदि शूकशिखा पदे सृजति सा कियतीमिव न व्यथाम् ।
मृदुतनोर्वितनोतु कथं न तामवनिभृत्तु निविश्य हृदि स्थितः ॥' इति । नै० तु ।

( घ ) उपान्विति । उप-अनु-अधि-आङ्-इत्येतेषां द्वन्द्वः । उपवसतीति । वैकुण्ठे वसतीत्यर्थः । उपसर्गा आधारत्वद्योतकाः ।

लुग्विकरणाऽलुग्विकरणयोरलुग्विकरणस्यैव ग्रहणमिति न्यायात् 'वस निवासे' इति भौवादिक एव गृह्यते न तु 'वस आच्छादने' इत्यादिकः ॥ १६ ॥

( त० ) उपवसतीत्यादि ॥ वैकुण्ठाभिन्नाश्रयको वासजन्यो यः संयोगस्तदनुकूल एकहर्यभिन्नाश्रयको वर्तमानो व्यापारः ॥ १६ ॥

**( नाभुक्त्यर्थस्य ) वने उपवसति । इत्यादि(क) ॥ १७ ॥**

( सु० ) नाभुक्त्यर्थस्य ॥ भोजननिवृत्तिवाचकस्य वसेराधारः कर्मसंज्ञो न ॥ उपवसति उपवासं करोतीत्यर्थः ॥ इति पुनरपि द्वितीया ॥ १७ ॥

**(सहादियोगे तृतीया ) सह शिष्येणागतो गुरुः ॥ एवं साकं सार्द्धं समंयोगेऽपि(ख) ॥ १८ ॥**

( सु० ) सहादियोगे तृतीया ॥ सहार्थकशब्दस्य योगे तृतीया विभक्तिर्भवति ॥ गुरुः शिष्येण सहागतः । गुरोरत्रागमनक्रियया शाब्दः सम्बन्धः शिष्यस्य त्वार्थः सम्बन्धः । अत एव शिष्यस्याप्राधान्यम् । षष्ठ्या बाधिकेयम् ॥ ननु सम्बन्धे तृतीया । सम्बन्धश्चोभयनिष्ठोऽत उभाभ्यां तृतीया स्यात् । मैवं वद । यस्मात्षष्ठी प्राप्ता तस्मादेव तृतीया । षष्ठी चाप्रधानाद्विहिता । ततस्तृतीयाऽप्यप्रधानादेव भवति । उत्सर्गसमानदेशा अपवादा भवन्तीत्युक्तत्वात् । सहार्थविवक्षायां विनापि सहार्थप्रयोगं तृतीया भवति । त्वमहं सिनेत्यादिनिर्देशात् । एवं साकं सार्द्धं समं अमा पृथक् विना नाना इत्यादियोगेऽपि तृतीया ॥ १८ ॥

( त० ) सहादियोग इति ॥ शिष्येण सहेति ।। गुरौ तु न तृतीया तस्य प्रधानत्वात् । अथाप्रधाने तृतीयेति चेत् कथं गुरुणा सहागतः शिष्य इत्यत्र सा । गुरोः प्रधानत्वादिति चेत् सत्यम् । न ह्यत्र लौकिकं प्राधान्यं किन्तु शाब्दम् । तच्च शब्दप्रतिपादित-

---

( क ) ननु 'एकादशीमुपवसन्ति निरम्बुभक्ष्याः' इत्यादौ भोजननिवृत्तिवाचकस्योपपूर्वस्य वसतेः राधारस्य कथं कर्मसंज्ञेति चेदुच्यते, केवलभोजननिवृत्तिवाचकस्य वसतेराधारस्य कर्मसंज्ञा न स्यात् । सद्वृत्तार्थकभोजननिवृत्तिवाचकस्य वसतेराधारस्य कर्मसंज्ञा स्यादेवेति नात्राशङ्कावसरः ।

( ख ) सहादियोग इति । अत्र माधवः । ननु क्रियागुणद्रव्यैर्द्वयोः सम्बन्धे सति सहशब्दप्रयोग इति द्वयोः सम्बन्धाविशेषात्कथं गुरोर्न तृतीया । उच्यते । नाममात्रापेक्षयाऽन्तरङ्गयाऽन्यां/कप्रथमया बाधितत्वात् । एवं च क्रियादिभिः प्रागभिसम्बन्धादप्रधानादन्तरङ्गया तत्तद्विभक्त्या व्याप्तविषया तृतीय प्रागेव सहार्थेन सम्बन्धादप्रधानादेव भवति । यस्य हि साक्षात् क्रियादिना सम्बन्धः शब्दवाच्यस्तस्य प्राधान्यं यस्य तु सहार्थान्यथानुपपत्त्या प्रतीयमानस्तस्याप्राधान्यमिति विवेक्तव्यम् । 'सहागतौ गुरुशिष्यौ' इत्यादौ तु द्वयोः क्रियादियोगेऽन्तरङ्गा प्रथमा, पश्चात् सहयोगेऽपि न निवर्त्तते । ग्रामं न गच्छतीत्यादौ पश्चान्नञ्योगे द्वितीयावत् । ननु शिष्येण सहागतो गुरुरित्यत्र शिष्यस्यापि सहार्थसामर्थ्यात् प्रतीयमानकर्तृत्वमस्त्येवेति कर्तृकरणयोरित्यत्र तृतीया सेत्स्यतीति किमत्र सहग्रहणेन, न चात्राप्यन्योक्ते प्रथमा स्यादिति वाच्यम्, मुख्यस्य गुरोरेव कर्तुः त्वादिभिरभिधानाद् गौणस्य त्वन्योक्तत्वात् । उच्यते । इह तर्हि शिष्येण समागमनं गुरोरित्यत्र कर्तृकार्म्ययोरिति शिष्यादपि षष्ठी स्यात् । तथा तिलैः सह माषान् वपतीति तिलानामपि कर्मत्वप्रतीतेर्द्वितीया स्यात् । तथा शिष्येण सह स्थूलो गोमांश्चेति द्रव्यगुणसम्बन्धप्रतिपादनतात्पर्यक्रियागन्धस्यैवाऽभावात् कर्तृगन्धोऽपि नास्तीति तृतीया न स्यात् । किञ्च भिक्षः शरेण रामेणेत्यादौ मुख्ये कर्त्तरि सम्भवति गौणमुख्यन्यायेन शिष्येण सहागतो गुरुरित्यत्र गौणे कर्त्तरि तृतीया न स्यादित्यपि सहग्रहणमत्र कर्त्तव्यमिति यत्किञ्चिदेतत् ।

क्रियात्वम् । अर्थलब्धक्रियात्वमप्राधान्यम् । तच्च यदा यस्य तदा तस्यैव प्राधान्याप्राधान्ये ॥ शिष्येण सहागतो गुरुरित्यत्रागमने शिष्यस्यापि कर्तृत्वमन्यथा साहित्यं न स्यात् इति कर्तृसाधनयोरित्येव तृतीया किमनेनेति, चेत्सत्यम् । शिष्येण सहागमनं गुरोरित्यत्र शिष्यादपि कर्तृकार्ययोरिति षष्ठी प्राप्ता तदपवादार्थमिदमिति गृहाण । सहार्थविवक्षायां सहादिप्रयोगाभावेऽपि तृतीया सिनेत्यादिनिर्देशात् ॥ १८ ॥

**येनाङ्गविकारः** ॥ येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीया ॥ अक्ष्णा काणः ॥ अङ्गविकारः । किम् । अक्षि काणमस्य(क)॥१९॥

( सु० ) **येनाङ्गविकारः** ॥ अङ्गमस्यास्तीति सोऽङ्गः । अर्शआदित्वादच्प्रत्ययः । अङ्गीत्यर्थः ॥ अङ्गस्याङ्गिनो विकार अङ्गविकारः । अक्ष्णा काणः । अक्ष्णः काणत्वविशिष्ट इत्यर्थः ॥ १९ ॥

( त ) **अङ्गिन इति** ॥ अङ्गमस्यास्तीति सोऽङ्गी तस्येत्यर्थः ॥ १९ ॥

( **कश्चित्प्रकारं प्राप्तस्य लक्षणे** ) जटाभिस्तापसः ॥ २० ॥

( सु० ) **कश्चित्प्रकारं प्राप्तस्य लक्षणे** ॥ सामान्यस्य भेदको विशेषः प्रकारः । स लक्ष्यतेऽनेनेति लक्षणं चिह्नम् । कश्चित्प्रकारं प्राप्तस्य लक्षणे तृतीया स्यात् ॥ जटाभिस्तापसः । जटाज्ञाप्यतापसत्वविशिष्टः(ख) । जटाभिर्ज्ञाप्यं यत्तापसत्वं तद्विशिष्ट इत्यर्थः । इह जटानां लक्षणत्वम् । तेन लक्ष्यलक्षणभावः सम्बन्धोऽत्र ॥ २० ॥

( त० ) **जटाभिरिति** ॥ जटाज्ञाप्यतापसत्वविशिष्ट इत्यर्थः । लक्षणे किम् । अस्य जटाः ॥ २० ॥

(**प्रकृत्यादिभ्यश्च**) प्रकृत्या चारुः । प्रायेण याज्ञिकः । गोत्रेण गार्ग्यः । समेनैति । विषमेणैति । द्विद्रोणेन धान्यं क्रीणाति । सुखेन दुःखेन याति(ग) ॥२१॥

---

( क ) **येनेति** । येनेत्यनेन प्रकृत्यर्थभूतमङ्गं परामृश्यते । न ह्यविकृतेन अङ्गेन अङ्गिनो विकारः सम्भवति । तदाह-येनाङ्गेनेत्यादिना । **अक्ष्णा काण इति** । काणशब्दः काणत्ववति वर्तते । तृतीयार्थः सम्बन्धः । अक्षिसम्बन्धिकाणत्वविशिष्ट इत्यर्थः । सम्बन्धश्च विकारप्रयुक्तत्वरूपः । अक्षिविकारप्रयुक्तकाणत्ववानिति यावत् । यद्यपि एकमाक्षिविकलं काणमित्युच्यते, तथापि अवयवधर्मस्य शरीरे तदवच्छिन्नात्मनि व्यवहारो निरूढः । द्वौ विप्राविति वत् अक्ष्णेति पदस्य प्रयोगः समर्थ्यः ।

( ख ) **जटाज्ञाप्येति** । न च ज्ञाने करणत्वादेव तृतीया सिद्धेति वाच्यम् , करणत्वाविवक्षायां लक्ष्यलक्षणभावमात्रविवक्षायां तृतीयार्थत्वात् ।

( ग ) **प्रकृत्येति** । तृतीयार्थः सम्बन्धः । प्रकृतिः स्वभावः, तत् सम्बन्धिचारुत्ववानित्यर्थः । यदा तु स्वभावेनैवायमभिरूपो नत्वलङ्कारादिनेति करणान्तरव्युदासाय प्रकृतेः करणत्वं विवक्ष्यते तदा कर्तृकरणयोरित्येव सिद्धमिति भाष्यम् । **प्रायेणेति** । प्रायशब्दो बहुलवाची । बहुलाचारसम्बन्धियाज्ञिकत्ववानित्यर्थः । सम्बन्धश्च ज्ञाप्यज्ञापकभावः । **समेनैति विषमेणैति** । क्रियाविशेषणमेतत् । समं विषमं च गमनं करोतीत्यर्थः । कर्मणि द्वितीया प्राप्ताः, तद्बाधिकात्र तृतीयेति कश्चित् । समेन विषमेण वा पथा एतीत्यर्थे तु करणत्वादेव सिद्धमिति भाष्यम् । **सुखेनेति** । सुखजनकं यानं करोतीर्थः । क्रियाविशेषणम् । द्वितीया प्राप्ता, तद्बाधिका तृतीया । प्रकृत्यादीत्यादिपदात् नाम्ना सुतीक्ष्णः । नामसम्बन्धिसुतीक्ष्णत्ववानित्यर्थः । वह्नित्वेन वह्निं जानामीत्यत्र तु प्रकारत्वं तृतीयार्थः । वह्नित्वप्रकारकवह्निज्ञानवानस्मि इत्यर्थः । अत्रान्यत् किञ्चित् प्रस्तूयते—वा सम्पूर्वजानातेः कर्म । सम्पूर्वस्य जानातेः कर्म

( सु० ) प्रकृत्यादिभ्यश्च ॥ प्रकृत्या स्वभावेन चारुरभिरूपः न स्वलंकारादिना। अत्र क्रियाया अश्रवणे कर्तृकरणत्वाभावात्षष्ठी प्राप्ता तद्बाधिका तृतीया ॥ प्रायेण बहुधा यज्ञं करोतीति याज्ञिकः ॥ गोत्रेण गार्ग्यः । गर्गगोत्रमस्येत्यर्थः । प्रातिपदिकार्थे प्रथमा प्राप्ता तद्बाधिका तृतीयाऽत्र ॥ समेन मार्गेण विषमेण मार्गेण स एति गच्छतीत्यर्थः । समविषमाभ्यां कर्मभ्यां द्वितीया प्राप्ता तद्बाधिका तृतीयाऽत्र ॥ द्वयोर्द्रोणयोः समाहारो द्विद्रोणम् । क्वचिन्नेति ङीत्वाभावः । द्विद्रोणपरिमितधान्यमूल्यवाचको द्विद्रोणशब्दः । द्रोणद्वयस्य द्रव्यस्य धान्यं क्रीणातीत्यर्थः॥ सुखेन दुःखेन याति। सुखं दुःखं यातीत्यर्थः॥२१॥

( दिवः करणम् ) कर्मसंज्ञं वा स्यात् ॥ अक्षैरक्षान्वा दीव्यति ॥२२॥

( सु० ) दिवः करणम् ॥ दिवः करणस्य कर्मसंज्ञा वा स्यात् ॥ दिवु क्रीडादौ । अस्य करणं वा कर्म भवति । अक्षैः अक्षान् वा दीव्यति । किं च सकर्मकत्वादक्षैर्देव्यते देवदत्तो मैत्रेणेत्यत्र गतिबुद्धीत्यनेन ण्यावपि कर्तुः कर्मत्वं न ॥ २२ ॥

( तुल्यार्थयोगे ) कृष्णेन तुल्यः । रामेण सदृशः ॥ २३ ॥

( सु० ) तुल्यार्थयोगे ॥ तोलनं तुला तुलया संमितस्तुल्यः ण्यप्रत्ययः । णितो वेति वृद्ध्यभावः । तुल्यार्थवाचकशब्दयोगे तृतीया वा स्यात् । पक्षे संबन्धे षष्ठी । तुलोपमाशब्दौ विना । उपमा तुला वा हरेर्नास्तीति । तुल्यः सदृशः समः कृष्णेन कृष्णस्य वा ॥ २३ ॥

( फलप्राप्तौ कालाध्वनोरत्यन्तसंयोगे तृतीया ) अह्ना क्रोशेन वाऽनुवाकोऽधीतः ॥ फलप्राप्तौ किम् । मासमधीतो नायातः ॥२४॥

( सु० ) फलप्राप्तौ कालाध्वनोरत्यन्तसंयोगे तृतीया ॥ अन्तं विराममतिक्रान्तोऽत्यन्तः । अत्यन्तश्चासौ संयोगश्चात्यन्तसंयोगस्तस्मिन् अत्यन्तसंयोगे । निरन्तरसंनिकर्षे कालाध्ववाचकाभ्यां तृतीया स्यात् फलप्राप्तौ सत्याम् । देवदत्तेनानुवाको ग्रन्थविशेषोऽह्ना दिनं यावन्निरन्तरं क्रोशेन एकक्रोशं यावन्निरन्तरं वाऽधीतः । कालाध्वनोरिति द्वितीयाबाधिकेयं तृतीया ॥ २४ ॥

( त० ) फलेति ॥ फलप्राप्तौ किम् । मासमधीतो नायातः ॥ २४ ॥

( अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया ) दास्या संयच्छते कामुकः । धर्म्ये तु भार्यायै संयच्छति(क) ॥ २५ ॥

( सु० ) अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया ॥ निषिद्धाचारे

---

करणं वा स्यात् । पितरं पित्रा वा संजानीते । 'यजतेः कर्मसम्प्रदाने' । यजेः प्रयोगे कर्मसम्प्रदाने करणकर्मणी स्याताम् । पशुना रुद्रं यजते । पशुं रुद्राय ददातीत्यर्थः ।

( क ) अशिष्टेति । वैदिकमार्गानुयायिनश्शिष्टाः । वेदमार्गादपेता अशिष्टाः । तेषां व्यवहारः आचारः, तस्मिन् विषये दाणधातोः प्रयोगे सति चतुर्थ्यर्थे सम्प्रदाने तृतीया वाच्यत्येर्थः। दास्या संयच्छते कामुक इति । दास्यै कामुकः प्रयच्छतीत्यर्थः । कामुक इत्यनेन रत्यर्थमिति गम्यते। दास्यां रतिर्धर्मशास्त्रनिषिद्धत्वादशिष्टव्यवहार इति भावः । अशिष्टपदप्रयोजनमाह–धर्म्ये त्विति । धर्मादनपेत इत्यर्थः । न तृतीयेति शेषः ।

प्रतिपाद्ये दाणः प्रयोगे चतुर्थ्यर्थे तृतीया स्यात् ॥ दास्या संयच्छते कामी ॥ धर्म्ये तु भार्यायै संयच्छति ॥ इति पुनरपि तृतीया ॥ २५ ॥

**( नम आदियोगे चतुर्थी )** नमो नारायणाय ॥ एवं स्वस्तिस्वाहास्वधाऽलंवषड्योगे च ॥ २६ ॥

( सु० ) नम आदियोगे चतुर्थी ॥ सम्बन्धसामान्ये षष्ठ्यां प्राप्तायां तद्बाधिका चतुर्थी ॥ नारायणाय हरये नमोऽस्तु ॥ प्रजाभ्यः स्वस्ति कल्याणम् ॥ अग्नये स्वाहा ॥ पितृभ्यः स्वधा ॥ अलमिति समर्थार्थस्य ग्रहणम्(क) । हरिर्दैत्येभ्योऽलं समर्थ इत्यर्थः ॥ इन्द्राय वषट् ॥ २६ ॥

( त० ) नमआदियोगे चतुर्थीति ॥ नमस्करोति देवानित्यादौ तु उपपदविभक्तेरित्याद्युक्तमेव । स्वयंभुवे नमस्कृत्येत्यादौ तु स्वयंभुवमनुकूलयितुमित्यर्थे तुमोऽप्रयुक्तस्य कर्मणि चतुर्थी । एतच्च कार्यायेति सूत्रेण ज्ञापितम् । कार्यं विधातुमित्यर्थात् ॥ २६ ॥

**( उपपदविभक्तेः कारकविभक्तिर्बलीयसीति )** नमस्करोति देवान्(ख) ॥ २७ ॥

( सु० ) ननु नमस्करोति देवानित्यत्र चतुर्थी स्यात् । नमः सम्बन्धसत्त्वादुच्यते—उपपदविभक्तेः कारकविभक्तिर्बलीयसीति ॥ उपपदं निमित्तं यस्याः सा उपपदनिमित्ता सा चासौ विभक्तिश्च उपपदविभक्तिः । शाकपार्थिवादित्वान्मध्यमपदलोपः । क्रियान्वयित्वं कारकत्वम् । कारकनिमित्ता विभक्तिर्बलीयसा बलिष्ठेत्यर्थः ॥ क्रियान्वयित्वाद्देवानित्यत्र द्वितीया ॥ २७ ॥

( त० ) उपपदविक्तेः कारकविभक्ति बलीयसीति ॥ उप समीपे पदम् उपपदम् । उपपदं निमित्तं यस्याः सा उपपदनिमित्ता । सा चासौ विभक्तिश्च उपपदविभक्तिः । शाकपार्थिवादित्वस्याः । तेन नमस्करोति देवानित्यत्र कर्मणि द्वितीयैव न चतुर्थी ॥ २७ ॥

**( प्रभ्वादियोगे षष्ठ्यपि )** भोजनाय भोजनस्य वा प्रभुः समर्थः शक्तः ॥ कृष्णाय कृष्णस्य वा मद्रं भद्रं कुशलं सुखमायुष्यमर्थः प्रयोजनं वा भूयात् ॥ २८ ॥

( सु० ) प्रभ्वादियोगे षष्ठ्यपि । प्रभ्वायुष्यमद्रभद्रकुशलसुखार्थहितार्थका प्रभ्वादयः । येषां योगे षष्ठीचतुर्थ्यौ भवतः । तत्रायुष्यादियोगे आशीर्वादेऽर्थ एव ॥ आशीर्वादे किम् । देवदत्तस्यायुष्यमस्ति ॥ २८ ॥

---

( क ) अलमिति । न च 'अलं महीपाल तव श्रमेण' इत्यादौ चतुर्थी स्यादिति वाच्यम् । समर्थार्थकालंयोगस्य चतुर्थीप्रयोजकत्वात् । अत्र तु तदभावान्न चतुर्थी । करणतृतीयैव बोध्या । तथा च कौमुदी—"गम्यमानापि क्रिया कारकविभक्तौ प्रयोजिकाः । अलं श्रमेण । श्रमेण साध्यं नास्तीत्यर्थः । इह साधनक्रियां प्रति श्रमः करणम्" इति ।

( ख ) नमस्करोतीति । करशिरस्संयोगादिना तोषयतीत्यर्थः । करशिरस्संयोगादिमात्रार्थत्वे अकर्मकत्वापातात् ।

**(रुच्यर्थधातुयोगे प्रीयमाणे ) हरये रोचते भक्तिः(क) ॥२९॥**

( सु० ) **रुच्यर्थधातुयोगे प्रीयमाणे** ॥ रुचिर्दीप्तावपि । दीप्तिस्तत्र न विवक्षिता इत्यत उच्यते ; अन्यकर्तृकोऽभिलाषो रुचिः(ख) । रुचिरर्थो येषां ते रुच्यर्थाः । रुच्यर्थाश्च ते धातवश्च रुच्यर्थधातवस्तेषां योगः रुच्यर्थधातुयोगस्तस्मिन् । प्रीयते इति प्रीयमाणः । प्रीञ् तर्पणे । अस्मात् कर्मणि शानप्रत्ययः । तस्मिन् प्रीयमाणे चतुर्थी भवति ॥ हरिं प्रीणयतीत्यर्थे कर्मणि द्वितीयाप्राप्तौ चतुर्थी । हरिनिष्ठप्रीतेर्भक्तिः कर्त्री (ग) । भक्तिरात्मविषयमभिलाषं हरेरुत्पादयतीत्यर्थः॥ प्रीयमाणे किम् । देवदत्ताय रोचते मोदकः पथि(घ) ॥ २९ ॥

( त० ) **हरय इति** ॥ अन्यकर्तृकोऽभिलाषो रुचिः । हरिनिष्ठप्रीतेर्भक्तिः कर्त्री । हरिं प्रीणयतीत्यर्थः । द्वितीयाप्राप्तौ वचनम् । शाब्दबोधस्त्वयम् । हर्षभिन्नाश्रयकप्रीत्यनुकूल एकसेवानिष्ठो वर्तमानो व्यापारः ॥ २९ ॥

**( श्लाघह्नुङ्स्थाशपां प्रयोगे बोधयितुमिष्टे ) गोपी कृष्णाय श्लाघते ह्नुते तिष्ठते शपते वा ॥ ३० ॥**

( सु० ) **श्लाघह्नुङ्स्थाशपां प्रयोगे बोधयितुमिष्टे** ॥ श्लाघृ कत्थने । ह्नुङ् अपनयने । ष्ठा गतिनिवृत्तौ । शप उपालम्भे । एषां प्रयोगे बोधयितुं ज्ञापयितुमिष्टे वाञ्छिते चतुर्थी स्यात् ॥ गोपी स्मरात्कन्दर्पात् कृष्णाय श्लाघते(ङ) । कृष्णं स्तौतीत्यर्थः ॥ सर्वत्र कर्मणि द्वितीयाप्राप्तौ चतुर्थी ॥ कृष्णाय ह्नुते । सपत्नीभ्यो ह्नुतमर्थं कृष्णं बोधयतीत्यर्थः । कृष्णाय तिष्ठते । स्थित्या स्वाभिप्रायं कृष्णं बोधयतीत्यर्थः । स्वाभिप्रायाविष्करणे निर्णेत्राख्यायामिति तिष्ठतेरात्मनेपदम् ॥ कृष्णाय शपते । उपालम्भेन स्वाभिप्रायं कृष्णं बोधयतीत्यर्थः ॥ ३० ॥

( त० ) **श्लाघह्नुङ् इति** ॥ **श्लाघत इति** । श्लाघा स्तुतिः । कृष्णाय श्लाघते ।

---

( क ) **रुच्यर्थेति** । 'रुचदीप्तावभिप्रीतौ च' । दीप्तिरिह न रुच्यर्थः, प्रीयमाण इति विरोधात् । **प्रीयमाण इति** । समवायेन प्रीत्याश्रय इत्यर्थः । **हरये रोचत इति** । भक्तिः स्वविषयां प्रीतिं हरौ जनयतीत्यर्थः । भक्तिगतव्यापारप्रयोज्यप्रीत्याश्रयत्वाद्धरेः कर्मत्वं प्राप्तम् । तदपवादोऽयम् ।

( ख ) ननु हरिभक्तिमभिलषतीत्यत्रापि भक्तेः प्रीतिविषयत्वात् सम्प्रदानत्वं स्यात् । इत्यत आह—**अन्यकर्तृक इति** । समवायेन प्रीत्याश्रयापेक्षया यदन्यत् तत्कर्तृकाभिलाषः रुचधात्वर्थः । प्रीत्याश्रयकर्तृकः किञ्चिद्विषयक इच्छाविशेषोऽभिलाषः । तथाच—अभिलषतेः, रुच्यर्थकत्वाभावान्न तद्योगे सम्प्रदानत्वम् । प्रकृते च प्रीत्याश्रयो हरिः, तदपेक्षया यदन्यद्भक्तिः, तत्कर्तृकैव प्रीतिरिति रुच्यर्थयोगः ।

( ग ) ननु भक्तेः सम्प्रदानत्वं कुतो न स्यात् । विषयतासम्बन्धेन भक्तेरपि प्रीत्याश्रयत्वात् । इत्यत आह—**हरिनिष्ठप्रीतेरिति** । हरेरेव समवायसम्बन्धेन प्रीत्याश्रयतया प्रीयमाणत्वाद् भक्तेः कर्त्र्या उक्तरीत्या प्रीयमाणत्वाभावाच्च न सम्प्रदानत्वमिति भावः । भक्तिर्हरिं प्रीणाति प्रीणयतीत्यादौ तु न भक्तेः सम्प्रदानत्वप्रसक्तिः । आख्यातेनोक्तत्वात् समवायेन प्रीत्याश्रयत्वाभावाच्च । नापि हरेः प्रीयमाणे इति कर्मणि शानप्रयोगबलेन प्रीधातुयोगे 'रुच्यर्थ' इत्यस्याप्रसक्तेर्विज्ञानात् । अन्यथा प्रीधातुकर्मणः सम्प्रदानत्वे कर्मणि शानस्य दौर्लभ्यात् ।

( घ ) **मोदकः पथीति** । अत्र पथः प्रीयमाणत्वाभावान्न सम्प्रदानत्वमिति भावः ।

( ङ ) **गोपी स्मरादिति** । मन्मथपीडावशात् गोपी आत्मस्तुत्या विरहवेदनां कृष्णं बोधयतीत्यर्थः ।

कृष्णं स्तौतीत्यर्थः ॥ कर्मत्वे प्राप्ते वचनमिदम् । अन्ये त्वाहुः । कृष्णाय आत्मानं परं वा श्लाघ्यं कथयतीत्यर्थः ॥ अस्मिंस्तु पक्षे शेषषष्ठ्यां प्राप्तायां वचनम् ॥ ह्नुत इति ॥ सपत्नीभ्यः कृष्णं ह्नुवाना तमेवार्थं कृष्णं बोधयतीत्यर्थः । यस्य कस्यचित् ह्नुतिं वा ॥ तिष्ठत इति ॥ स्थित्याऽभिप्रायं बोधयतीत्यर्थः । शाब्दबोधस्तु कृष्णोद्देश्यक आत्मभिन्नाश्रयकश्लाघ्यत्वादिबोधनानुकूल एकगोप्यभिन्नाश्रयको वर्तमानो व्यापारः । स्वाभिप्रायाविष्करणे निर्णयाख्यायामित्यात्मनेपदम् ॥ ३० ॥

**( धारेरुत्तमर्णे ) भक्ताय धारयति मोक्षं हरिः(क) ॥३१॥**

( सु० ) **धारेरुत्तमर्णे** ॥ धृङ् अवस्थाने । ण्यन्तः । धारयतेः प्रयोगे उत्तमर्णे चतुर्थी स्यात् ॥ उत्तमर्णो धनस्वामी । अत्रोत्तमर्णो भक्तः । हरिस्त्वधमर्णः । 'अधमर्णस्तु ग्राहकः' इति । भक्तेन पूर्वं भक्तिर्दत्ता तदर्थं हरिर्मोक्षं धारयति । धृङोऽकर्मकत्वाद् गतिबुद्धीति सूत्रेणाण्यन्तावस्थायां कर्तुर्ण्यन्तावस्थायां कर्मत्वम् । अत्र च षष्ठीप्राप्तौ चतुर्थी विधीयते ॥ उत्तमर्णे किम् । देवदत्ताय शतं धारयति ग्रामे ॥ ३१ ॥

( त० ) **धारेरिति** ॥ षष्ठीप्राप्तौ वचनम् ॥ **भक्तायेति** ॥ भक्तोद्देश्यकमोक्षकर्मकधारणानुकूल एकहर्यभिन्नाश्रयको वर्तमानो व्यापारः ॥ ३१ ॥

**( स्पृहयतेरीप्सिते ) पुष्पेभ्यः स्पृहयति ॥ ३२ ॥**

( सु० ) **स्पृहयतेरीप्सिते** ॥ स्पृहयतेः प्रयोग ईप्सिते वाञ्छिते चतुर्थी स्यात् ॥ स्पृह ईप्सायाम् । चुरादावदन्तः । कर्मणि द्वितीयाबाधिकेयम् । मैत्रः पुष्पेभ्यः स्पृहयति । पुष्पाणि स्पृहयतीत्यर्थः ॥ प्रकर्षविवक्षायां द्वितीयाऽपि ॥ ३२ ॥

( त० ) **पुष्पेभ्यः स्पृहयति इति** ॥ पुष्पोद्देश्यकेच्छानुकूल एकाभिन्नाश्रयको वर्तमानो व्यापारः ॥ ३२ ॥

**( क्रुधद्रुहेर्ष्यासूयार्थानाम् ) यं प्रति कोपार्थादयस्तत्र ॥ हरये क्रुध्यति द्रुह्यति ईर्ष्यति असूयति इत्यादि(ख) ॥ ३३ ॥**

( सु० ) **क्रुधद्रुहेर्ष्यासूयार्थानाम्** ॥ क्रुधद्रुहेर्ष्यासूयार्थानां प्रयोगे यं प्रति कोपादयस्तत्र चतुर्थी ॥ क्रुध क्रोधे । द्रुह जिघांसायाम् । ईर्ष्य ईर्ष्यायाम् । असू येति कण्ड्वादियगन्तो धातुः । एषामर्थ इवार्थो येषां धातूनां तेषां प्रयोगे यं प्रति यस्मिन् कोपादयः क्रियन्ते तत्र चतुर्थी स्यात् ॥ क्रोधोऽमर्षः ॥ जिघांसाऽपकारः ॥ ईर्ष्या परसंपत्त्यसहनम् ॥ असूया गुणेषु दोषाविष्करणम् ॥ क्रुधद्रुहोरकर्मकत्वात् तद्योगे षष्ठीप्राप्तौ चतुर्थी । ईर्ष्यासूययोस्तु सकर्मकत्वात् द्वितीयाप्राप्तौ चतुर्थी । यं प्रति कोपादयः किम् । भार्यामीर्ष्यति ।

---

( क ) **भक्तायेति** । भक्तसम्बन्धी यो मोक्षोऽपरिमितनित्यसुखविशेषस्तं धारयतीत्यर्थः । मोक्षो धरते । अवतिष्ठते इत्यर्थः । तं प्रेरयति, धारयति, अवस्थापयतीति यावत् । पूजयन् हि भक्तस्तुलसीदलादिद्रव्यं प्रयच्छति, तच्च गृह्णन् तुष्टो हरिस्तत्प्रत्तद्रव्यं मोक्षदानेन निष्क्रीणाति । तदाहुः पौराणिकाः—'तोयं वा पत्रं वा यद्वा किञ्चित् समर्पितं भक्त्या । तदृणं मत्वा देवो निःश्रेयसमेव निष्क्रयं मनुते । इत्यादि । तथा च—अत्र भक्तस्य ऋणदातृत्वेन उत्तमर्णत्वात् सम्प्रदानत्वं सम्बन्धषष्ठ्यपवादः ।

( ख ) अस्य सूत्रस्यापवादोऽयम्, 'क्रुधद्रुहोरुपसृष्टयोः कर्म' । सोपसर्गयोरनयोर्योगे यं प्रति कोपः तत्कारकं कर्मसंज्ञं स्यात ( हरिं ) क्रूरमभिक्रुध्यति । अभिद्रुह्यतीत्यादि ।

मैनामन्याऽद्राक्षीदिति हेतोः(क) ॥ **चतुर्थी बलिहितसुखरक्षितैः** ॥ एभिर्योगे चतुर्थी स्यात् ॥ बलिः पूजापहारकः । ब्राह्मणाय बलिः हितं सुखं रक्षितं वा । चशब्दादन्येऽप्यनुक्तप्रयोगा ज्ञेयाः(ख) ॥ इति पुनरपि चतुर्थी ॥ ३३ ॥

( त० ) क्रुधद्रुह इति ॥ क्रुध क्रोधे । द्रुह द्रोहे । ईर्ष्य ईर्ष्यायाम् । असूयेति कण्ड्वादियगन्तः । एषामर्थ इवार्थो येषां धातूनामित्यर्थः । तत्र क्रोधोऽमर्षः । ईर्ष्या असहनम् । असूया तु गुणेषु दोषारोपः ॥ ३३ ॥

**( ऋते आदियोगे पञ्चमी )** ऋते ज्ञानान्न मुक्तिः । अन्यो गृहाद्विहारः । आराद्वनात् । इतरो ग्रामात् । भिन्नः कृष्णात् । पूर्वो ग्रामात् । प्राग्ग्रामात् । दक्षिणा ग्रामात् ॥ ३४ ॥

( सु० ) **ऋते आदियोगे पञ्चमी** ॥ ज्ञानादृते विना मुक्तिर्न । ऋतेयोगे द्वितीयाऽपि । ऋते द्वितीया चेति चान्द्रसूत्रोक्तत्वात् ॥ गृहादन्यो विहारो वनम् । वनादारात् । "आराद् दूरसमीपयोः" इत्यमरः ॥ दूरान्तिकयोगे षष्ठ्यपीति प्राप्ते पञ्चमी ॥ ग्रामादितरः । "इतरस्त्वन्यनीचयोः" इत्यमरः ॥ नीचार्थस्येतरस्य ग्रहणं न । कृष्णाद्भिन्नोऽन्य इत्यर्थः ॥ एवं पूर्वदक्षिणादियोगे अञ्चूत्तरपदयोगे च पञ्चमी ॥ ३४ ॥

( त० ) ऋते ज्ञानादिति ॥ कथं तर्हि 'पुरुषाराधनमृते' इति । प्रमादोऽयमित्येके । ऋते द्वितीया चेति चान्द्रसूत्रात् द्वितीयाऽपि ॥ ३४ ॥

**विनापृथग्नाना वा )** विना कृष्णात् ॥ ३५ ॥

---

( क ) मैनामिति । एनां भार्य्यामन्यो न पश्येत् इत्येतदर्थं भार्य्यागुणेषु दोषारोपणं करोतीत्यर्थः । नात्र भार्य्यां प्रति कोपः, किन्तु परेण दृश्यमानां तां न सहत इत्येव विवक्षितमिति बोध्यम् । एवं च क्रोधद्रोहेर्षासूयानां कोपमूलकत्व एवेदमिति भाष्ये स्थितम् । तथा च–कुप्यति कस्मैचिदित्याद्यसाध्वेव, कोपस्य कोपमूलकत्वाभावात् क्रुधार्थकत्वाभावाच्च । प्ररूढकोप एव हि क्रोधः 'न ह्यकुप्यतः क्रुध्यति' इति भाष्यात् ॥

( ख ) 'राधीक्ष्योर्यस्य विप्रश्नः' एतयोर्यत् कारकं तत्र चतुर्थी स्यात् । यदीयो विविधप्रश्नः क्रियते । कृष्णाय राध्यति ईक्षते वा । पृष्टो गर्गः शुभाशुभं पर्यालोचयतीत्यर्थः । 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्ता' । आभ्यां परस्य शृणोतेर्योगे पूर्वस्य प्रवर्त्तनारूपस्य व्यापारस्य यः कर्त्ता तत्र चतुर्थी स्यात् । विप्राय गां प्रतिशृणोति वा । विप्रेण मह्यं देहीति प्रवर्त्तितस्तत्प्रतिजानीत इत्यर्थः । 'अनुप्रतिगृणश्च' । आभ्यां गृणातेः कारकं पूर्वव्यापारस्य कर्त्तरि चतुर्थी स्यात् । होत्रेऽनुगृणाति, प्रतिगृणाति वा । होता प्रथमं शंसति तमध्वर्युः प्रोत्साहयतीत्यर्थः । 'परिक्रयणे सम्प्रदानं वा' । नियतकालं भृत्या स्वीकरणं तत्र चतुर्थी वा स्यात् । शतेन शताय वा परिक्रीतः । मन्यकर्मण्यनादरे वाऽप्राणिषु । प्राणिवर्जे मन्यतेः कर्मणि चतुर्थी वा स्यात्तिरस्कारे । न त्वां तृणं मन्ये तृणाय वा । तनादियोगे न । नत्वां तृणं मन्वे ।

अत्र वार्त्तिकम्—अप्राणिष्वित्यपनीय नौकाकान्नशुकशृगालवर्जेष्विति वाच्यम्' । तेन 'न त्वां नावं मन्ये' इत्यत्राऽप्राणित्वेऽपि चतुर्थी न । 'न त्वां शुने मन्ये' इत्यत्र प्राणित्वेऽपि भवत्येव । गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि । अध्वभिन्ने गत्यर्थानां कर्मण्येते स्तश्चेष्टायाम् । ग्रामं ग्रामाय वा गच्छति । चेष्टायां किम् । मनसा हरिं व्रजति । अनध्वनि किम् । पन्थानं गच्छति । गन्त्राऽधिष्ठितेऽध्वन्येवायं निषेधः । यदा तूत्पथात्पन्था एवाक्रमितुमिष्यते तदा चतुर्थी भवत्येव । उत्पथेन पथे गच्छति । इत्यादि पाणिन्यादिव्याकरणात्सविस्तरमुन्नेयम् ।

( सु० ) विनापृथग्नाना वा ॥ विनापृथग्नानाभिर्योगे द्वितीयातृतीयापञ्चम्यो भवन्ति ॥ "हिरुङ् नाना च वर्जने" इत्यमरः ॥ ३९ ॥

**( विद्यास्वीकारे पञ्चमी )** उपाध्यायादधीते ॥ ३६ ॥

( सु० ) विद्यास्वीकारे पञ्चमी ॥ विद्यास्वीकारं वक्तुः पञ्चमी भवति ॥ यथा अपेत्यास्मादधीयते इत्यपादाने वा । उपाध्यायादधीते शिष्यः । निःसरन्तं शब्दं ततो गृह्णातीत्यर्थः ॥ ३६ ॥

**जनिकर्तुः प्रकृतिः ॥** जायमानस्य कार्यस्योपादानमपादानसंज्ञं स्यात् ॥ ब्रह्मणः प्रजाः प्रजायन्ते(क) ॥ ३७ ॥

( सु० ) जनिकर्तुः प्रकृतिः ॥ उत्पद्यमानस्य कार्यस्य हेतोः पञ्चमी ॥ यथा । ब्रह्मणो धातुः प्रजाः प्रजायन्ते । उत्पद्यन्ते इत्यर्थः । तत उपक्रामन्ति निर्गच्छन्तीत्यर्थो वा । ब्रह्मा हिरण्यगर्भः स च हेतुरेव न पुनरुपादानम् । "प्रजा स्यात्संततौ जने" इत्यमरः॥

**( यतश्चाध्वकालयोर्निर्माणं तत्र पञ्चमी )** ॥ ३८ ॥

**( पञ्चमीयुक्तादध्वनः प्रथमासप्तम्यौ कालात्सप्तमी )**

वनाद्ग्रामो योजनं योजने वा । कार्तिक्या आग्रहायणी मासे ॥ ३९ ॥

( सु० ) यतश्चाध्वकालयोर्निर्माणं तत्र पञ्चमी ॥ यतश्चाध्वकालयोः परिच्छेदः क्रियते तस्मात्पञ्चमी भवति ॥ अध्ववाचकशब्दात्तु प्रथमासप्तम्यौ । कालवाचकात्तु सप्तम्येव । वनात् ग्रामो योजनं योजने वा ॥ अग्रे हायनं यस्याः सा आग्रहायणी । स्वार्थेऽण् । कार्त्तिक्याः पौर्णमास्या आग्रहायणी मासेऽस्ति ॥ ३८ ॥ ३९ ॥

**( वर्जनेऽपपरिभ्यां पञ्चमी )** अपहरेः संसारः । परि हरेः संसारः । आ मुक्तेः संसार ॥ ४० ॥

( सु० ) वर्जनेऽपपरिभ्यां पञ्चमी ॥ वर्जनार्थयोरपपर्योर्योगे पञ्चमी । यथा । अपहरेः परिहरेः संसारः । हरिं वर्जयित्वेत्यर्थः ॥ मर्यादार्थकाङ्योगे पञ्चमी । यथा । आ मुक्तेः संसारः । मुक्तिं मर्यादीकृत्येत्यर्थः ॥ एवमभिविध्यर्थकाङ्योगेऽपि पञ्चमी(ख) । यथा । आ बालेभ्यो हरिभक्तिः । बालानभिव्याप्येत्यर्थः ॥ ४० ॥

---

( क ) ब्रह्मण इति । हिरण्यगर्भादित्यर्थः । घटादिषु कुलालादिवत्तस्य प्रजोत्पत्तौ निमित्तकारणत्वमिति भावः । वृत्तिकृन्मतमेतदयुक्तम् । संयोगविश्लेषसत्त्वेन 'विश्लेषावधौ' इत्येव सिद्धत्वात् । अतोऽत्र योजनायामुपादानमित्युक्तम् । अत एव भाष्यकैयटयोः 'गोमयाद्वृश्चिका जायन्ते गोलोमाविलोमभ्यो दूर्वा जायन्ते इत्युदाहृत्यपरिणामिषु प्रकृतिद्रव्यावयवानुस्यूतिसत्त्वेऽपि बुद्धिकृतविश्लेषसत्त्वात् 'विश्लेषावधौ' इत्येव सिद्धमिति प्रत्याख्यानं संगच्छते । एवं च 'ब्रह्मणः प्रजाः प्रजायन्ते' इत्यत्र ब्रह्मशब्देन मायोपहितमीश्वरचैतन्यमेव विवक्षितम् । तद्धि सर्वकार्योपादानमिति वेदान्तसिद्धान्तः । 'भुवः प्रभवः' । भवनं भूः । भूकर्तुः प्रभवस्तथा । हिमवतो गङ्गा प्रभवति । तत्र प्रकाशते इत्यर्थः । 'गम्यमानापि कारकविभक्तीनां निमित्तम्" । कस्मात्त्वम् ? नद्याः । 'प्रभृत्यर्थयोगे पञ्चमी' । भवात्प्रभृति-आरभ्य वा सेव्यो हरिः । बहिर्योगे पञ्चमी' । ग्रामाद्बहिः ।

( ख ) पाणिनिसूत्रे 'आङ् मर्यादावचने' इति वचनग्रहणादेतल्लभ्यते ।

**प्रतिः प्रतिनिधिप्रतिदानयोः** ॥ यतः प्रतिनिधिः प्रतिदानं च तत्र प्रतियोगे पञ्चमी ॥ प्रद्युम्नः कृष्णात्प्रति । तिलेभ्यः प्रतियच्छति माषान् ॥४१॥

( सु० ) **प्रतिः प्रतिनिधिप्रतिदानयोः** ॥ एतयोरर्थयोर्यः प्रतिस्तस्य योगे पञ्चमी स्यात् । मुख्यस्याभावे तत्सदृशो य उपादीयते स प्रतिनिधिः । दत्तस्य प्रतिनिर्यातनं प्रतिदानम् । षष्ठीबाधिका पञ्चमीयम् । कृष्णात् प्रति कृष्णस्य सदृश इत्यर्थः ॥ तिलेभ्यः प्रति । तिलानामादानेन मैत्रो माषान् यच्छति ददातीत्यर्थः ॥ ४१ ॥

**(भीत्रार्थानां भयहेतौ पञ्चमी)** चौराद्बिभेति । चौरात् त्रायते । व्याघ्रात् त्रस्यति । विद्युत्पाताच्चकितः ॥ ४२ ॥

( सु० ) **भयहेतौ पञ्चमी** ॥ भयार्थानां त्राणार्थानां च प्रयोगे भयहेतोः पञ्चमी स्यात् । षष्ठीबाधिकेयम् ॥ मैत्रश्चौराद्बिभेति । चौरात् त्रायते ॥ ४२ ॥

**( हेतौ तृतीयापञ्चम्यौ )** जाड्याज्जाड्येन वा बद्धः । स्तोकात् स्तोकेन वा मुक्तः ॥ ४३ ॥

( सु० ) **हेतौ तृतीयापञ्चम्यौ** ॥ गुणे वर्तमानात् हेतुवाचकशब्दादस्त्रीलिङ्गात्तृतीयापञ्चम्यौ स्तः ॥ जडस्य भावो जाड्यं तेन तस्माद्वा बद्धः । स्तोकेन स्तोकाद्वा । अनायासेन मुक्त इत्यर्थः ॥ गुणवाचकात् किम् । धनेन कुलम् ॥ अस्त्रीलिङ्गात्किम् । बुद्ध्या मुक्तः । तृतीयाप्राप्तौ पक्षे पञ्चमी विधीयते ॥ ४३ ॥

**(दूरान्तिकयोर्योगे षष्ठ्यपि)** ग्रामस्य दूरादन्तिकाद्वा इत्यादि ॥४४॥

( सु० ) **दूरान्तिकयोर्योगे षष्ठ्यपि** ॥ अनयोर्योगे षष्ठी भवति । अपिशब्दाद्दूरान्तिकार्थकेभ्यो नामार्थमात्रे द्वितीयातृतीयापञ्चमीसप्तम्यो भवन्तीत्यर्थः ॥ ग्रामस्य दूरं दूरेण दूरात् दूरे वा ॥ अन्तिकम् अन्तिकेन अन्तिकात् अन्तिके वा ॥ इति पुनरपि पञ्चमी(क) ॥ ४४ ॥

**निर्द्धारणे षष्ठीसप्तम्यौ** । क्रियागुणजातिसंज्ञाभिः समुदायात्पृथक्करणं निर्द्धारणं यतस्ततः षष्ठीसप्तम्यौ ॥ क्रियापराणां क्रियापरेषु वा भगवदाराधकः श्रेष्ठः । गवां गोषु वा कृष्णा सम्पन्नक्षीरा । नृणां नृषु वा ब्राह्मणः श्रेष्ठः । छात्राणां छात्रेषु वा मैत्रः पटुः(ख) ॥ ४५ ॥

---

( क ) **पुनरपीति** । 'पराजेरसोढः' । पराजेः प्रयोगेऽसह्योऽर्थोऽपादानं स्यात्तत्र पञ्चमी । अध्ययनात्पराजयते । ग्लायतीत्यर्थः असोढः किम् । शत्रून् पराजयते । अभिभवतीत्यर्थः 'वारणार्थानामीप्सितः' प्रवृत्तिविघातो वारणम् । वारणार्थानां धातूनां प्रयोगे ईप्सितोऽर्थोऽपादानं स्यात् । यवेभ्यो गां वारयति । ईप्सितः किम् । यवेभ्यो गां वारयति क्षेत्रे । 'अन्तर्धौ येनादर्शनमिच्छति' । व्यवधाने सति यत्कर्तृकस्यात्मनो दर्शनस्याभावमिच्छति तदपादानं स्यात् । मातुर्निलीयते कृष्णः । अन्तर्धौ किम् । चौरान् न दिदृक्षते । इच्छतिग्रहणं किम् । अदर्शनेच्छायां सत्यां सत्यपि दर्शने तथा स्यात् । देवदत्ताद्यज्ञदत्तो निलीयते । इत्यादि तन्त्रान्तराद् बोध्यम् ।

( ख ) **निर्द्धारण इति** । क्रियया गुणेन जात्या वा धर्मविशेषणेन निर्द्धार्यमाणस्य समुदायाद्भिन्नीकरणं निर्द्धारणमित्यर्थः । क्रिया कर्मत्वजातिमती गमनादिरूपा । गुणः द्रव्यकर्मभिन्नत्वे सति समवा-

( सु० ) निर्धारणे षष्ठीसप्तम्यौ ॥ निर्धारणादियोगे षष्ठीसप्तम्यौ । जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्द्धारणं तदस्ति साध्यत्वेनास्येति स निर्धारणः । 'अर्शआदित्यप्रत्ययः' । श्रेष्ठत्वादिहेतुरित्यर्थः । तथा च निर्धारणादियोगे निर्धारणाश्रयान्नाम्नः षष्ठीसप्तम्यौ स्तः । यतो निर्धार्यते तत एवेत्यर्थः ॥ इति पुनरपि षष्ठी(क) ॥ ४९ ॥

( त० ) क्रियागुणेत्यादि ॥ निर्द्धारणमस्यास्तीति निर्द्धारणः अर्शआदित्यः । निर्द्धारणहेतुरिति यावत् । तथा च निर्द्धारणादियोगे षष्ठीति सम्यगेव न तु निर्द्धारणार्थे इति । अर्थपरो निर्द्धारणशब्दः । आदिशब्दस्य द्वन्द्वात्परत्वेन प्रत्येकं योगस्यानिर्वार्यत्वात् । किं च निर्द्धारणार्थे षष्ठीत्युक्ते कस्मात्षष्ठी निर्द्धारणाश्रयान्निर्द्धारणहेतोर्निर्द्धार्यमाणाद्वेति विनिगमनाभावः । योगे षष्ठीति मते तु हेतुयोगे विधानाद्धेतौ न निर्द्धार्यमाणादपि स्वनिष्ठत्वेनाभिधानान्न परिशेषान्निर्द्धारणाश्रयादेव॥ नन्वत्र समूहसमूहिलक्षणे संबन्धे एव षष्ठी किमनेनेति चेत्सत्यम् । स्वाम्यादित्वान्निर्द्धारणयोगे सप्तमी विधास्यते । तया बाधा मा भूदित्यतोऽपि षष्ठीविधानम् ॥ ४५ ॥

**(स्वाम्यादियोगे षष्ठीसप्तम्यौ)** गवां गोषु वा स्वामी अधिपतिः ईश्वरः दायादः प्रसूतः प्रतिभूर्वा ॥ ४६ ॥

( सु० ) स्वाम्यादियोगे षष्ठीसप्तम्यौ ॥ स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैर्योगे षष्ठीसप्तम्यौ स्तः ॥ षष्ठीप्राप्तौ पाक्षिकसप्तम्यर्थं वचनम् ॥ "दायादौ सुतबान्धवौ" इत्यमरः ॥ गोषु प्रसूतः ॥ गा एवानुभवितुं जात इत्यर्थः ॥ प्रतिभूः साक्षी ॥४६॥

( त० ) प्रसूत इति । गा एवानुभवितुं जात इत्यर्थः ॥ ४६ ॥

**(अनादराधिक्ये क्रियालक्षणे षष्ठीसप्तम्यौ)** रुदति रुदतो वा प्राव्राजीत् ॥ ४७ ॥

( सु० ) अनादराधिक्ये क्रियालक्षणे षष्ठीसप्तम्यौ ॥ केवलभावलक्षणे सप्तम्येव अनादराधिक्ये तु षष्ठीसप्तम्यौ स्तः । रुदति रुदतो वा मत्रः प्राव्राजीत् । रुदन्तं पुत्रादिकमनादृत्य संन्यस्तवानित्यर्थः ॥ ४७ ॥

---

येन सामान्यवान् । जातिर्नित्यानेकसमवेतत्वम् । षष्ठीसप्तम्यौ चाप्रधानात्समुदायादेव न तु निर्द्धार्यमाणोऽवयवः समुदायाद्भिन्न इति यदाधारत्वेन विवक्ष्यते तदाधारत्वादेव वृक्षे शाखेति सामान्येन सप्तमी स्यात् । अथ यदावयवसम्बन्धमात्रं विवक्ष्यते तदा वृक्षस्य शाखेति सामान्येन सम्बन्ध इति षष्ठी स्यात्, इति चेत्, सत्यम्, तस्यैव प्रपञ्चार्थत्वात्, निर्धारणार्थकषष्ठ्या समासनिषेधार्थत्वाच्च । क्रियागुणजातिभिरित्यस्य सम्भवदुक्तिकत्वात् 'अमीषां छात्राणां मैत्रः पटुः' इत्यादौ संज्ञादिभिरपि व्यवच्छेदे भवत्येवं । क्रियापराणां क्रियापरेषु वा भगवदाराधकः श्रेष्ठः । अत्र आराधना क्रिया गवां गोषु वा कृष्णा सम्पन्नक्षीरा । अत्र कृष्णो गुणः । नृणां नृषु वा ब्राह्मणः श्रेष्ठः । अत्र ब्राह्मणत्वं जातिः । आराधनक्रियया कृष्णगुणेन ब्राह्मणत्वजात्या च भगवदाराधकादयो विशिष्यन्ते ।

( क ) अत्र किञ्चिदनुक्तं कथयामः—'तसादियुक्तात् षष्ठी' । ग्रामस्य दक्षिणतः, पुरः, पुरस्तात्, उपरि, उपरिष्टात् । ज्ञोऽविदर्थस्य करणे । जानातेरज्ञानार्थयोगे करणे षष्ठी स्यात् । सर्पिषो जानीते । अविदर्थस्य किम् । स्वरेण भृत्यं जानाति । कौमुद्यां सर्पिषो ज्ञानमिति प्रकृतोदाहरणं दत्तम् । अधीगर्थदयेशां कर्मणि वा । स्मृत्यर्थानां दयादीनां च धातूनां कर्मणि षष्ठी वा स्यात् । मातुः स्मरति मातरं स्म-

( त० ) रुदतीति ॥ रुदन्तं पुत्रादिकमनादृत्य संन्यस्तवानित्यर्थः ॥ ४७ ॥

**( आयुक्तकुशलाभ्यां योगे षष्ठीसप्तम्यौ तात्पर्ये )** आयुक्तः कुशलो वा हरिपूजनस्य हरिपूजने वा ॥ ४८ ॥

( सु० ) **आयुक्तकुशलाभ्यां योगे षष्ठीसप्तम्यौ तात्पर्ये** ॥ तत्परस्य भावः तात्पर्यं तस्मिन् तात्पर्येऽर्थे आभ्यां योगे षष्ठीसप्तम्यौ स्तः ॥ हरिपूजने हरिपूजनस्य वा आयुक्तः व्यापारित इत्यर्थः ॥ तात्पर्ये किम् । आयुक्तो गौः शकटे । ईषद्युक्त इत्यर्थः ।४८।

**(साधुनिपुणाभ्यां पूजायां सप्तमी)** मातरि साधुर्निपुणो वा ॥४९

( सु० ) **साधुनिपुणाभ्यां पूजायां सप्तमी** ॥ 'पुण कर्मणि शुभे' निपूर्वकादस्मान्नाम्युपधादिति कः। निपुणः । साधुशब्दप्रयोगे तु पूजां विना साध्वसाधुप्रयोगे सप्तमी भवत्येव । पूजायामाभ्यां योगे सप्तमी स्यात् ॥ पूजायां किम् । निपुणो राज्ञो भृत्यः(क) । इह तत्त्वकथने तात्पर्यम् ॥ **प्रतिपर्यनुयोगे न सप्तमी** ॥ साधुर्निपुणो वा मातरं प्रति पर्यनु वा ॥ ४९ ॥

**(प्रसितोत्सुकाभ्यां योगे तृतीयासप्तम्यौ)** प्रसित उत्सुको वा हरिणा हरौ वा (ख) ॥ ५० ॥

---

रति वा । सर्पिषो दयते सर्पिषं वा । जगतामीष्टे जगदीष्टे वा । सम्बन्धविवक्षायां सिद्धेऽपि मातुः स्मरणमित्यादौ समासभावार्थमिदम् । कौमुद्यां—मातुः स्मरणं, सर्पिषो दयनं, ईशनं वेत्युदाहृतम् । कृञः प्रतियत्ने वा । उपस्करेऽर्थे कृञः कर्मणि षष्ठी वा स्यात् । दध्नामुपस्कुरुते दधीनि वा । कौमुद्यामेधोदकस्योपस्करणमित्युदाहृतम्। रुजार्थानां भाववचनानामज्वरेः । भावकर्तृकाणां ज्वरिवर्जितानां रुजार्थानां कर्मणि षष्ठी वा स्यात् । चौरस्य रुजति रोगश्चौरं वा । कौमुद्यां चौरस्य रोगस्य रुजेत्युदाहृतम् । अज्वरिसन्ताप्योश्च । रोगस्य चौरज्वरः चौरसन्तापो वा । रोगकर्तृकं चौरज्वरसम्बन्धिज्वरादिकमित्यर्थः । इत्याद्युदाहृतं कौमुद्याम्। आशिषि नाथः कर्मणि वा । आशीरर्थस्य नाथतेः कर्मणि षष्ठी वा स्यात् । शिष्यस्य नाथते शिष्यं वा । आशिषि किम् । धनं नाथति । कौमुद्यां तु—सर्पिषो नाथनम् । आशिषि किम् । माणवकनाथनम् । तत्सम्बन्धिनी याच्ञा इत्यर्थ इत्युक्तम् । जासि निप्रहण नाटक्राथपिषां हिंसायाम् । हिंसार्थानामेषां कर्मणि षष्ठी वा स्यात् । चौरस्य चौरं वोज्जासयति, निप्रहन्ति, प्रणिहन्ति, निहन्ति, प्रहन्ति वा । चौरस्य चौरं वा नाटयति, क्राथयति वा । वृषलस्य वृषलं वा पिनष्टि । कौमुद्याम्—चौरस्योज्जासनम् । चौरस्य निप्रहणनं प्रणिहननं निहननं प्रहणनं प्रहणनं वा चौरस्योन्नाटनम् । चौरस्य क्राथनम् । वृषलस्य पेषणम् । हिंसायां किम् । धानापेषणम् । इत्युदाहृतम् । कृत्वोऽर्थप्रयोगे कालेऽधिकरणे । कृत्वोऽर्थानां प्रयोगे कालवाचिन्यधिकरणे षष्ठी स्यात् । पञ्चकृत्वोऽह्नो भुङ्क्ते । द्विरह्नोऽधीते । कौमुद्यां तु—पञ्चकृत्वोऽह्नो भोजनम् । द्विरह्नो भोजनम् । शेषे किम् । द्विरहन्यध्ययनम् । इत्युदाहृतम् ।

( क ) **निपुणो राज्ञ इति** । साधुशब्दप्रयोगे पूजां विना सप्तमी भवत्येव । साध्वसाधुप्रयोगे चेत्यादिवार्तिकात् ।

( ख ) अत्रेदं बोध्यम् । 'नक्षत्रे च लुपि 'नक्षत्रे प्रकृत्यर्थे यो लुप्संज्ञया लुप्यमानस्य प्रत्ययस्यार्थस्तत्र वर्तमानात्तृतीयासप्तम्यौ स्तोऽधिकरणे । मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत् । मूले श्रवणे इति वा । लुपि कम् । पुष्ये शनिः । 'सप्तमीपञ्चम्यौ कारकमध्ये' । शक्तिद्वयमध्ये यौ कालाध्वनौ ताभ्यां सप्तमीपञ्चम्यौ स्तः । अद्य भुक्त्वायं द्व्यहे द्व्यहाद् वा भोक्ता । कर्तृशक्त्योर्मध्येऽयं कालः इहस्थोऽयं क्रोशे

( सु० ) प्रसितोत्सुकाभ्यां योगे तृतीयासप्तम्यौ ॥ "तत्परे प्रसितासक्तौ" इत्यमरः ॥ उत्सुकसाहचर्यात्प्रसितस्तत्परार्थक एव गृह्यते। तेन प्रकर्षेण सितः शुक्ल इत्यर्थे न॥

( त० ) प्रसित इति "तत्परे प्रसितासक्तौ" इत्यमरः ॥ ६१ ॥

( साध्वसाधुप्रयोगे सप्तमी ) साधुः कृष्णो मातर्यसाधुर्मातुले ॥

( सु० ) साध्वसाधुप्रयोगे सप्तमी ॥ अत्र पूजा न विवक्षिता किंतु तत्त्वकथनं तत्रापि सप्तमी भवति । एतदर्थं साधुग्रहणम् । साधुनिपुणाभ्यामिति सूत्रे साधुग्रहणं तु पूजायां विवक्षितायां प्रत्यादियोगे सप्तमीनिवृत्त्यर्थमिति ॥

( निमित्तात्कर्मयोगे सप्तमी )

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥ ५२ ॥

( सु० ) निमित्तात्कर्मयोगे सप्तमी ॥ कर्मणो योगः सम्बन्धः कर्मयोगस्तस्मिन्कर्मयोगे निमित्तात्फलात्सप्तमी स्यात् ॥ निमित्तशब्देन कारणग्रहणे तु जाड्येन बद्ध इत्याद्यावप्यतिप्रसङ्गः स्यादित्यर्थः ॥ अत्र हेतुतृतीया तादर्थ्यचतुर्थी च प्राप्ता तन्निवारणार्थमिदम् ॥ मैत्रो द्वीपिनं चित्रकं हन्ति चर्मणि चर्मफलार्थम् । चर्मद्वीपिनोः समवायः सम्बन्धः । कुञ्जरं हन्ति दन्तयोर्दन्तफलार्थम् । दन्तकुञ्जरयोः समवायः सम्बन्धः ॥ चमरीं गां हन्ति केशेषु केशफलार्थम् ॥ केशचमर्योः समवायः सम्बन्धः ॥ मैत्रेण पुष्कलको गन्धमृगो हतः सीम्नि अण्डकोशफलार्थम् । अथ वा पुष्कलकः शंकुर्हतो निहितो निखात इत्यर्थः । सीम्नि सीमज्ञापनार्थम् । सीमपुष्कलकयोः संयोगः संबन्धः । "अथ पुष्कलको गन्धमृगे क्षपणकीलयोः" इति मेदिनी ॥ "सीमा घाटस्थितिक्षेत्रेष्वण्डकोशेषु च स्त्रियाम्" इति मेदिनी ॥ ६२ ॥

(त०) निमित्तादिति ॥ निमित्तमिह फलम् । योगः संयोगसमवायात्मकः ॥ सीम्नीति ॥ सीमाऽण्डकोशः । पुष्कलको गन्धमृगः । योगविशेषे किम् । वेतनेन धान्यं लुनाति ६२

( क्तस्येन्विषयस्य कर्मणि ) अधीती व्याकरणे ॥ ५३ ॥

( सु० ) क्तस्येन्विषयस्य कर्मणि ॥ इन्नन्तस्य क्तस्य कर्मणि सप्तमी स्यात् ॥ द्वितीयाबाधिका सप्तमी ॥ अधीतमनेनेत्यधीती व्याकरणे । भावे क्तप्रत्ययस्ततः इष्टादिभ्य इति कर्तरीनिप्रत्यये कृते पश्चाद्गुणभूतक्रियया सम्बध्यमानं व्याकरणमनुक्तं कर्म ॥ ६३ ॥ इति पुनरपि सप्तमी ॥

( त० ) अधीतमनेनेति विग्रहे इष्टादिभ्य इनिरित्यनेन इनिः ॥ ६३ ॥

( तादर्थ्ये चतुर्थी )

---

क्रोशाद् वा लक्ष्यं विध्येत् । कर्तृकर्मशक्त्योर्मध्येऽयं देशः । अधिकशब्देन योगे सप्तमी पञ्चम्यौ । लोके लोकाद् वाधिको हरिः । अधिरीश्वरे । स्वस्वामिभावसम्बन्धेऽधिः कर्मप्रवचनीयसंज्ञः स्यात् । 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी' । अत्र कर्मप्रवचनीययुक्ते सप्तमी स्यात् । उपपरार्धे हरेर्गुणाः । परार्धादधिका इत्यर्थः । ऐश्वर्ये तु स्वस्वामिभ्यां पर्यायेण सप्तमी । अधि भुवि रामः । अधिरामे भूः । कुमि वा । मामधिकरिष्यति । अन्यदूह्यम् ।

संयमाय श्रुतं धत्ते नरो धर्माय संयमम् ।
धर्मं मोक्षाय मेधावी धनं दानाय भुक्तये (क) ॥ ५४ ॥

( सु० ) पुनश्चतुर्थीमाह ॥ **तादर्थ्ये चतुर्थी** तस्मै कार्यायेदं तदर्थं तदर्थस्य भावस्तादर्थ्यम् । भावे तत्वयण इति यण् । कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेनेति सिद्धान्तस्ततो यण्प्रत्ययेन सम्बन्धः । उच्यते । स च सम्बन्धोऽनेकधा न तु कार्यकारणभाव एव । तेन ब्राह्मणाय दधीत्यादौ चतुर्थी सिद्ध्यति । नरः श्रुतं शास्त्रं धत्ते । कस्मै संयमाय । संयमं धत्ते । कस्मै धर्माय । मेधाऽस्ति यस्य स मेधावी बुद्धिमान् धर्मं धत्ते । कस्मै मोक्षाय । धनं धत्ते । कस्मै दानाय त्यागाय भुक्तये भोगाय चेति ॥५४॥

( त० ) तादर्थ्ये इति ॥ तस्मै कार्यायेदं तदर्थं कारणम् । तस्य भावस्तादर्थ्यम् । जननोपकारकत्वरूपः सम्बन्धोऽभिधीयते । उपकारकत्वं चानेकधा । तेन विप्राय भविष्यादावपि भवति ॥

( तुमोऽप्रयुक्तस्य कर्मणि ) फलेभ्यो याति (ख) ॥ ५५ ॥

( सु० ) **तुमोऽप्रयुक्तस्य कर्मणि** ॥ क्रियावाचकप्रकृतिकमुपपदं यस्य तस्या प्रयुज्यमानस्य तुमन्तस्य कर्मणि चतुर्थी भवति ॥ द्वितीयाबाधिकेयम् ॥ फलेभ्यो याति । फलान्याहर्तुं यातीत्यर्थः । एवं स्वयंभुवे नमस्कृत्य । स्वयंभुवमनुकूलयितुमित्यर्थः ॥५५॥

( त० ) फलेभ्यो यातीति । फलान्याहर्तुं यातीत्यर्थः ॥ ५५ ॥

( क्यब्लोपे कर्मण्याधारे च पञ्चमी ) हर्म्यात्प्रेक्षते । आसनात्प्रेक्षते ॥ ५६ ॥

( सु० ) पुनः पञ्चमीमाह ॥ **क्यब्लोपे कर्मण्याधारे च पञ्चमी** ॥ क्यबन्तस्य गम्यमानार्थत्वात् अप्रयोगे कर्मणि अधारे च पञ्चमी स्यात् ॥ क्यब्ग्रहणमिह क्यबर्थपरम् । तेन क्त्वाऽपि गृह्यते ॥ प्रासादात्प्रेक्षते । प्रासादमारुह्य ॥ आसनात् प्रेक्षते । आसने उपविश्येत्यर्थः । आसने स्थित्वा वा ॥ ५६ ॥

( त० ) हर्म्यादिति ॥ हर्म्यमारुह्येत्यर्थः ॥ ५६ ॥

**कर्तृकार्ययोरक्तादौ कृति षष्ठी** ॥ कर्तरि कार्ये च षष्ठी क्तादिवर्जिते कृति प्रयुज्यमाने (ग) ॥ कृष्णस्य कृतिः । जगतः कर्ता कृष्णः ॥५७॥

( सु० ) पुनः षष्ठीमाह ॥ **कर्तृकार्ययोरक्तादौ कृति षष्ठी** ॥ कृद्योगे कर्तरि क-

(क) अत्रेदं बोध्यम् क्लृपि संपद्यमाने । क्लृपिधातौ प्रयुज्यमाने सति सम्पद्यमानेऽर्थे वर्त्तमानाच्चतुर्थी स्यात् । भक्तिर्ज्ञानाय कल्पते—सम्पद्यते—जायते इत्यादि । उत्पातेन ज्ञापिते च । अशुभसूचक आकस्मिको भूतविकार उत्पातस्तेन सूचितेऽर्थे विद्यमानाच्चतुर्थी स्यादित्यर्थः । वाताय कपिला विद्युत् ।
हितयोगे च ब्राह्मणाय हितम् ।

(ख) अत्रेदं बोध्यम् । तुमर्थाच्च भाववचनात् । योगाय याति यष्टुं यातीत्यर्थः ।

(ग) भक्तादावित्यादिशब्दात् क्त क्तवतु कि उ इष्णु उक क्त्वाद्यन्ताव्यय शतृ शान क्वसु कान खलर्थ शीलार्थ तृच् भविष्यदर्थकाकभविष्यदाद्यमण्येन इत्यादयो गृह्यन्ते । कमेरनिषेधः । लक्ष्म्याः कामुको हरिः ।

र्मणि च षष्ठी स्यात् क्तादीन् विना ॥ कृष्णेन क्रियते इति कृष्णस्य कृतिः । क्तिरिति स्त्रियां भावेऽर्थे क्तिः ॥ जगत् करोति इति जगतः कर्ता । तृवुणाविति कर्त्तरि तृप्रत्ययः ॥ कर्तृकार्ययोः किम् । शस्त्रेण भेत्तात्र करणे मा भूत् ॥ कृति किम् । कृतपूर्वी कटमत्र तद्धिते मा भूत् । कृतं पूर्वमनेनेति कारकादिति कर्तरीनिः ॥ ९७ ॥

( त० ) कर्तृकार्ययोरिति ॥ क्तादौ तु तृणा ग्रहणं न तु तृ इत्यस्य । तेन कटस्य कर्तेत्यपि अनन्तरस्य विधिर्निषेधो वेति न्यायात् ॥ ९७ ॥

( गुणकर्मणि वा ) नेताऽश्वस्य ग्रामं ग्रामस्य वा(क) ॥ ५८ ॥

( सु० ) गुणकर्मणि वा ॥ अमुख्यकर्मणि वा षष्ठी स्यात् अक्तादौ कृति ॥ नेताऽश्वस्य ग्रामं ग्रामस्य वा । कर्तरि तृप्रत्ययः । ग्राममिति गौणकर्म ॥ ९८ ॥

(उभयप्राप्तौ कृति कर्तरि षष्ठी न) आश्चर्यो गवां दोहोऽगोपेन ५९
स्त्रीप्रत्यययोरकाकारयोर्योगे नोक्तम् ॥ भेदिका बिभित्सा वा रुद्रस्य जगतः ॥ ६० ॥

( सु० ) उभयप्राप्तौ कृति कर्तरि षष्ठी न ॥ उभयोः कर्तृकर्मणोः प्राप्तिर्यस्मिन् स उभयप्राप्तिस्तस्मिन्नुभयप्राप्तौ कृत्प्रत्यये कर्तरि षष्ठी न स्यात्। कर्तृषष्ठीनिषेधकमिदम्। कर्माण षष्ठी तु कर्तृकार्ययोरनेनैव ॥ अगोपेन गावो दुह्यन्ते इति दोहः । भावे घञ् । स्त्रीप्रत्यययोरकाकारयोर्योगे नोक्तम् । स्त्रियां क्तिरित्यधिकारे कृतयोरकाकारयोर्योगे कर्तरि कर्मणि चोभयत्र षष्ठी स्यात् । कर्तरि षष्ठी नेति पूर्वोक्तं न प्रवर्तते इत्यर्थः । भेदनं भेदिका । धात्वर्थनिर्देशे वुण् वक्तव्य इति वुण् । युवोरनाकावित्यकादेशः । 'आबतः स्त्रियाम्' इत्याप् । काप्यत इतीत्वम् भेत्तुमिच्छाबिभित्सा । भिदेः सप्रत्यये 'नानिटि से' इति न गुणः ॥ प्रत्ययान्तात् स्त्रियामङित्यङ् । तत आप् । रुद्रेण जगतः भिद्यते इति भेदिका रुद्रस्य जगतः । भावे वुण् ॥ रुद्रेण जगत् बिभित्स्यते इति बिभित्सा रुद्रस्य जगत् । भावेऽङ् ॥ ९९–६० ॥

( त० ) उभयप्राप्ताविति कर्तृकर्मप्राप्तावित्यर्थः ॥ ९९ ॥

( शेषे कृति वा ) शब्दानामनुशासनमाचार्येणाचार्यस्य वा ॥ ६१ ॥

( सु० ) शेषे कृति वा ॥ शेषेऽककारभिन्ने कृन्मात्रप्रत्यये उभयप्राप्तौ कर्तरि षष्ठी वा स्यात् ॥ आचार्येण शब्दा अनुशिष्यन्तेऽनेनेति शब्दानामनुशासनमाचार्येणाचार्यस्य वा । साधनाधारयोरिति करणे युट् ॥ ६१ ॥

( वर्तमानाधारार्थक्तस्य योगे षष्ठी ) राज्ञां मतो बुद्धः पूजितो वा । इदमेषां शयितम् ॥ क्तादौ तु कुर्वन् कुर्वाणः चकृवान् चक्राणः चक्रिर्वा सुखं हरिः । हरिं दिदृक्षुः अलङ्करिष्णुर्वा । दैत्यान् घातुको हरिः । जगत्स्रष्टा सुखं कर्तुम् । विष्णुना हता दैत्याः । दैत्यान् हतवान् हरिः । ईष-

( क ) अश्वस्येति प्रधानकर्मणि षष्ठी ग्रामस्येति गौणकर्मणि वा षष्ठी ।

ऽव् यस्वरे' इत्यव् ॥ यूनो भावः नो वेति टिलोपो न यौवनम् ॥ शिशोर्भावः शैशवम् । मुनेर्भावः मौनम् ॥ होतुर्भावः हौत्रम् ॥ उद्गातुर्भावः औद्गात्रम् ॥ ८९ ॥

( त० ) लाघवमिति लघोर्भाव इति विग्रहः ॥ ८९ ॥

**( ऋ र इमनि )** हसादेर्लघोर्ऋकारस्य रेफो भवति इमनि इष्ठेयसोश्च(क) ॥ पृथोर्भावः प्रथिमा । म्रदिमा । क्रशिमा । द्रढिमा ॥ लघोः किम् । कृष्णिमा ॥ हसादेः किम् । ऋजिमा ॥ ९० ॥

( सु० ) ऋ र इमनि ॥ ऋ इति षष्ठ्यन्तं सांकेतिकम् ॥ पृथोर्भावः । टिलोपः रत्वम् प्रथिमा । अणपि । पार्थवम् । मृदोर्भावः म्रदिमा, मार्दवम् ॥ कृशस्य भावः क्रशिमा ॥ दृढस्य भावः द्रढिमा ॥ कृष्णस्य भावः कृष्णिमा । लघोरभावान्न रत्वम् ॥ ऋजोर्भावः ऋजिमा । हसादित्वाभावान्न रत्वम् ॥ ९० ॥

( त० ) ऋ र इमनि ॥ प्रयोगानुसरणमेव हसादेर्लघोरिति व्याख्याने शरणम् ।९०।

**( बहोर्लोपो भू च बहोः )** बहोः परेषामिमनादीनामिवर्णस्य लोपो बहोर्भूरादेशश्च ॥ बहोर्भावो भूमा ॥ ९१ ॥

( सु० ) बहोर्लोपो भू च बहोः ॥ बहुरुदन्तः । शेषं सुगमम् ॥ ९१ ॥

( त० ) बहोरिति ॥ बहोरिति पञ्चम्यन्तम् । ततश्च पञ्चमीनिर्दिष्टत्वाल्लोप इवर्णस्यैवेत्याशयेनेवर्णस्येत्युक्तम् । पुनर्ग्रहणात् बहोर्भूःस्थानित्वम् ॥ ९१ ॥

**( स्तेनाद्यो नलोपश्च )** स्तेनस्य कर्म भावो वा स्तेयम् ॥ ९२ ॥

( सु० ) स्तेनाद्यो नलोपश्च ॥ स्तेनशब्दाद्यप्रत्ययः स्याद्भावे कर्मणि चार्थे नलोपश्च ॥ स्तेन चौर्ये । पचाद्यः । स्तेयं चौर्यम् ॥ ९२ ॥

**( समूहेऽर्थेऽपि )** मयूराणां समूहो मायूरम् । काकम् । क्षैत्रम् । कैदारिकम् । गाणिक्यम् । ताद्धितयस्वरयोः पुंवत् । हास्तिकम् । गार्भिणम् । ग्रामता । जनता । बन्धुता । पाश्या । वात्या । खल्या । गव्या । वार्द्धकम् । कैदार्यम् । कावचिकम् । ब्राह्मण्यम् । वाडव्यम् । माणव्यम् । गजता । सहायता ९३

( सु० ) समूहेऽर्थेऽपि ॥ समूहेऽर्थेऽपि अणादयः प्रत्ययाः स्युः ॥ मयूराणां समूहः अण् । मायूरम् ॥ काकानां समूहः काकम् ॥ क्षेत्राणां समूहः क्षैत्रम् ॥ केदाराणां समूहः। इकः । णितो वेति णित्त्वाद्वृद्धिः । कैदारिकम् । गणिकानां समूहः । यण् गाणिक्यम् ॥ हस्तिनां समूहः । इकः । नो वेति टिलोपः । हास्तिकम् ॥ गर्भिणीनां समूहाऽण् । यस्य लोप इति लोपः । गार्भिणम् । नो वेति टिलोपाऽभावोऽत्र ॥ ग्रामाणां समूहः । तः । ग्रामता ॥ जनानां समूहो जनता ॥ बन्धूनां समूहो बन्धुता ॥ पाशानां समूहः । यण् । पाश्या ॥ वातानां समूहो वात्या ॥ खलानां समूहः खल्या । णितो वेति न वृद्धिः ॥ गवां समूहो गव्या । 'वोऽव् यस्वरे' इत्यव् ॥ वृद्धानां समूहः । कः । णितो वेति णित्त्वाद्वृद्धिः । वार्धकम् ॥ केदाराणां समूहः । यण् । कैदार्यम् ॥ कवचिनां समूहः ।

( क ) वक्तव्यत्वेन प्रयोगानुसारित्वाद्धसादेर्लघोरित्येव नेह । ऋजिमा । कृष्णिमा ।

इकः । कावचिकम् ॥ ब्राह्मणानां समूहः । यण् । ब्राह्मण्यम् ॥ वाडवानां समूहो वाडव्यम् ॥ माणवानां समूहो माणव्यम् ॥ गजानां समूहः । तः । गजता ॥ सहायानां समूहः सहायता ॥ ९३ ॥

( त० ) पाश्येति ॥ पाशानां समूह इति विग्रहः । बोध्यं लोकात् ॥ ९३ ॥

**( पर्श्वा ड्वण् )** पर्शूनां समूहः पार्श्वम् । साक्तुकम् । धैनुकम् । रथ्या ॥ ९४ ॥

( सु० ) **पर्श्वा ड्वण्** ॥ पर्शुशब्दात् ड्वण् प्रत्ययः स्यात् । समूहे । डित्वाट्टिलोपः ॥ पर्शूनां समूहः पार्श्वम् ॥ सक्तूनां समूहः साक्तुकम् ॥ धेनूनां समूहः धैनुकम् ॥ रथानां समूहः । यण् । णितो वेति न वृद्धिः । रथ्या ॥ ९४ ॥

( त० ) पार्श्वमिति ॥ डित्वाट्टिलोपः ॥ ९४ ॥

**( खलगोरथेभ्य इनित्रकट्याः )** खलिनि । गोत्रा । रथकट्या ॥ ९५ ॥

( सु० ) **खलगोरथेभ्य इनित्रकट्याः** ॥ खलादिभ्यः क्रमात् एते स्युः ॥ खलानां समूहः । नृण इतीप् । खलिनी ॥ गवां समूहो गोत्रा ॥ रथानां समूहो रथकट्या ॥ ९५ ॥

( त० ) **खलगोरथेभ्य** इति ॥ यथासंख्यं प्रत्ययाः ॥ खलिनीति ॥ खलानां समूहः । एवमन्यत्रापि ॥ ९५ ॥

**( हिते च )** सूर्याय हितः सूरीयः । आत्मनीनः । विश्वजनीनः(क) । मातृभोगीणः । अपूपाय हितम् अपूप्यम् । अपूपीयम् । आमिक्ष्यम्—आमिक्षीयम् । शङ्कव्यम् । गव्यम् । हविष्यम् । खल्यम् । यव्यम् ॥ ९६ ॥

( सु० ) **हिते च** ॥ अणादयः प्रत्यया हितेऽर्थे च स्युः ॥ सूर्याय हित इति सूर्यागस्त्ययोरीये ईपि चेति यलोपः सूरीयः । णीयः ॥ आत्मने हितः । नो वेत्यस्य टिलोपो न । आत्मनीनः । ईनः ॥ विश्वजनाय हितः विश्वजनीनः । कर्मधारयादेवेष्यते । विश्वस्य जनः सर्वसाधारणो वेश्यादिरिति तत्पुरुषे विश्वो जनोऽस्येति बहुव्रीहौ च विश्वजनाय हितं विश्वजनीयम् । णीय एव ॥ मातुर्भोगः शरीरं मातृभोगः । मातृभोगाय हितः मातृभोगीणः । णत्वम् । "भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः" इत्यमरेण यद्यप्यहेरित्युक्तं तथापि प्रयोगबाहुल्याभिप्रायम् । तच्छक्तिस्तु शरीरमात्रेऽप्यस्ति इत्याकरः ॥ अपूपेभ्यो हितम् अपूप्यं चूर्णम् । ण्यः । णितो वेति न वृद्धिः अपूपीयः । णीयः ॥ आमिक्षायै हितं ण्यणीयौ । आमिक्ष्यम्-आमिक्षीयम् । 'हविः सान्नाय्यमामिक्षा शृतोष्णक्षीरजं दधि' इति हैमः ॥ आमीयते क्षिप्यते दधि यत्र सा आमिक्षा ॥ शङ्कवे हितं शङ्कव्यम् । ण्यः । णितो वेति न वृद्धिः । वोऽवित्यव् ॥ गवे हितं गव्यम् ॥ हविषे हितं हविष्यम् ॥ खलाय हितं खल्यम् ॥ यवेभ्यो हितं यव्यम् ॥ ९६ ॥

( त० ) सूरीय इति ॥ सूर्यागस्त्ययोरितीये यलोपः ॥ ९६ ॥

---

( क ) **विश्वजनीन इति** । विश्वजनाय हितः विश्वजनीनः । कर्मधारयादेवेष्यते । विश्वस्य जनः सर्वसाधारणो वेश्यादिरिति तत्पुरुषे विश्वो जनोऽस्येति बहुव्रीहौ च विश्वजनाय हितं विश्वजनीयम् । णीय एव ।

**(शुनो वस्य ऊर्वा च दीर्घः)** शुने हितं शून्यम् , शुन्यम्॥९७॥

( सु० ) **शुनो वस्य ऊर्वा च दीर्घः** ॥ श्वन्शब्दस्य वकाराकारयोरुत्वं भवति उतश्च वा दीर्घः । नो वेति टिलोपो न भवति वाशब्दस्य व्यवस्थार्थत्वात् ॥ शून्यम् । शुन्यम् ॥ ९७ ॥

**( ऊधसो नङ् )** ऊधन्यः ॥ ९८ ॥

( सु० ) **ऊधसो नङ्** ॥ ऊधस्शब्दस्य नङादेशो भवति ॥ ङित्वादन्तस्य स्थाने नङ् । अकार उच्चारणार्थः ॥ ऊधसे हितः । णितो वेति न वृद्धिः । ऊधन्यः ॥ ९८ ॥

( त० ) **उधन्य इति** ॥ ऊधसे हितः ॥ ९८ ॥

**( अजाविभ्यां थ्यः )** अजथ्या । अविथ्या ॥ ९९ ॥

( सु० ) **अजाविभ्यां थ्यः** ॥ आभ्यां थ्यप्रत्ययः स्याद्धितेऽर्थे ॥ अजेभ्यो अजाभ्यो वा हिता अजथ्या । थ्यप्रत्ययस्य तरादौ पाठात् पुंवद्भावे रूपं तुल्यम् । अविभ्यो हिता अविथ्या ॥ सर्वस्मै हितं सार्वम् । अण् सार्वीयम् । णीयः वृद्धिः ॥ ९९ ॥

( त० ) **अजथ्येति** ॥ अजायै हिता ॥ ९९ ॥

**( अस्त्यर्थे मतुः )** नाम्नः (क) ॥ गावोऽस्यास्मिन्वा सन्ति गोमान् । श्रीर्विद्यतेऽस्य श्रीमान् । विदुष्मान् । गोमती ॥ १०० ॥

( सु० ) **अस्त्यर्थे मतुः** ॥ प्रथमान्तान्नाम्नो मतुप्रत्ययो भवति अस्यास्तीत्यर्थे अस्मिन्नस्तीत्यर्थे च ॥ उदित्वात्पुंसि ञितो नुमिति नुम् । स्त्रियां च ङ्ञित इतीप् । क्लीबे शौ नुम् । "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ॥ सम्बन्धेऽस्तिविवक्षायां भवन्ति मत्विनादयः(ख) ॥ १ ॥" अस्तीत्यस्य विवक्षायां ये मत्वादयः प्रत्यया विधीयन्ते ते भूमादिषु विषयेषु भवन्ति । भूमा बहुत्वम् । यथा गावोऽस्यास्मिन्वा सन्ति स गोमान् ॥ निन्दायां यथा । ककुदावर्तिनो कन्या ॥ प्रशंसायां यथा । रूपवान् ॥ नित्ययोगे यथा । क्षीरिणः वृक्षाः ॥ अतिशायने यथा । उदरिणो कन्या ॥ सम्बन्धः संसर्गः । संयोग इति यावत् । तत्र यथा । दण्डी पुरुषः ॥ श्रीरस्ति अस्यास्मिन्वा श्रीमान् विद्वांसोऽस्यास्मिन्वा सन्ति वसोर्व उरित्युत्वे षत्वम् । विदुष्मान् देशः ॥ ङ्ञित इतीप् । गोमती ॥१००॥

( त० ) **अस्त्यर्थे मतुरिति** ॥ अस्तीत्यत्र । लिङ्गवचने अविवक्षिते । कालस्तु विवक्षितः । तथा चास्तिकर्तृभूतादुक्तान्नाम्नः भूमाद्यर्थे मतुप्रत्ययः । अस्तीत्यनेन स्वाम्याधारयोराक्षेपः । एवं च प्रथमान्तान्नाम्नोऽस्तिकर्तुरस्यास्मिन्नित्यर्थे मतुरिति पर्यवसितोऽर्थः । उक्तं च । "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां जायन्ते मत्विनादयः ॥" अत्र दीक्षिताः । अस्तिविवक्षायां ये मतुबादयो विधीयन्ते ते भू-

---

( क ) अस्त्यर्थ इति । अस्तेरर्थोऽस्त्यर्थो विद्यमानार्थस्तस्मिन्नाम इति प्रथमान्तपरम् । ततश्च प्रथमान्तान्नाम्नोऽस्त्युपाधिकान्मतुरित्यर्थः । अस्याऽस्मिन् वास्तीत्यर्थः ।

( ख ) अत्र केचित्—

अस्ति विवक्षायां ये मतुबादयो विधीयन्ते ते भूमादिषु विषयेषु भवन्तीति वार्त्तिकार्थः । भूमा बहुत्वम् तच्चापेक्षा यस्य यावता तस्य तावता बोध्यम् । भूम्नि गोमान् ।।अन्यट्टीकायां बोध्यम् ।

मादिषु विषयेषु भवन्तीतिवार्तिकार्थः । भूमा बहुत्वम् । तच्चापेक्षा यस्य यावता तस्य तावता बोध्यम् । भूम्नि गोमान् ॥ निन्दायां ककुदावर्तिनी कन्या ॥ प्रशंसायां रूपवान् ॥ नित्ययोगे क्षीरिणो वृक्षाः ॥ अतिशायने उदरिणी कन्या ॥ संसर्गे दण्डी । संसर्गः संयोगः तेन संयुक्त एव न तु गृहावस्थितोऽपि दण्डः । एतेन एतदुदाहृत्य अस्त्यर्थोदाहरणं चोक्तमित्युक्तवन्तो वासुदेवादयो निरस्ताः । यद्यपि यदस्य तत्तस्मिन्नपि यदस्मिन् तत्तस्य भवत्येवेत्युभयनिर्देशो व्यर्थस्तथापि वृक्षवान्पर्वतः पुत्रवांश्चत्र इत्यत्र पर्वते वृक्षसम्बन्धस्य चैत्रे पुत्राधारत्वस्य चासत्त्वादुभयनिर्देशः । असन्निहितपुत्रस्यापि पुत्रवानिति प्रतीतेः सामीपिकाधारत्वस्य विवक्षणादिति ॥ १०० ॥

**( अइकौ च मत्वर्थे )** नाम्नः अः इकस्त्वदन्तात्(क) ॥ अर्शसः । वैजयन्तः । दण्डिकः । धनिकः ॥ १०१ ॥

**( सु० ) अइकौ च मत्वर्थे** ॥ प्रत्ययभ्रमनिरासाय संधिरत्र न कृतः ॥ अइकाविति-निर्देशेन समासे संहिताया अनित्यत्वं ज्ञापितम् । तेन पदान्तानां समानानामृतीत्यनेन सप्तऋषीणामित्यत्र वा संहिता भवति ॥ अर्शोऽस्यास्मिन्वाऽस्ति अर्शसः ॥ वैजयन्ती पताकाऽस्यास्मिन्वाऽस्ति वैजयन्तः । अः ॥ इकप्रत्ययस्तु अकारान्तादेव । दण्डोऽस्यास्मिन्वाऽस्ति दण्डिकः ॥ धनमस्यास्मिन्वाऽस्ति धनिकः । इकः ॥ १०१ ॥

**( त० )** अइकाविति ॥ अश्च इकश्च तौ । सन्ध्यभावोऽसन्देहार्थः ॥ १०१ ॥

**( मान्तोपधाद्वन्त्विनौ )** मान्तान्मान्तोपधादवर्णान्तादवर्णोपधाच्च वतुरिनस्त्वदन्तात् ॥ किम्वान् । लक्ष्मीवान् । धनवान् विद्यावान् । यशस्वान्(ख) । भास्वान् । क्षेत्री । दण्डी ॥ १०२ ॥

**( सु० ) मान्तोपधाद्वन्त्विनौ** ॥ मश्च अश्च मौ अन्तश्च उपधा च अन्तोपधे मौ अन्तोपधे यस्य तत् मान्तोपधं तस्मान्मान्तोपधात् प्रथमान्ताद्वन्त्विनौ प्रत्ययौ भवतः अस्त्यर्थे । इन् प्रत्ययस्तु अकारान्तादेव ॥ मतोरपवादोऽयं विधिः ॥ यथासंख्यं तु न गुरुकरणात् । तथाहि । म् अन्ते यस्य तन्मन्तम् । अ उपधा यस्य तत् ओपधं मन्तं च ओपधं मन्तं च ओपधं च अनयोः समाहारो मन्तौपधं तस्मान्मतौपधात् । इत्थं हि स्पष्टं यथासंख्यं लभ्यते । तदकरणाद्यथासंख्याभावः ॥ वतोरुकारो त्रितो नुमिति नुमर्थः । इन्नित इतीवदर्थश्च । किमस्यास्मिन्वाऽस्ति किंवान् ॥ लक्ष्मीरस्यास्मिन्वाऽस्ति लक्ष्मीवान् ॥ धनमस्यास्मिन्वाऽस्ति धनवान् ॥ विद्याऽस्यास्मिन्वाऽस्ति विद्यावान् ॥ यशोऽस्यास्ति अस्मिन्वाऽस्ति यशस्वान् ॥ भाः अस्यास्मिन्वाऽस्ति भास्वान् ॥ क्षेत्रमस्यास्मिन् वाऽस्ति क्षेत्री ॥ दण्डोऽस्यास्मिन्वाऽस्ति दण्डी ॥ १०२ ॥

**( त० )** मान्तोपधादिति ॥ मश्च अश्च मौ अन्तश्च उपधा च अन्तोपधे मौ अन्तो-

---

( क ) अइकाविति सन्ध्यभावोऽसन्देहार्थः ।

( ख ) यशस्वानिति । तान्तसान्तयोर्हसादावस्त्यर्थे अपदान्तता वाच्या । अतो न विसर्गः । यस्वरयोस्तु सर्वेषाम् भवदीय इत्यत्र तु सहादित्वादत्वं बोध्यम् । केचित्तु—अपदान्तेऽपि क्वचिच्चपस्य अवत्वं भवतीति वदन्ति । तेन भवदीय इति दत्वम् ।

पधे यस्य तस्मातोपधं तस्मात् । यथासंख्यं नाशङ्कनीयं लाघवमुत्सृज्य गौरवस्यात्राहत-त्वात् । तथाहि । मन्तौपधादित्येवोच्येत । म् अन्तं यस्य तन्मन्तम् । अ उपधा यस्य तद् ओपधं मन्तं च ओपधं च मन्तौपधं तस्मात् ओदौतोर्लाघवगौरयोर्विशेषाभावात् । इत्याशयेनाह-मकारान्तादित्यादि ॥ यशस्वानिति ॥ तान्तसान्तयाहंसाद्यावस्त्यर्थे अपदान्तता वाच्या अतो न विसर्गः । यत्वरयोस्त सर्वेषाम् । भवदीय इत्यत्र तु सहा-दित्वाहत्वं बोध्यम्(क) ॥ १०२ ॥

यवादेर्न ) यवमान् । भूमिमान् ॥ १०३ ॥

( सु० ) यवादेर्न ॥ यवादेर्गणान्मतुरेव स्यात् वलिनौ न ॥ यवा अस्यास्मिन् वा सन्ति यवमान् ॥ भूमिरस्यास्मिन्वाऽस्ति भूमिमान् ॥ १०३ ॥

( त० ) यवादेर्नेति ॥ णितो वेत्यस्य व्यवस्थितस्य मण्डूकप्लुत्याऽनुवर्तनान्नेत्यर्थः॥

( तडिदादिभ्यश्च ) ताडित्वान् । विद्युत्वान् । मायी । मायिकः । व्रीही । व्रीहिकः ॥ १०४ ॥

( सु० ) तडिदादिभ्यश्च ॥ एभ्यो वतुइकइन्प्रत्ययाः स्युः अस्त्यर्थे ॥ तडिदस्या-स्मिन् वाऽस्ति तडित्वान् ॥ विद्युदस्यास्मिन् वाऽस्ति विद्युत्वान् ॥ मायाऽस्यास्मिन् वाऽस्ति मायी । इन् ॥ मायिकः । इकः ॥ व्रीहयोऽस्यास्मिन् वा सन्ति व्रीहि । इन् व्रीहिकः । इकः ॥ १०४ ॥

( त० ) तडित्वानिति ॥ अपदान्तत्वान्न दत्वम् ॥ १०४ ॥

( लोमपामपिच्छादिभ्यः शनेलाः ) लोमशः । गिरिशः । पामनः । दद्रुणः । अङ्गना ॥ १०५ ॥

( सु० ) लोमपामपिच्छादिभ्यः शनेलाः ॥ लोमादिभ्यः शः, पामादिभ्यो नः, पिच्छादिभ्य इलः, स्यादस्त्यर्थे ॥ लोमान्यस्यास्मिन्वा सन्ति लोमशः । लोमवान् । वतुः ॥ गिरिरस्याऽस्मिन् वाऽस्ति गिरिशः पामास्यास्मिन्वाऽस्ति पामनः ॥ नाम्नो नो लोपशावेविति नलोपः ॥ शाकीपलालीदद्रूणां ह्रस्वत्वं च नप्रत्यये । एषां ह्रस्वः । महच्छाकं मत शाको ईप् । तद्व१ शाकिनम् ॥ महत्पलालं पलाली । तद्व१ पलालिनम् ॥ दद्रुस्त्व रोगविशेषः । दद्रुरस्यास्मिन्वास्ति दद्रुणः । णत्वम् ॥ अङ्गमस्या अस्यां वाऽस्ति अङ्गना ॥ १०५ ॥

( त० ) लोमपामपिच्छादिभ्यः शनेला इति ॥ यथासंख्यं बोध्यम् ॥१०५॥

( लक्ष्म्या अच्च ) लक्ष्मणः ॥ १०६ ॥

( सु० ) लक्ष्म्या अच्च ॥ लक्ष्मीशब्दस्याकारान्तादेशः स्यान्नप्रत्यये ॥ लक्ष्मीर-स्यास्मिन्वाऽस्ति लक्ष्मणः । णत्वम् ॥ १०६ ॥

( त० ) लक्ष्मण इति ॥ लक्ष्मीरस्यास्तीति विग्रहः ॥ १०६ ॥

( विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः ) विषुणः(ख) । पि-

---

(क) केषांचिन्मते—क्वचिदपदान्तेऽपि वपस्य अवत्वं भवति भवे परे इति । तेन भवदीय इति ।

(ख) यदि कृतसन्धेः स्यात्तदा वलोपे विष्ण इति स्यादित्यत आह—अकृतसन्धेरिति । विषुणा

च्छिलः । तुन्दिलः । फेनिलः ॥ १०७ ॥

( सु० ) विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः ॥ विष्वक्शब्दस्योत्तरपदस्य लोपः स्यात् सन्ध्यभावकृते सति नप्रत्यये ॥ विषु साम्येऽव्ययम् । विषु अञ्चतीति विष्वक् । विष्वगस्यास्मिन्वाऽस्ति । विषुणः । विषुवदाख्यः कालः । 'समरात्रिंदिवे काले विषुवद्विषुणं (वं) च तत्' इत्यमरः ॥ पिच्छं विच्छणमस्यास्मिन् वाऽस्ति पिच्छिलः ॥ तुन्दमस्यास्मिन्वा तुन्दिलः ॥ फेनमस्यास्मिन्वा फेनिलः ॥ उरसिलः । उरस्वान् ॥ पिच्छवान् ॥ १०७ ॥

( त० ) विषुण इति ॥ विषु नाना अञ्चन्तीति विष्वञ्चि तान्यस्य सन्तीति विषुणः विषुवदाख्यः कालः । तस्य हि नानागतानि दिनानि सन्ति दिनान्तराणां न्यूनाधिकभावस्य तन्मूलकत्वात् । यदि कृतसन्धेः स्यात्तदा वलोपे विष्ण इति स्यादित्यत आह— अकृतसन्धेरिति ॥ १०७ ॥

( सिध्मादेर्लः ) सिध्मलः । चूडालः ॥ १०८ ॥

( सु० ) सिध्मादेर्लः ॥ सिध्मादेर्गणाल्लप्रत्ययः स्यादस्त्यर्थे ॥ पक्षे वतुः ॥ सिध्मवान् । वात दन्त बल ललाट वत्स अंसः फेन धमनि क्षुद्रजन्तु उपताप गडु मणि विजय निष्पाठ पांशु हनु पार्ष्णि चूडा सिध्मादयः ॥ पार्ष्णिधमन्योर्दीर्घश्च । पार्ष्णीलः । धमनीलः ॥ क्षुद्रजन्तुर्यथा । यूकालः । मक्षिकालः ॥ उपतापो रोगः । विपादिकाऽस्यास्ति विपादिकालः । 'पादस्फोटो विपादिका' इत्यमरः ॥ सिध्ममस्यास्मिन्वाऽस्ति सिध्मलः ॥ चूडाऽस्यास्मिन्वाऽस्ति चूडालः ॥ वातदन्तबलललाटानामूङ् च । वातूलः । इत्यादि ॥ १०८ ॥

(कुमुदनडवेतसेभ्यो ड्मतुः)कुमुद्वान् । नड्वान् । वेतस्वान् ॥ १०९ ॥

( सु० )कुमुदनडवेतसेभ्यो ड्मतुः ॥ एभ्यो ड्मतुप्रत्ययः स्यादस्त्यर्थे ॥ डित्वाट्टिलोपः ॥ कुमुदान्यस्यास्मिन्वा सन्ति कुमुद्वान् । नडा अस्यास्मिन् वा सन्ति नड्वान् ॥ वेतसा अस्यास्मिन् वा सन्ति वेतस्वान् ॥ १०९ ॥

( महिषाड्डमतुः ) महिष्मान् देशः ॥ ११० ॥

( सु० ) महिषाड्डमतुः ॥ महिषशब्दात् ड्मतुः स्यादस्त्यर्थे ॥ महिषा अस्यास्मिन् वा सन्ति महिष्मान् । टिलोपः ॥ ११० ॥

( नडशादाद् ड्वलः ) नड्वलः । शाद्वलः ॥ १११ ॥

( सु ) नडशादाद् ड्वलः ॥ आभ्यां ड्वलप्रत्ययः स्यादस्त्यर्थे ॥ नडा अस्यास्मिन्वा सन्ति नड्वलः । डित्वाट्टिलोपः ॥ शादोऽस्यास्मिन् वाऽस्ति शाद्वलः । 'शादो जम्बालशष्पयोः' इत्यमरः ॥ १११ ॥

( शिखाया वलः ) शिखावलः ॥ ११२ ॥

( सु० ) शिखाया वलः ॥ शिखाशब्दाद्वलप्रत्ययः स्यादस्त्यर्थे ॥ शिखाऽस्यास्मिन्वाऽस्ति शिखावलः ॥ ११२ ॥

---

इति । विषु नाना अञ्चन्तीति विष्वञ्चि तान्यस्य सन्तीति विषुणः । विषुवदाख्यः कालः । तस्य हि नानागतानि दिनानि सन्ति । दिनान्तराणां न्यूनाधिकभावस्य तन्मूलकत्वात् ।

( नडादीनामीये कुक् ) नडकीयम् ॥ ११३ ॥

( सु० ) नडादीनामीये कुक् ॥ नडादीनां कुगागमो भवति णीयप्रत्यये ॥ नड प्लक्ष बिल्व वेत्र वेतस कुञ्चा तक्षन् नडादयः । नडा अस्यास्मिन्वा सन्ति नडकीयम्॥११३॥

( कुञ्चा ह्रस्वत्वं च ) कुञ्चकीयम् ११४ ॥

( सु० ) कुञ्चा ह्रस्वत्वं च ॥ कुञ्चाशब्दस्य ह्रस्वो भवति णीये ॥ कुञ्चाऽस्यास्मिन्वाऽस्ति कुञ्चकीयम् ॥ एवं तक्षकीयम् । निपातनान्नलोपः । बिल्वकीयम् ॥ वेत्रकीयम्॥११४॥

( शृङ्गवृन्दाभ्यामारकः ) शृङ्गारकः । वृन्दारकः ॥ ११५ ॥

( सु० ) शृङ्गवृन्दाभ्यामारकः ॥ आभ्यामारकप्रत्ययः स्यादस्त्यर्थे ॥ शृङ्गमस्यास्मिन्वाऽस्ति शृङ्गारकः । 'शृङ्गं प्राधान्यसान्वोश्च' इत्यमरः ॥ वृन्दमस्याऽस्मिन् वाऽस्ति वृन्दारकः । 'वृन्दारकौ रूपिमुख्यौ' इत्यमरः ॥ ११५ ॥

( फलबर्हाभ्यामिनः ) फलिनः । बर्हिणः ॥ ११६ ॥

( सु० ) फलबर्हाभ्यामिनः ॥ आभ्यामिनप्रत्ययः स्यादस्त्यर्थे ॥ फलमस्यास्मिन्वाऽस्ति फलिनः ॥ बर्हमस्यास्मिन्वाऽस्ति बर्हिणः । णत्वम् ॥ ११६ ॥

( मलादिनः ) मलिनः ॥ ११७ ॥

( ईमसश्च ) मलीमसः ॥ ११८ ॥

( हृदयादालुः ) हृदयालुः ॥ ११९ ॥

( सु० ) हृदयादालुः ॥ हृदयशब्दादालुः प्रत्ययः स्यादस्त्यर्थे ॥ हृदयमस्यास्मिन्वाऽस्ति हृदयालुः । पक्षे हृदयी । हृदयिकः । हृदयवान् ॥ ११९ ॥

( शीतोष्णतृप्रेभ्यस्तदसहने ) शीतं न सहते शीतालुः । उष्णालुः । तृप्रं दुःखं न सहते तृप्रालुः ॥ १२० ॥

( सु० ) शीतोष्णतृप्रेभ्यस्तदसहने ॥ एभ्य आलुप्रत्ययः स्यात् प्रकृत्यर्थासहनेऽर्थे । शीतं न सहते स शीतालुः ॥ उष्णं न सहते उष्णालुः ॥ तृप्रं दुःखं न सहते तृप्रालुः ॥ तृप्रः पुरोडाशः । तृप्रं दुःखमित्यर्थः ॥ १२० ॥

( हिमादेलुः ) हिमं न सहते हिमेलुः ॥ १२१ ॥

( सु० ) हिमादेलुः ॥ हिमशब्दादेलुप्रत्ययः स्यात्तदसहनेऽर्थे । १२१ ॥

( बलादूलः ) बलं न सहते बलूलः ॥ १२२ ॥

( सु० ) बलादूलः ॥ बलशब्दादूलप्रत्ययः स्यात्तदसहनेऽर्थे ॥ १२२ ॥

(वातात्समूहे च) वातं न सहते वातानां समूहो वा वातूलः ॥१२३॥

( सु० ) वातात्समूहे च ॥ वातशब्दादूलप्रत्ययः स्यात्तदसहनेऽर्थे समूहेऽर्थे च बलूलवातूलशब्दावस्त्यर्थे च व्युत्पादितौ ॥ १२३ ॥

( तः पर्वमरुद्भ्याम् ) पर्वतः । मरुत्तः ॥ १२४ ॥

( सु० ) तः पर्वमरुद्भ्याम् ॥ आभ्यां तः प्रत्ययोऽस्त्यर्थे ॥ पर्वाण्यस्यास्मिन्वा-

स्ति । नाम्नो न इति नलोपः । पर्वतः । मरुदस्यास्मिन्वाऽस्ति मरुत्तः ॥ १२४ ॥

**(ऊर्णाहंशुभंभ्यो युः) ऊर्णायुः(क) । अहंयुः । शुभंयुः ॥१२५॥**

( सु० ) ऊर्णाहंशुभंभ्यो युः ॥ एभ्यो युः प्रत्ययः स्यादस्त्यर्थे ॥ ऊर्णाऽस्यास्मिन् वाऽस्ति ऊर्णायुः । तत्र निपातनाद्यस्येत्यालोपो न । अहमिति मान्तमव्ययमहङ्कारे शुभमिति च शुभे । अहंयुरहङ्कारवान् । शुभंयुः शुभान्वितः ॥ १२५ ॥

**( स्वादामिन्नैश्वर्ये ) स्वमैश्वर्यमस्यास्मिन्वाऽस्ति स्वामी ॥१२६॥**

( सु० ) स्वादामिन्नैश्वर्ये ॥ ऐश्वर्ये स्वशब्दादामिन् प्रत्ययः स्यादस्त्यर्थे ॥ ईशिता हि ईश्वरस्तस्य भाव ऐश्वर्यम् ॥ ऐश्वर्ये किम् । स्ववान् । स्वं द्रव्यमस्यास्मिन्वाऽस्ति ॥ १२६ ॥

**( वातातीसारपिशाचानामिनिः कुक् च ) वातकी । अतीसारकी । पिशाचकी ॥ १२७ ॥**

( सु० ) वातातीसारपिशाचानामिनिः कुक् च ॥ एभ्यः इनिः प्रत्ययः स्यादस्त्यर्थे ॥ इकार उच्चारणार्थः ॥ एषां कुगागमश्च इनिप्रत्यये । वातोऽस्यास्मिन्वाऽस्ति वातकी । 'वातकी वातरोगी स्यात्' इत्यमरः ॥ अतीसारोऽस्यास्मिन्वाऽस्ति अतीसारकी । रोगे चायमिनिरिष्यते(ख) ॥ नेह । वातवती गुहा ॥ पिशाचोऽस्यास्मिन्वाऽस्ति पिशाचकी ॥ १२७ ॥

**( ज्योत्स्नादिभ्योऽण् ) ज्योत्स्नः । तामिस्रः । तापसः । सैकतः । शार्करः ॥ १२८ ॥**

( सु० ) ज्योत्स्नादिभ्योऽण् ॥ ज्योत्स्नादिभ्योऽण् स्यादस्त्यर्थे ॥ किञ्च ज्योत्स्नातमिस्राश्रृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसा अस्त्यर्थे निपात्यन्ते । ज्योतिरस्या अस्यां वाऽस्ति ज्योत्स्ना चन्द्रप्रभा । ज्योतिष्शब्दस्य निपातनादुपधालोपो नप्रत्ययश्च ॥ तमोऽस्यास्मिन्वा तमिस्रम् । तमस्शब्दस्योपधाया इत्वं रप्रत्ययश्च ॥ श्रृङ्गमस्यास्मिन्वाऽस्ति श्रृङ्गिणः अत्र इनप्रत्ययो निपातनात् ॥ ऊर्जोऽस्यास्मिन्वाऽस्ति ऊर्जस्वी ऊर्जस्वलः विन्वलप्रत्ययौ निपातनात् ॥ गौरस्यास्मिन् वाऽस्ति गोमी । मिन् प्रत्ययो निपातनात् ॥ मलोऽस्यास्मिन्वाऽस्ति मलिनः मलीमसः । मलशब्दादिनेमसप्रत्ययौ निपातनादिति ॥ ज्योत्स्नाऽस्यास्मिन्वाऽस्तीत्यणि ज्योत्स्नः शुक्लपक्षः ॥ तमिस्रमस्यास्मिन्वाऽस्ति तामिस्रः कृष्णपक्षो नरकविशेषश्च ॥ 'तमिस्रा तामसी रात्रिर्ज्योत्स्नी चान्द्रिकयाऽन्विता' इत्यमरकोशे तु तामसस्य तमिस्रा इत्यन्न अणन्तमिति न विरोधः ॥ तपोऽस्यास्मिन्वाऽस्ति तापसः । विन्प्रत्ययोऽपि । तपस्वी ॥ सिकताऽस्यास्मिन्वाऽस्ति सैकतः इलप्रत्यये सिकतिलः ॥ मतौ तु सिकतावान् शर्कराऽस्यास्मिन्वाऽस्ति शार्करः । अण् । शर्करिलः । इलः । शर्करावान् । मतुपक्षे प्रत्यय च लुक् च भवति ।

---

( क ) ऊर्णायुरिति । अत्र निपातनाद् 'यस्येत्यालोपो न ।

( ख ) रोग चायमिति । व्याख्यानादिति भावः । वातवती गुहेति । अत्र रोगस्याप्रतीतेरिनिकुकौ नेति भावः ।

सिकता । शर्करा । "स्त्री शर्करा शार्करिकः शार्करः शर्करावति । देश एवादिमावेवमुन्नेयाः सिकतावति ॥" इत्यमरः ॥ १२८ ॥

( त० ) ज्यौत्स्न इति ॥ शुक्लपक्षे । तामिस्रः कृष्णपक्षे नरकविशेषे च ॥ १२८ ॥

( ऊषशुषिमुष्कमधुखमुखकुञ्जनगपांशुपाण्डुभ्यो रः )

ऊषरः । शुषिरम् । मुष्करः । मधुरः । खरः । मुखरः । कुञ्जरः । नगरम् । पांशुरः । पाण्डुरः ॥ १२९ ॥

( सु० ) ऊषशुषिमुष्कमधुखमुखकुञ्जनगपांशुपाण्डुभ्यो रः एभ्यो रप्रत्ययः स्यादस्त्यर्थे ॥ ऊषोऽस्यास्मिन्वाऽस्ति ऊषरः । 'स्यादूषः क्षारमृत्तिका । ऊषवानूषरः' इत्यमरः ॥ शुषिरस्यास्मिन्वाऽस्ति शुषिरः । शुषिश्छिद्रम् । 'वंशादिकं तु शुषिरम्' इत्यमरः ॥ मुष्कोऽस्यास्मिन्वाऽस्ति मुष्करः । मुष्कोऽण्डः ॥ मधु माधुर्यमस्यास्मिन्वाऽस्ति मधुरः ॥ खमस्यास्मिन्वास्ति खरः । महत् कण्ठविवरं खम् । गर्दभे रूढोऽयम् ॥ मुखमस्यास्मिन्वाऽस्ति मुखरः वाचालः । कुञ्जो हस्तिहनुरस्यास्मिन्वाऽस्ति कुञ्जरः ॥ नगा वृक्षाः पर्वताश्च ते अस्यास्मिन्वा सन्ति नगरम् । जातिशब्दोऽयम् । तेन स्त्रियां जातिलक्षण ङीप् । नगरी । पांशू रजोऽस्यास्मिन्वाऽस्ति पांशुरः ॥ पाण्डुरस्यास्मिन्वाऽऽस्ति पाण्डुरः । हरिणः पाण्डुरः पाण्डुः' इत्यमरः ॥ १२९ ॥

( त० ) ऊषशुषीति ॥ ऊषा हरिणाः । पांशवः रजांसि । शुषिश्छिद्रम् । कुञ्जो हस्तिहनुः ॥ नगरमिति ॥ नगाः वृक्षाः पर्वताश्च । जातिशब्दत्वान्नगरीत्यपि ॥ पाण्डु इति ॥ पाण्डुः शुक्लो वर्णस्तद्वान् ॥ १२९ ॥

( कच्छ्वा ह्रस्वत्वं च ) कच्छुरः(क) ॥ १३० ॥

( सु० ) कच्छ्वा ह्रस्वत्वं च ॥ कच्छूशब्दाद्रः स्यादस्त्यर्थे । कच्छू इत्यस्य ह्रस्वश्च ॥ कच्छूरस्यास्मिन्वाऽस्ति कच्छुरः । कच्छू रोगविशेषः ॥ १३० ॥

( त० ) कच्छुर इति ॥ कच्छूः रोगविशेषस्तद्वान् ॥ १३० ॥

( द्युद्रुभ्यां मः ) द्युमः । द्रुमः(ख) ॥ १३१ ॥

( सु० ) द्युद्रुभ्यां मः ॥ आभ्यां मप्रत्ययः स्यादस्त्यर्थे ॥ द्यौरस्यास्मिन्वाऽस्ति द्युमः । दिव 'उ रसे' इत्युत्वम् ॥ द्रुः शाखा वृक्षश्च । द्रुरस्यास्मिन्वाऽस्ति द्रुमः । 'पलाशी द्रुद्रुमागमाः' इत्यमरः ॥ १३१ ॥

( त० ) द्युद्रुभ्यां म इति ॥ द्यौरस्यास्तीति । दिव 'उ रसे' इत्युत्वम् । अव्युत्पन्नोऽपि द्युशब्दो दिनवाच्यस्ति ॥ द्रुर्वृक्षः सोऽस्यास्तीति जनकतयेति द्रुमोऽपि वृक्ष एव ॥ १३१ ॥

( केशादिभ्यो वः ) केशवः । मणिवः । हिरण्यवः ॥ १३२ ॥

( सु० ) केशादिभ्यो वः ॥ एभ्यो वः ॥ एभ्यो वः स्यादस्त्यर्थ ॥ केशा अस्यास्मिन्वा सन्ति केशवः । केशी । इनू । केशिकः । ठकः । केशवान् । मतुः ॥ मणिरस्या-

---

( क ) कच्छूस्त्वग्रोगविशेषः । कच्छुरः पुंसि रोगविशेष इति बालमनोरमा ।

( ख ) द्यौरस्यास्तीति द्युमः । अव्युत्पन्नोऽपि द्युशब्दो दिनवाच्यस्ति । द्रुर्वृक्ष सोऽस्याऽस्तीति जनकतयेति द्रुमोऽपि वृक्षएव । रूढशब्दावेताविति बालमनोरमा ।

ऽस्मिन्वाऽस्ति मणिवः । नागविशेषः ॥ हिरण्यमस्यास्मिन् वाऽस्ति हिरण्यवो निधिविशेषः॥

( त० ) केशव इति ॥ प्रशस्ताः केशाः सन्त्यस्येति विग्रहः ॥ १३२ ॥

**( अर्णसो लोपश्च ) अर्णवः ॥ १३३ ॥**

( सु० ) अर्णसो लोपश्च ॥ अर्णस्शब्दाद्वः स्यादस्त्यर्थे । सस्य लोपश्च ॥ अर्णो जलं तद्वानर्णवः । अर्णस्वान् । वतुः ॥ १३३ ॥

( त० ) अर्णव इति ॥ अर्णांसि जलानि सन्त्यस्येति ॥ १३३ ॥

**(रजःकृष्यासुतिपरिषदूभ्यो वलः(क) रजस्वला ॥ १३४ ॥**

( सु० ) रजःकृष्यासुतिपरिषद्भ्यो वलः ॥ एभ्यो वलप्रत्ययः स्यादस्त्यर्थे ॥ रजोऽस्या अस्यां वाऽस्ति रजस्वला । 'रजः स्त्रीकुसुमेऽपि च' इत्यमरः ॥ १३४ ॥

**( कृष्यादीनां वले दीर्घः ) कृषीवलः । आसुतीवलः(ख) । परिषद्वलः ॥ १३५ ॥**

( सु० ) कृष्यादीनां वले दीर्घः ॥ वलप्रत्यये संज्ञायामेषां दीर्घः स्यात् ॥ कृषिरस्याऽस्मिन्वाऽस्ति कृषीवलः ॥ आसुतिरभिषवः । 'मद्यसन्धानमासुतिः' इति हैमः ॥ 'षुञ् अभिषवे' क्तिः ॥ आसुतिरस्यास्मिन्वाऽस्तिआसुतीवलः शौण्डिकः ॥ परितः सीदतीति परिषत् । क्विप् । पर्षदिति पाठान्तरम् । परिषदस्यास्मिन् वाऽस्ति परिषद्वलः । पर्षद्वलश्च । 'पर्षद्वलान्महाब्रह्मैराटनैकटिकाश्रमान्' इति भट्टिः ॥ १३५ ॥

( त० ) परिषद्वल इति ॥ परितः सीदतीति परिषत् ॥ १३५ ॥

**(अन्येभ्योऽपि) भ्रातृलवः । पुत्रवलः । दन्तावलः । बन्धुवलः ॥१३६॥**

( सु० ) अन्येभ्योऽपि ॥ वलप्रत्ययःस्यादस्त्यर्थे ॥ भ्रातास्यास्मिन्वास्ति भ्रातृवलः । पुत्रोऽस्यास्मिन्वाऽस्तिः पुत्रवलः । संज्ञाया अभावान्नेह दीर्घः ॥ दन्ता अस्यास्मिन्वा सन्ति दन्तावलो हस्ती । कृष्यादीनामिति दीर्घः ॥ १३६ ॥

**( तुन्दिवलिवटेर्भः ) तुन्दिभः । वलिभः । वटिभः ॥ १३७ ॥**

( सु० ) तुन्दिवलिवटेर्भः ॥ एभ्यो भप्रत्ययः स्यादस्त्यर्थे ॥ वृद्धा नाभिस्तुन्दिः । तुन्दिरस्यास्मिन्वाऽस्ति तुन्दिभः ॥ वलिरस्यास्मिन्वाऽस्ति वलिभः ॥ वटिरस्यास्मिन्वाऽस्ति वटिभः वाल्मीकगृहमित्यर्थः । पामादित्वाद्वलिनोऽपि ॥ १३७ ॥

**( एतत्किमिदंयत्तद्भ्यः परिमाणे वतुः(ग) ॥ १३८ ॥**

( सु० ) एतत्किमिदंयत्तद्भ्यः परिमाणे वतुः ॥ एभ्यो वतुप्रत्ययः स्यात् परिमाणेऽर्थे ॥ परिमाणमिह परिच्छेदकमात्रम् ॥ १३८ ॥

( त० ) एतत्किमिदंयत्तद्भ्यः परिमाणे वतुरिति ॥ मान्तोपधादित्यनेनैव सिद्धे परिमाणार्थं वचनम् ॥ १३८ ॥

---

( क ) रज इति । रजस्, कृषि, आसुति, परिषत्, एभ्योऽस्त्यर्थे वलप्रत्ययः स्याद् इत्यर्थः ।

( ख ) आसुतीवल इति । 'षुञ् अभिषवे' आङ्पूर्वात् स्त्रियां क्तिः । कृष्यादीनामिति वलप्रत्यये दीर्घः ।

( ग ) एतदिति । मान्तोपधादित्यनेनैव सिद्धे परिमाणार्थं वचनमिदम् ।

( यत्तदेतदामा वतौ ) यावान् । तावान् । एतावान् ॥ १३९ ॥

( सु० ) यत्तदेतदामा वतौ ॥ वतुप्रत्यये परे एषामाकारान्तादेशः स्यात् ॥ यत्परिमाणमस्य यावान् ॥ तत्परिमाणमस्य तावान् ॥ एतत्परिमाणमस्य एतावान् ॥१३९॥

( त० ) यत्तदेतदामा वताविति ॥ यत्तदेतच्छब्दानां वतुप्रत्यये परे आकारोऽन्तादेश इत्यर्थः ।। यावानिति ॥ यत् परिमाणमस्येति विग्रहः ॥ १३९ ॥

( किमः किर्वतोर्वस्य यः ) कियान् ॥ १४० ॥

( सु० ) किमः किर्वतोर्वस्य यः ॥ किम् शब्दस्य किरादेशः स्यात् वतुप्रत्ययस्य यकारश्च ॥ किं परिमाणमस्य कियान् ॥ १४० ॥

( इदम इश्वतोर्वस्य यः ) इयान् ॥ १४१ ॥

( सु० ) इदम इश्वतोर्वस्य यः ॥ इदम्शब्दाद्वतुः स्यात्परिमाणेऽर्थे इदम्स्थाने इशादेशश्च ॥ शित्त्वात्सर्वादेशः । वतुप्रत्ययस्य यकारश्च । इदं परिमाणमस्य स इयान् ॥१४१॥

( त० ) इदम इशिति । शकारः सर्वादेशार्थः ॥ १४१ ॥

( श्रद्धादेर्लुः ) श्रद्धालुः । कृपालुः । दयालुः ॥ १४२ ॥

( सु० ) श्रद्धादेर्लुः ॥ लुप्रत्ययः स्यादस्त्यर्थे । श्रद्धाऽस्यास्मिन्वाऽस्ति श्रद्धालुः ॥ कृपाऽस्यास्मिन्वाऽस्ति कृपालुः ॥ दयाऽस्यास्मिन्वाऽस्ति दयालुः । स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाशीङ्भ्य इत्यालुप्रत्ययेनापीष्टसिद्धेरिदं सूत्रं चिन्त्यम् ॥ १४२ ॥

( औन्नत्ये दन्तादुरः ) दन्तुरः ॥ १४३ ॥

( सु० ) औन्नत्ये दन्तादुरः ॥ उन्नते वर्तमानाद्दन्तशब्दादुरप्रत्ययः स्यादस्त्यर्थे ॥ उन्नता दन्ताः सन्त्यस्य दन्तुरः ॥ औन्नत्ये किम् । दन्तवान् ॥ १४३ ॥

( अस्मायामेधास्रग्भ्यो विनिः ) तपस्वी । ओजस्वी । वर्चस्वी । तेजस्वी । वचस्वी । मायावी । मेधावी । स्रग्वी ॥ १४४ ॥

( सु० ) अस्मायामेधास्रग्भ्यो विनिः ॥ एभ्यो विनिः स्यादस्त्यर्थे ॥ पक्षे वतुरपि ॥ तपोऽस्यास्मिन्वाऽस्ति तपस्वी ॥ । ओजोऽस्यास्मिन्वाऽस्ति ओजस्वी ॥ वर्चोऽस्यास्मिन्वाऽस्ति वर्चस्वी ॥ तेजोऽस्यास्मिन्वाऽस्ति तेजस्वी ॥ वचोऽस्यास्मिन्वाऽस्ति वचस्वी । मनोऽस्यास्मिन्वाऽस्ति मनस्वी ॥ मायाऽस्यास्मिन् वाऽस्ति मायावी । मायी । मायिकः । इनिठौ ॥ मेधाऽस्यास्मिन्वाऽस्ति मेधावी ॥ स्रगस्यास्मिन्वाऽस्तीति चोः कुरित्यनेन सिद्धे परत्वात्प्राप्तं छशषेति षत्वं निराकृत्य दिशामित कुत्वम् । स्रग्वी ॥१४४॥

( त० ) अस्मायेति ॥ असप्रत्ययग्रहणेन तदन्तस्य ग्रहणमित्य असप्रत्ययान्तात् मायादेश्च विनिरित्यर्थः ॥ १४४ ॥

( आमयस्य दीर्घश्च ) आमयावी ॥ १४५ ॥

( सु० ) आमयस्य दीर्घश्च ॥ अस्मादपि विनिः स्यादस्त्यर्थे विनिप्रत्ययेऽस्य दीर्घश्च ॥ आमयोऽस्यास्मिन्वाऽस्ति आमयावी ॥ १४५ ॥

## ( वाचो ग्मिनिः (क) ) वाग्मी ॥ १४६ ॥

( सु० ) वाचो ग्मिनिः ॥ वाच्शब्दात् ग्मिन् प्रत्ययः स्यादस्त्यर्थे ॥ वागस्यास्मिन्वाऽस्ति । चस्य कुत्वे झवे जबा इति गत्वे वाग्ग्मी । गकारद्वयमस्ति ॥ १४६ ॥

( त० ) वाचो ग्मिनिरिति ॥ गकारो मादिस्वव्यावृत्त्यर्थः । तेन गत्वमेव । यद्वा ग् मिनिः इति च्छेदः ग् आदेशो मिन् प्रत्ययः ॥ १४६ ॥

## ( आलाटौ कुत्सितभाषिणि(ख)) वाचालः । वाचाटः ॥१४७॥

( सु० ) आलाटौ कुत्सितभाषिणि ॥ वाचशब्दादेतौ स्तः कुत्सितबहुभाषकेऽर्थे ॥ कुत्सितं बहु भाषते वाचालः । वाचाटः ॥ यस्तु सम्यग्बहु भाषते स वाग्ग्मीत्येव(ग)१४७।

( त० ) कुत्सिते ॥ कुत्सितमनन्वितं भाषितुं शीलमस्य स तथा तस्मिन्नित्यर्थः । प्रत्ययार्थे वाच्य इत्यर्थः ॥ १४७ ॥

## ( ईषदसमाप्तौ कल्पदेश्यदेशीयाः ) ईषदपरिसमाप्तः सर्वज्ञः सर्वज्ञकल्पः । पटुदेश्यः । पटुदेशीयः । विद्वद्देशीयः ॥ १४८ ॥

( सु० ) ईषदसमाप्तौ कल्पदेश्यदेशीयः ॥ प्रथमान्तान्नाम्नः आख्यातान्ताच्चेते स्युरीषदूनेऽर्थे ॥ ईषदसमाप्तौ ये प्रत्ययास्तेष्वभिधेयवदेव लिङ्गवचने स्तः । तेन गुडकल्पा द्राक्षा ॥ शर्कराकल्पो गुड इति ॥ ईषदूनः सर्वज्ञः सर्वज्ञकल्पः ॥ ईषदूनः पटु पटुदेश्यः ॥ ईषदूनो विद्वान् 'वसां रसे' इति दत्वं विद्वद्देशीयः ॥ ईषदूनं पचति पचतिकल्पम् ॥ क्रियाप्रधानमाख्यातमिति क्रियायामौत्सर्गिकवचनं क्लीबत्वं च ॥ १४८ ॥

( त० ) ईषदिति ॥ ईसदसमाप्तौ किञ्चिन्न्यूनत्वे ॥ १४८ ॥

## ( बहुर्वा उक्तार्थे स च प्रागेव ) ईषदूनः पटुः बहुपटुः ॥१४९॥

( सु० ) बहुर्वा उक्तार्थे स च प्रागेव ॥ ईषदसमाप्तिविशिष्टेऽर्थे प्रथमान्तान्नाम्नो बहुप्रत्ययः स्यात् स च प्रकृतेः प्रागेव न तु परतः ॥ लिङ्गसंख्ये अपि प्रकृतेरेव न तु तद्विपर्ययः । तेन बहुगुडो द्राक्षा । 'लघुर्बहुतृणं नरः' इत्यादौ न विशेष्यनिघ्नता ॥ १४९ ॥

( त० ) बहुर्वा उक्तार्थे स च प्रागेव ॥ उक्तार्थे किञ्चिन्न्यूनत्वेऽर्थे बहुप्रत्ययो विकल्पेन भवति । स च बहुप्रत्ययः प्रकृतेः प्रागेव न तु परतः । लिङ्गसंख्ये अपि प्रकृतेरेव न तु तद्विपर्ययः । तेन बहुगुडो द्राक्षा 'लघुर्बहुतृणं नरः' इत्यादौ न विशेष्यनिघ्नता॥१४९॥

## ( प्रकारे जातीयः ) पटुप्रकारः पटुजातीयः ॥ १५० ॥

( त० ) प्रकारे जातीयः ॥ प्रकारवति जातीयप्रत्ययः स्यात् ॥ सामान्यस्य भेदकः प्रकारः ॥ १५० ॥

---

(क) ग्मिनिरिति । गकारो मादिस्वव्यावृत्त्यर्थः । ग् आदेशो मिन्प्रत्ययश्च इति कस्यचिद्व्याख्यानम् ।

( ख ) 'आलजाटचौ बहुभाषिणि' । 'कुत्सित इति वक्तव्यम्' इति कौमुदी । कुत्सितं बहु भाषते वाचालः वाचाटः ।

( ग ) यस्तु सम्यगिति । न च अबहु, अकुत्सितं च यो वदति तत्रापि वाग्मीति कुतो न भवतीति वाच्यम् । यो हि सम्यक् बहु भाषते वाग्मीत्येव स भवतीति भाष्यबलेन पूर्वसूत्रस्य सम्यक् बहुभाषिण्येव प्रवृत्तेरभ्युपगमादिति भावः ।

( कुटीशमीशुण्डाभ्यो रो ह्रस्वत्वे ) ह्रस्वा कुटी कुटीरः । शमीरः । शुण्डारः ॥ १५१ ॥

( सु० ) कुटीशमीशुण्डाभ्यो रो ह्रस्वत्वे ॥ एभ्यो रः प्रत्ययो भवति ह्रस्वेऽर्थे ॥ ह्रस्वा कुटीति स्वार्थिकाः प्रकृतिलिङ्गमतिवर्तन्ते इति पुंलिङ्गताऽत्र। कुटीरः ॥ ह्रस्वा शमी शमीरः ॥ ह्रस्वा शुण्डा शुण्डारः ॥ १५१ ॥

( कुत्वा डुपः ) ह्रस्वः कूतुः कुतुपः ॥ १५२ ॥

( सु० ) कुत्वा डुपः ॥ कुतूशब्दात् डुपप्रत्ययः स्यात् ह्रस्वेऽर्थे । 'कुतूः कृत्तेः स्नेहपात्रं ह्रस्वा सा कुतुपः पुमान्' इत्यमरः ॥ १५२ ॥

( त० ) कुतुप इति ॥ 'कुतूः कृत्तेः स्नेहपात्रं ह्रस्वा सा कुतुपः पुमान्' ॥ १५२ ॥

( कासूगोणीभ्यां ष्टरः ) ह्रस्वा कासूः कासूतरी गोणीतरी ॥१५३॥

( सु० ) कासूगोणीभ्यां ष्टरः ॥ आभ्यां ष्टरप्रत्ययः स्यात् ह्रस्वे ॥ षित्वात् ङी-न्ति इतोप् ॥ ह्रस्वा कासूः कासूतरी। कासूः आयुधविशेषः ॥ ह्रस्वा गोणी गोणीतरी १५३

( त० ) कासूरिति ॥ आयुधविशेषः कासूः । सा ह्रस्वेत्यर्थः ॥ १५३ ॥

( वत्सोक्षाश्वर्षभेभ्यस्तनुत्वे (क) तनुर्वत्सः वत्सतरः । उक्ष-तरः । अश्वतरी । ऋषभतरः ॥ १५४ ॥

( सु० ) वत्सोक्षाश्वर्षभेभ्यस्तनुत्वे ॥ एभ्यः ष्टरः स्यात् ॥ तनोर्भावस्तनुत्वम् न्यूनता । सा च प्रवृत्तिनिमित्तस्यैव प्रत्यासत्तेः। क्वचित्तु तत्सहचरितधर्मान्तराणामपि न्यून-ता। तत्र वत्सः प्रथमवयाः। प्रथमवयसो न्यूनत्वं नाम वयोऽन्तरप्राप्तिः। उक्षातरुणवयाः। तारुण्यस्य तनुत्वं तृतीयवयः प्राप्तिः ॥ अश्वायामश्वादुत्पन्नोऽश्वः । अश्वत्वं च जातिः । तत्सहचरितस्याश्वायामश्वादुत्पन्नत्वधर्मस्य न्यूनत्वमन्यापितृकता । तथा च गर्दभेनाऽश्वा-यामुत्पादितोऽश्वतरः । तरतमेति पुंवद्भावः । अश्वतरा भारस्य वोढा ॥ ऋषभस्य तनुत्वं भारोद्वहने मन्दशक्तिता । तद्वांस्तु ऋषभतरः । प्रवृत्तिनिमित्ततनुत्वे एवायम् ॥१५४॥

( त० ) वत्सतर इति ॥ द्वितीयं वयः प्राप्तः । उक्षतरः ॥ १५४ ॥

( देवतान्तात्तादर्थ्ये यः ) अग्निदेवतायै इदमग्निदेवत्यम् ॥१५५॥

( सु० ) देवतान्तात्तादर्थ्ये यः ॥ तदर्थं एव तादर्थ्यम् । स्वार्थे ष्यञ् । अग्नि-श्चासौ देवता च अग्निदेवता तस्यै ॥ १५५ ॥

( पादार्घाभ्यां च ) पादार्थमुदकं पाद्यम् । अर्घ्यम् ॥ १५६ ॥

( सु० ) पादार्घाभ्यां च ॥ आभ्यां यः स्यात्तादर्थ्ये ॥ 'पाद्यं पादाय वारिणि' इति 'मूल्ये पूजाविधौ चार्घः' इति चामरः ॥ अर्घार्थमुदकमर्घ्यम् ॥ १५६ ॥

(नवस्य नू आदेशस्त्नतनप्खनाः प्रत्ययाः स्वार्थे) नूत्नम् । नूतनम् । नवीनम् ॥ १५७ ॥

---

(क) वत्सेत्यादि । वत्स, उक्षन् , अश्व, ऋषभ, एभ्यस्तनुत्वविशिष्टवृत्तिभ्यः ष्टरप्रत्ययःस्यादि-त्यर्थः । तनुत्वं न्यूनत्वम् । वत्सः प्रथमवयाः । वयसश्च प्रथमस्य तनुत्वं उत्तरवयः प्राप्त्या ज्ञेयम् ।

( सु० ) नवस्य नू आदेशस्त्नतनईनाः प्रत्ययाः स्वार्थे ॥ नवशब्दात्स्वार्थे एते स्युर्नवस्थाने नूश्च वा ॥ 'वोऽव्यस्वरे' इत्यव् । नवीनम् ॥ १५७ ॥

( त० ) नवीनमिति ॥ नवशब्दात् ईनप्रत्ययः '। उकारस्य वोऽव्यस्वर इत्यवा देशः ॥ १५७ ॥

( पुराणे प्रान्नश्च ) प्रणम् । प्रत्नम् । प्रतनम् । प्रीणम् ॥ १५८ ॥

( सु० ) पुराणे प्रान्नश्च ॥ प्रात्पुराणेऽर्थे नप्रत्ययः स्यात् चादुक्ताः त्नतनईनाः ॥ १५८ ॥

( अतिथेर्ञ्यः ) अतिथय इदमातिथ्यम् ॥ १५९ ॥

( सु० ) अतिथेर्ञ्यः ॥ अतिथिशब्दात्तादर्थ्ये ञ्यः स्यात् ॥ १५९ ॥

( प्रशंसायां रूपः ) प्रशस्तो वैयाकरणो वैयाकरणरूपः ॥ १६० ॥

( सु० ) प्रशंसायां रूपः ॥ प्रथमान्तान्नाम्न आख्यातान्ताच्च रूपप्रत्ययः स्यात् प्रशंसायामर्थे ॥ प्रकृत्यर्थस्य परिपूर्णतेह प्रशंसा । न तु स्तुतिः । तेनेहापि रूपप्रत्ययः । चोररूपोऽयं यदक्ष्णोरप्यञ्जनं हरति । गुप्तवस्तुनोऽपहरणेन चौर्यं परिपूर्यते ॥ प्रशस्तं पचति पचतिरूपम् ॥ १६० ॥

( कुत्सायां पाशः ) कुत्सितो भिषक् भिषक्पाशः ॥ १६१ ॥

(सु०) कुत्सायां पाशः ॥ प्रथमान्तान्नाम्नः पाशप्रत्ययः स्यात् कुत्सायामर्थे॥ १६१॥

(भूतपूर्वे चरट्) पूर्वं दृष्टो दृष्टचरः । दृष्टचरी । आढ्यचरी ।१६२।

( सु० ) भूतपूर्वे चरट् ॥ पूर्वं भूतो भूतपूर्वस्तत्र वर्तमानात्प्रथमान्ताच्चरट् स्यात् टित्वादीप् ॥ भूतपूर्वाऽऽढ्या आढ्यचरी । तरतमचरडिति पुंवत् ॥ १६२ ॥

( त० ) भूतपूर्व इति ॥ पूर्वं भूतः प्राप्तः इति यावत् । टित्वादीप् ॥ १६२ ॥

( षष्ठ्या रूप्य च ) ॥ १६३ ॥

( सु० ) षष्ठ्या रूप्य च ॥ षष्ठ्यन्ताद् भूतपूर्वेऽर्थे रूप्यप्रत्ययो वा । पक्षे चरट् ॥ कृष्णस्य भूतपूर्वा गौः कृष्णरूप्यः । कृष्णचरः ॥ १६३ ॥

( प्राचुर्यविकारप्राधान्यादिषु मयट् ) अन्नं प्रचुरमत्रान्नमयो यज्ञः । मृन्मयो घटः । स्त्रीमयो जारमः । अमृतं स्वरूपमस्यामृतमयश्चन्द्रः । आम्रस्य विकारोऽवयवो वा आम्रमयम् । शरमयम् ॥ १६४ ॥

( सु० ) प्राचुर्यविकारप्राधान्यादिषु मयट् ॥ नाम्न एष्वर्थेषु मयट् स्यात् ॥ प्राचुर्ये अन्नमयो यज्ञः । विशेष्यनिघ्नताऽत्र ॥ विकारे मृदो विकारो मृन्मयः । मयट्प्रत्ययः । नमे अवस्यापीति नः ॥ प्राधान्ये स्त्री प्रधानमस्य स्त्रीमयः ॥ आदिशब्दादन्येष्वप्यर्थेषु मयट् । यथा । अमृतमयोऽत्र स्वरूपे मयट् । आम्रमयमत्र विकारावयवयोर्मयट् ॥ शराणां विकारोऽवयवो वा शरमयम् ॥ १६४ ॥

(त०) प्राचुर्येति ॥ प्रचुरस्य भावः प्राचुर्यं बाहुल्यम् । प्राचुर्यं च विकारश्च प्राधान्यादिश्च ते तेषु ॥ जाल्मोऽसमीक्ष्यकारी ॥ अमृतमय इति ॥ आदिपदात्स्वरूपेऽपि १६४

( गोः पुरीषे ) गोमयम् ॥ १६५ ॥

( सु० ) गोः पुरीषे ॥ गोशब्दान्मयट् स्यात् पुरीषेऽर्थे ॥ गोः पुरीषं गोमयम् ॥ पुरीषे किम् । गव्यम् । पयसि ण्यः ॥ १६५ ॥

**न सन्धिय्वोर्युट् च** ॥ सन्धिजयोर्यकारवकारयोः सम्बन्धिन स्वरस्य न वृद्धिः । किन्तु तयोर्युडागमो यस्येट् वस्योट् पश्चाद्वृद्धिः । व्याकरणमधीते वेद वा वैयाकरणः(क) । स्वश्वं वेद सौवश्वः । व्यासस्यापत्यं वैयासकिः ॥ १६६ ॥

( सु० ) न सन्धिय्वोर्युट् च ॥ सन्धानं संधिः 'नञ्जौ' इति किप्रत्ययः । सन्धौ जातौ संधिजौ, य् च व् च य्वौ सन्धिजौ च ता य्वौ च सन्धिय्वौ । शाकपार्थिवादित्वान्मध्यमपदलोपः । माधवस्तु सन्धेर्य्वाविति षष्ठीतत्पुरुषमाह । इश्च उश्चानयोः समाहारो यु युसहितः ट् युट् । द्वन्द्वान्ते श्रूयमाणत्वात् टकारः प्रत्येकं सम्बध्यते । इट् उट् इत्यर्थः । वैयाकरणः । अण् इट् वृद्धिः ॥ सुष्ठु अश्वः स्वश्वः । स्वश्वं वेत्तीति सौवश्वः । अण् । उड्वृद्धी ॥ वैयासकिः । अपत्ये इञ् । सुधातृव्यासेत्यकङ् । इड्वृद्धी ॥ १६६ ॥

( त० ) न सन्धिय्वोर्युट् चेति ॥ संधानं पूर्वपरयोरव्यवधानेनोच्चारणं सन्धिः ॥ 'नञ्जौ' इति किः । सन्धौ जातौ सन्धिजौ । 'क्रिब्वनिड्डाः' इति जनेर्डः ॥ य् च व् च य्वौ संन्धिजौ च तौ य्वौ च सन्धिय्वौ शाकपार्थिवादिः । इश्च उश्चानयोः समाहारो यु तेन सहितः ट् युट् । द्वन्द्वान्ते श्रूयमाणत्वात् प्रत्येकं संबन्धः । इट् उट् इति ॥ सौस्थितिरित्यादिसिद्धये इदुतोरेव न संधिरिति नाशङ्कनीयम् । युट्करणसामर्थ्यात् । अन्यथा सवर्णदीर्घेण तद्विधानं व्यर्थं स्यात् । न च युड्विधिसामर्थ्यात्सवर्णदीर्घ एव न भविष्यतीति वाच्यम् । नञो वैयर्थ्यप्रसङ्गात् । युटः षष्ठ्यभावान्न वृद्धिनिषेधः । उत्सर्गसमानदेशा अपवादा भवन्तीति न्यायात् दध्यश्व इत्यादौ न । दधिप्रियोऽश्वो दध्यश्वस्तस्यायमिति । यकारात्स्वगतस्वव्यवरव्यङ्ग्यव्यवहारव्यायामप्रभृतीनां न निषेधयुटौ ॥ वैयाकरण इति ॥ कारकादित्यण् । यकारात्पूर्वमिट् । तस्य पश्चाद्वृद्धिः ॥ १६६ ॥

**( द्वारादीनां च )** द्वारादीनां सम्बन्धिनोः स्वरयोर्न वृद्धिः किंतु तयोर्युडागमः ॥ द्वारे नियुक्तो दौवारिकः ॥ व्यल्कशस्येदं वैयल्कशम् । सौवरम् । शौवम् । सौवग्रामिकः । नैयग्रोधम् । सौवादुमृदवम् । शौवस्तिकम् ॥ १६७ ॥

( सु० ) द्वारादीनां च ॥ द्वारादीनामसंधिजयोरपि यकारवकारयोः युट् स्यात् ॥ पश्चाद्वृद्धिश्च । यस्य इट् वस्य उट् इत्यर्थः ॥ दौवारिकः । नियुक्तेऽर्थे इकः । उड्वृद्धी ॥ वैयल्कशम् । इदमर्थेऽण् । इड्वृद्धी ॥ स्वरस्येदं सौवरम् । उड्वृद्धी ॥ स्वग्रामे भवः सौवग्रामिकः । इकः । उड्वृद्धी ॥ न्यग्रोधस्येदं नैयग्रोधम् । अण् । इड्वृद्धी ॥ स्वादु च

---

( क ) अत्र वासुदेवः । सन्धेः सम्बन्धिनौ य्वौ सन्धिय्वौ । सम्बन्धश्च जन्यजनकभावः । व्याकरण इत्यत्र वकारस्य सन्धिजत्वाद्यकारवकारयोर्विश्लेषं कृत्वा सन्धिजाद्यकारात्पूर्वमिकारः । एवं सकारवकारयोर्विश्लेषं कृत्वा वकारात्पूर्वमिकार इत्यर्थः ।

तत् मृदु च स्वादुमृदु स्वादुमृदुन इदं सौवादुमृदवम् । अण् । 'यवोऽव्ययस्वरे इत्यत् । उद्वृद्धी ॥ श्वो भवं शौवस्तिकम् । तिकण् । उद्वृद्धी ॥ श्वापदस्येदं निपातनात्पूर्वपदस्य दीर्घः । अण् । वा उद्वृद्धी ॥ श्वापदं-शौवापदम् ॥ १६७ ॥

( त० ) द्वारादीनामिति ॥ सन्धिजत्वाभावेऽपि तौ । वस्तुतस्त्वन्तय्वोरित्येव सुवचम् । अन्तशब्दश्च पदान्तपरतया व्याख्येयः । अनन्त इत्यादौ तथैव व्याख्यानात् । शुद्धादिवद्युडेव तु नागमः व्याख्यानतो विशेषप्रतिपत्तेः ॥ सौवरमिति ॥ स्वरस्येदम् ॥ शौवमिति ॥ शुन इदम् ॥ सौवग्रामिक इति ॥ स्वग्रामे भवः ॥ सौवादुमृदवमिति ॥ स्वादु च तत् मृदु च तस्येदम् ॥ शौवस्तिकमिति ॥ श्वो भवम् । श्वस्तिकण् ॥ १६७ ॥

( इतो जातार्थे ) लज्जा जाताऽस्य लज्जितः । फलितः । तारकितम् ॥ १६८ ॥

( सु० ) इतो जातार्थे ॥ प्रथमान्तान्नाम्नोऽस्य जातमित्यर्थे इतः प्रत्ययः स्यात् ॥ यस्य लोप इत्यालोपः । लज्जितः ॥ फलानि जातान्यस्य फलितः ॥ त्रपा जाताऽस्य त्रपितः ॥ तारका जाता अस्य तारकितं नभः ॥ एवं पुष्पितं पुलकितं रोमाञ्चितम् ॥ १६८ ॥

( त० ) इतो जातार्थे इति ॥ अस्य जातमित्यर्थे इत इत्यर्थः ॥ १६८ ॥

( तरतमेयस्विष्ठाः प्रकर्षे (क) ) अतिशयेन शुक्लः शुक्लतरः । शुक्लतमः ॥ १६९ ॥

( सु० ) तरतमेयस्विष्ठाः प्रकर्षे ॥ तरश्च तमश्च ईयसुश्च इष्ठश्च ते तरतमेयस्विष्ठाः । प्रकर्ष इति प्रकृत्यर्थे विशेषणम् । प्रकर्षणं प्रकर्षः । प्रकर्षश्च नाधिक्यं किन्त्वभिभवो मतः । यद्यपि कृषिः केवलो विलेखने तथापि प्रपूर्वोऽभिभवेऽर्थे । यद्यपि द्रव्यस्य स्वतः प्रकर्षो न तथापि गुणप्रकर्षात् प्रकर्षो भवति । उक्तं च । "द्रव्यस्याव्यपदेश्यस्य य उपादीयते गुणः । भेदका व्यपदेशाय तत्प्रकर्षोऽभिधीयते ॥ १ ॥ धर्मयोगं विना व्यपदेष्टुमशक्यस्य द्रव्यस्य व्यपदेशाय यो भेदको गुण उपादीयते प्रत्ययेन तस्य प्रकर्षोऽभिधीयते । गुणक्रियाजातिसंज्ञाभेदेन चतुष्टयी शब्दानां प्रवृत्तिः । तत्र गुणक्रिययोः प्रवृत्तिनिमित्तयोस्तत्प्रकर्षे प्रत्ययः । जातिशब्देभ्यस्तु जातेः सर्वत्रैकरूपत्वेन प्रकर्षाभावात्तत्सहचरितादेवाह । दोहाद्या धर्मास्तत्प्रकर्षे प्रत्ययः । संज्ञाशब्देषु प्रकर्षो नास्ति । शब्दस्वरूपस्यैव प्रवृत्तिनिमित्तत्वात् । तस्य च सर्वत्र तुल्यत्वात् । गुणशब्दो यथा । यस्य सामान्यतः श्वेतो गुणः स शुक्लः । यस्य तदपेक्षयाऽधिकः स शुक्लतमः ॥ यस्य ताभ्यामप्यधिकः स शुक्लतमः ॥ यः किंचिज्जानाति स पटुः । ततोऽधिकं जानाति स पटुतरः । ततोऽप्यधिकं स पटुतमः ॥ क्रियाशब्दो यथा । यो विलम्बेन पचति स पाचकः । यस्तु ततः किंचिच्छीघ्रं पचति स पाचकतरः यस्त्वतिशीघ्रं पचति स पाचकतमः ॥ जातिशब्दो

( क ) प्रकर्षश्चात्र नाधिक्यं किन्त्वभिमतो मतः । यद्यपि केवलः कृषिर्विलेखनार्थस्तथाप्युपसर्गवशादभिभवार्थोऽपि । प्रकर्षस्य जातीयप्रतियोगिकत्वात्संज्ञाजातिवाचकयोस्तदभावान्न तरादयः । तथा संख्यापरिमाणप्रमाणोन्मनवाचिभ्यो न । उक्तं च—
'ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः । आयामस्तु प्रमाणं स्यात् संख्याबाह्या तु सर्वतः" इति ॥

यथा । गौरयं हलं वहति । गोतरोऽयं हलं शकटं च वहति । गोतमोऽयं तौ गोर्णी च वहति ॥ इष्ठेयसुप्रत्ययौ गुणवचनादेव । संख्यापरिमाणप्रमाणोन्मानवाचिभ्यो न तरादयः। संख्या एकादि । परिमाणं कुडवद्रोणादि । प्रमाणं हस्तवितस्त्यादि । उन्मानं तुलादि ॥ उक्तं च "ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः । आयामस्तु प्रमाणं स्यात्संख्या बाह्या तु सर्वतः ॥ १ ॥" ॥ १६९ ॥

( त० ) तरतमेयस्विष्ठा इति ॥ तरश्च तमश्च ईयसुश्च इष्ठश्च ते । प्रकर्षणं प्रकर्षः । प्रकर्षश्चात्र नाधिक्यं किन्त्वभिभवो मतः । यद्यपि केवलः कार्षविलेखनार्थस्तथाप्युपवर्गवशादभिभवार्थोऽपि । प्रकर्षस्य सजातीयप्रतियोगिकत्वात्संज्ञाजातिवाचकयोस्तदभावान्न तरादयः । तथा संख्यापरिमाणप्रमाणोन्मानवाचिभ्यो न । उक्तं च । "ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः । आयामस्तु प्रमाणं स्यात्संख्या बाह्या तु सर्वतः ॥" ऊर्ध्वमानं तुलादिः ॥ परिमाणं द्रोणादिः ॥ प्रमाणं हस्तवितस्त्यादिः ॥ संख्या एको द्वावित्यादिः ॥ यद्यपि सामान्येन तरादिविधानं तथापि एकस्य द्वयोश्च प्रकर्षे तरयसू । बहूनां तमेष्ठाविति विवेकः । पाचकादिभ्यस्तु ईयस्विष्ठौ नानभिधानात् ॥ १६९ ॥

(ईयस्विष्ठौ ङितौ क)) अतिशयेन लघुर्लघीयान् । लघिष्ठः ॥१७०॥

( सु० ) ईयस्विष्ठौ ङितौ ॥ एतौ ङित्संज्ञिकौ स्तः ॥ अतिशयेन लघुः ईयसौ टिलोपे उदित्त्वान्नुम् । 'नूसम्महतः' इति दीर्घः । सिलोपसंयोगान्तलोपौ । लघीयान् ॥ लघिष्ठः । इष्ठः ॥ १७० ॥

( गुर्वादेरिष्ठेमेयःसु गरादिष्टयलोपश्च ) (ख) गुरोर्भावो गरिमा । अतिशयेन गुरुर्गरिष्ठः गरीयान् ॥ प्रियस्य भावः प्रेमा । अतिशयेन प्रियः प्रेष्ठः प्रेयान् ॥ अतिशयेन स्थूलः स्थविष्ठः स्थवीयान् ॥ अतिशयेन प्रशस्यः श्रेष्ठः श्रेयान् ॥ दीर्घः द्राघिष्ठः द्राघीयान् ॥ स्थिरः स्थेष्ठः स्थेयान् ॥ स्फिरः स्फेष्ठः स्फेयान् ॥ उरुः वरिष्ठः वरीयान् ॥ बहुलः बंहिष्ठः बंहीयान् ॥ वृद्धः वर्षिष्ठः वर्षीयान् ॥ तृप्रः त्रपिष्ठः त्रपीयान् ॥ वृन्दारकः वृन्दिष्ठः वृन्दीयान् ॥ दूरः दविष्ठः दवीयान् ॥ युवा यविष्ठः यवीयान् ॥१७१॥

( सु० ) गुर्वादेरिष्ठेमेयःसु गरादिष्टयलोपश्च ॥ गुरु १ प्रिय २ स्थूल ३ प्रशस्य ४ दीर्घ ५ स्थिर ६ स्फिर ७ गुरु ८ बहुल ९ वृद्ध १० तृप्र ११ वृन्दारक १२ दूर १३ युवन् १४ अल्प १५ ह्रस्व १६ क्षिप्र १७ क्षुद्र १८ अन्तिक १९ बाढ २० गुर्वादयः । गर् रान्तः । प्र अदन्तः । स्थो ओदन्तः । श्र अदन्तः । द्राघ अदन्तः । स्थ अदन्तः । स्फ अदन्तः । वर् रान्तः । बंह अदन्तः । वर्ष् षान्तः । त्रप् पान्तः । वृन्द अदन्तः । दो ओदन्तः । यो ओदन्तः । अल्प् पान्तः । ह्रस् सान्तः । क्षेप् पान्तः । क्षोद् दान्तः । नेद अदन्तः । साध अदन्तः । एते गरादयः ॥ एषामेकस्वराणां टिलोपो

---

( क ) ईयसुश्च इष्ठश्च तौ ईयस्विष्ठौ ङित्संज्ञकौ स्त इत्यर्थः ।

( ख ) गुर्वादेरिति । टेर्लोपष्टयलोपः । ईयस्विष्ठयोर्ङित्त्वाट्टिलोपे प्राप्तेऽयं निषेधः ।

यस्य लोप इत्यलोपश्च न । द्विस्वराणां तु यस्य लोप इत्यलोपो भवत्येव ॥ गरिमा । इमन् । गरिष्ठः । इष्ठः । गरीयान् । ईयसुः । स्त्रियां तु उगितश्चेति ङीप् । गरीयसी ॥ प्रेमा । इमन् । प्रेष्ठः । इष्ठः । प्रेयान् । ईयसुः ॥ स्थविष्ठः । इष्ठः । स्थवीयान् । ईयसुः ॥ श्रेष्ठः । इष्ठः ॥ श्रेयान् । ईयसुः ॥ द्राघिष्ठः । यस्य लोप इत्यलोपः । इष्ठः । द्राघीयान् । ईयसुः । स्थेष्ठः । इष्ठः । स्थेयान् । ईयसुः ॥ अतिशयेन स्फिरः 'भूर्यदभ्रं पुरु स्फिरम्' इति हैमः ॥ स्फेष्ठः । इष्ठः । स्फेयान् । ईयसुः ॥ अतिशयेन उरुः । वरिष्ठः । इष्ठः । वरीयान् । ईयसुः ॥ अतिशयेन बहुलः । यस्येत्यलोपः । बंहिष्ठः । इष्ठः । बंहीयान् । ईयसुः ॥ अतिशयेन वृद्धः वर्षिष्ठः । इष्ठः । वर्षीयान् । ईयसुः ॥ अतिशयेन तृप्रः पुरोडाशः तृप्रं दुःखं त्रपिष्ठः । इष्ठः । त्रपीयान् । ईयसुः ॥ अतिशयेन वृन्दारकः । 'वृन्दारकौ रूपिमुख्यौ' इत्यमरः ॥ यस्येत्यलोपः । वृन्दिष्ठः । इष्ठः । वृन्दीयान् । ईयसुः ॥ अतिशयेन दूरः दविष्ठः । इष्ठः । दवीयान् । ईयसुः ॥ अतिशयेन युवा यविष्ठः । इष्ठः । यवीयान् । ईयसुः ॥ १७१ ॥

( त० ) टयलोपश्चेति ॥ टेरलोपष्टयलोपः ईयस्विष्ठयोर्डित्वाट्टिलोपे प्राप्ते निषेधः । गुर्वादिप्रपञ्च एवैतानीति बोध्यम् ॥ १७१ ॥

**( युवाल्पयोः कन् वा )** (क) कनिष्ठः । कनीयान् ॥ अल्पिष्ठः । अल्पीयान् । कनिष्ठः । कनीयान् । ह्रस्वः । ह्रसिष्ठः । ह्रसीयान् ॥ क्षिप्रः क्षेपिष्ठः । क्षेपीयान् ॥ क्षुद्रः क्षोदिष्ठः । क्षोदीयान् ॥ अन्तिकः । नेदिष्ठः । नेदीयान् ॥ बाढः साधिष्ठः साधीयान् ॥ १७२ ॥

( सु० ) युवाल्पयोः कन्वाः ॥ एतयोः कनादेशो वा स्यात् इष्ठेयस्वोः परतः ॥ कनिष्ठः । इष्ठः । कनीयान् । ईयसुः । अतिशयेनाल्पः । अल्पिष्ठः । इष्ठः । अल्पीयान् । ईयसुः । कनिष्ठः । कनीयान् ॥ अतिशयेन ह्रस्वः । ह्रसिष्ठः । इष्ठः । ह्रसीयान् । ईयसुः ॥ अतिशयेन क्षिप्रः क्षेपिष्ठः । इष्ठः । क्षेपीयान् । ईयसुः ॥ अतिशयेन क्षुद्रः क्षोदिष्ठः । इष्ठः । क्षोदीयान् । ईयसुः ॥ अतिशयेनान्तिकः । यस्येत्यलोपः । नेदिष्ठः । इष्ठः । नेदीयान् । ईयसुः ॥ अतिशयेन बाढः यस्येत्यलोपः । साधिष्ठः । इष्ठः । साधीयान् । ईयसुः ॥ १७२ ॥

**( वृद्धप्रशस्ययोर्वा ) ॥ १७३ ॥**

( सु० ) वृद्धप्रशस्ययोर्वा ॥ ज्या स्यादिष्ठेयस्वोः परतः ॥ १७३ ॥

**ईलोपो ज्याशब्दादीयसः** ॥ ज्याशब्दात्परस्येयस ईकारस्य लोपः(ख) ॥ अतिशयेन वृद्धः प्रशस्यो वा ज्यायान् । ज्येष्ठः ॥ १७४ ॥

( सु० ) ईलोपो ज्याशब्दादीयसः ॥ ईयसः किम् । ज्येष्ठः ॥ प्रियोरुबहुलगुरुदीर्घाणां लोहितादित्वादिमन् । प्रेमेत्यादि ॥ १७४ ॥

( त० ) ईलोपो ज्याशब्दादिति ॥ आदेशादित्यर्थः प्रकरणात् ॥ १७४ ॥

---

( क ) अतिशयेन युवा अल्पो वा कनीयान् कनिष्ठः । पक्षे यविष्ठः अल्पिष्ठः ॥

( ख ) ईलोपो ज्याशब्दादिति । प्रकरणादादेशादित्यर्थो लभ्यते ।

**बहोरिष्ठेर्यिः** ॥ बहोरुत्तरस्येष्ठस्येकारस्य यिरादेशो भवति ॥१७५॥

( सु० ) बहोरिष्ठेर्यिः ॥ इष्ठेति लुप्तषष्ठीकं पदम् बहुशब्दादिष्ठप्रत्ययेकारस्य यिः स्यात् ईयसुप्रत्यये परे ईकारस्य लोपश्च ॥ १७५ ॥

( त० ) बहोरिति ॥ इष्ठेति लुप्तषष्ठीकमित्याशयेनाह-**बहोरुत्तरस्येष्ठस्येकारस्येति** ॥ १७५ ॥

( **बहोर्भूश्च** ) भूयिष्ठः । भूयान् ॥ १७६ ॥

( सु० ) बहोर्भूश्च ॥ बहोः स्थाने भूः स्यादिष्ठेयस्वोः परतः ॥ अतिशयेन बहुः भूयिष्ठः । इष्ठः । भूयान् । ईयसुः ॥ १७६ ॥

( **विन्मतोर्लुक्** ) ॥ १७७ ॥

( सु० ) विन्मतोर्लुक् ॥ विनो मतोश्च लुक् स्यादिष्ठेयस्वोः परतः॥ मतुग्रहणं वतोरप्युपलक्षणं बोध्यम् ॥ अतिशयेन स्रग्वी स्रजिष्ठः । स्रजीयान् । अतिशयेन त्वग्वान् त्वचिष्ठः । त्वचीयान् ॥ १७७ ॥

( **किमोऽव्ययादाख्याताच्च तरतमयोराम्वद्रव्यप्रकर्षे** )

(क)किंतराम् । किंतमाम् । कुतस्तराम् । कुतस्तमाम् । उच्चैस्तरां गायति । उच्चैस्तमाम् । पचतितराम् । पचतितमाम् । पठतितराम् । पठतितमाम् । द्रव्यप्रकर्षे तु । उच्चैस्तमस्तरुः ॥ १७८ ॥

( सु ) किमोऽव्ययादाख्याताच्च तरतमयोराम्वद्रव्यप्रकर्षे ॥ किमव्ययाख्यातेभ्यः परौ यौ तरतमौ तदन्तेभ्य आम् स्यात् । न तु द्रव्यप्रकर्षे ॥ उकार उच्चारणार्थः ॥ निरनुबन्धकग्रहणे न सानुबन्धकस्येति परिभाषया नुड्विधौ नास्य ग्रहणम् । अन्यथा पचतितराणामिति स्यात् ॥ १७८ ॥

( त० ) किम इति ॥ आमन्तस्य स्वरादिपाठमन्तत्वादव्ययत्वं बोध्यम् । तेन पचतितरामित्यादौ विभक्तेर्लुक् ॥ १७८ ॥

( **प्रमाणे दघ्नद्वयसट्मात्रटः** ) (ख) जानुदघ्नम् । शिरोद्वयसम् । पुरुषमात्रम् ॥ १७९ ॥

( सु० ) प्रमाणे दघ्नट्द्वयसट्मात्रटः ॥ प्रथमान्तान्नाम्नः तत्प्रमाणमस्येत्यर्थे एते स्युः । "आयामस्तु प्रमाणं स्यात्" इति नेह गृह्यते किन्तु प्रमाणमिह परिच्छेदकमात्रम् । तत्र मात्रट् । आद्यौ तूर्ध्वमान एव भवतः । तथैव वृद्धैः स्वीकृतत्वात् । टित्वात् ङीबित इति स्त्रियामीप् । जानु प्रमाणमस्य जानुदघ्नम् । शिरः प्रमाणमस्य शिरोद्वयसम् । पुरुषः प्रमाणमस्य पुरुषमात्रं जलम् ॥ १७९ ॥

---

( क ) अद्रव्यप्रकर्ष इति । उदाहरणं सारस्वते कुतस्तरां परमाणवः । कुतस्तमां तेषामारम्भकत्वम् । इति । उच्चैस्तरस्तरुः । एषां सद्भावे प्रमाणाभावात्तदारम्भकत्वेनाभिमताः परमाणवोऽतिशयेन कुतः । एवं परमाणूनामसत्त्वात्तेषां पृथिव्यादिचतुष्टयारम्भकत्वमतिशयेन कुत इत्यर्थः ।

( ख ) प्रमाणे इति । परिमाणे इति पाठान्तरम् । वस्तुतस्तु प्रमाण इति टीकाकारसंमतत्वात् सम्यक् । दघ्नट्द्वयसटौ ऊर्ध्वे माने । मात्रस्तु अविशेषेण । इति प्रसादः ।

( त० ) प्रमाणे इति ॥ अत्र च प्रमाणशब्देन परिच्छेदकमात्रं तत्र मात्रट् । द्वयसज्दघ्नचौ तूर्ध्वमान एव न तु तिर्यङ्मानादाविति विवेकः ॥ १७९ ॥

( पुरुषहस्तिभ्यामण् च ) पौरुषम् । हास्तिनम् (क) ॥ १८० ॥

( सु० ) पुरुषहस्तिभ्यामण् च ॥ आभ्यां प्रमाणेऽर्थेऽणपि स्यात् ॥ १८० ॥

( त० ) हास्तिनमिति ॥ हस्ती प्रमाणमस्येति विग्रहः । नो वेत्यत्र वेत्यस्य व्यवस्थितत्वाट्टिलोपादि न ॥ १८० ॥

(वत्वन्तात्स्वार्थे द्वयसद्मात्रटौ) तावद्द्वयसम् । तावन्मात्रम् ।१८१।

( त० ) वत्वन्तात्स्वार्थे ॥ द्वयसट्मात्रटौ ॥ वतुप्रत्ययान्तात्प्रकृत्यर्थे एतौ स्तः ॥ तावदेव तावद्द्वयसम् ॥ १८१ ॥

( त० ) तावद्द्वयसमिति ॥ तावदेवेत्यर्थः ॥ १८१ ॥

( द्वयोर्बहूनां चैकस्य निर्द्धारणे किमादिभ्यो डतरडतमौ ) भवतोः काण्वः कतरः । भवतां तान्त्रिकः कतमः । भवतोर्यतरस्तार्किकस्ततर उद्गृह्णातु (ख) ॥ १८२ ॥

( सु० ) द्वयोर्बहूनां चैकस्य निर्द्धारणे किमादिभ्यो डतरडतमौ ॥ किम्यत्तदेकेभ्यो द्वयोर्मध्ये एकस्य निर्द्धारणे डतरः । बहूनां मध्ये एकस्य निर्द्धारणे डतमश्च स्यात् ॥ द्वयोर्बहूनामिति निर्द्धारणे षष्ठी । निर्द्धार्यमाणवाचिभ्य एवैतावभिधानस्वभावात् ॥ कतरः काण्व इति जात्या निर्द्धारणम् ॥ तन्त्रमधीते वेत्ति वा तान्त्रिकः कतम इति गुणेन निर्द्धारणम् तर्कमधीते वेत्ति वा तार्किको यतर इति गुणेन निर्द्धारणम् । ततरस्तर्कमुद्गृह्णातु ॥ कतरोऽध्यापक इति क्रियया निर्द्धारणम् ॥ कतरो देवदत्त इति संज्ञया निर्द्धारणम् ॥ एवं यतमः ततमः । अनयोरेकतरो मैत्रः । एषामेकतमः ॥ पक्षे किम्शब्दस्य कः। यच्छब्दस्य यः । तच्छब्दस्य सः । आख्याताव्ययेत्यकप्रत्यये तु किमः कः । यकः । सकः । कक इति तु नोक्तमकसहितस्यापि किमो भाष्ये कादेशविधानात् ॥ १८२ ॥

( त० ) द्वयोरित्यादि ॥ द्वयोर्मध्ये एकस्य निर्द्धारणे डतरः । बहूनां मध्ये एकस्य निर्द्धारणे डतम इत्यर्थः ॥ कतर इति ॥ डित्वाट्टिलोपः ॥ १८२ ॥

(संख्येयविशेषावधारणे द्वेस्तीयः) द्वयोः पूरणो द्वितीयः ।१८३।

( सु० ) संख्येयविशेषावधारणे द्वेस्तीयः ॥ संख्यातुं योग्यः संख्येयः । विशेषेणावधारणम् । विशेषावधारणम् । संख्येयस्य विशेषावधारणं संख्येयविशेषावधारणं तस्मिन्नर्थे द्विशब्दात्तीयप्रत्ययः स्यात् ॥ पूरणे इत्यधिकारोऽयम् ॥ १८३ ॥

( त० ) संख्येयेति ॥ संख्यातुमर्हं संख्येयम् । तस्य विशेषस्तत्पूरकस्तस्यावधारणे इत्यर्थः ॥ १८३ ॥

( त्रेस्तृ च ) तृतीयः ॥ १८४ ॥

---

( क ) नोवेति वाशब्दव्यवस्थया टिलोपाभावे हस्ती प्रमाणमस्येति हास्तिनमिति ।

( ख ) उद्गृह्णातु । उद्गृणातु इति पाठान्तरम् । स्वसिद्धान्तावलम्बने प्रथममुपन्यस्यत्वित्यर्थः ।

( सु० ) त्रेस्तृ च ॥ त्रिशब्दात्तीयः स्यात् त्रः स्थाने तृ चादेशः ॥ त्रयाणां संख्यानां पूरणः तृतीयः ॥ १८४ ॥

( त० ) त्रेस्तृ चेति ॥ सम्प्रसारणमिति विहाय तृ चेत्युक्तिस्तु लाघवाय । वस्तुतस्तु तृ चेत्युक्तौ तृ इत्यस्य प्रत्ययान्तरत्वशङ्कानिराकरणाय तदुक्तिः ॥ १८४ ॥

( षट्कतिकतिपयचतुर्भ्यस्थट् ) षष्ठः । कतिथः । कतिपयथः । चतुर्थः(क) ॥ १८५ ॥

( सु० ) षट्कतिकतिपयचतुर्भ्यस्थट् ॥ एभ्यस्थट् स्यादुक्तेऽर्थे ॥ षण्णां पूरणः षष्ठः ॥ कतीनां पूरणः कतिथः । कतिपयानां पूरणः कतिपयथः ॥ चतुर्णां पूरणः चतुर्थः॥ टित्वात् स्त्रियामीप् ॥ युष्मदस्मदोः षष्ठीचतुर्थीति निर्देशात् षष्ठे षकारस्य जश्त्वं चतुर्थ रेफस्य विसर्गश्च न ॥ १८५ ॥

(त०) षष्ठ इति॥ कत्यादित्वाड्डत्वाभावः । एवं चतुर्थ इत्यत्रापि विसर्गाप्रसङ्गः।१८५।

( चतुरो येयौ चस्य च लोपः ) तुर्यः । तुरीयः ॥ १८६ ॥

( सु० ) चतुरो येयौ चस्य च लोपः ॥ चतुरशब्दात् य ईय एतौ स्तः । चकाराकारयोर्लोपश्च ॥ चतुर्णां पूरणः तुर्यः । तुरीयः ॥ १८६ ॥

( त० ) तुर्य इति ॥ चतुर्णां पूरण इति विग्रहः ॥ १८६ ॥

( पञ्चादेर्मट् ) (ख)पञ्चमः । सप्तमः ॥ १८७ ॥

( सु० ) पञ्चादेर्मट् ॥ पञ्चप्रभृतिभ्यो मट् स्यात् ॥ पञ्चानां पूरणः नाम्नो नो लोपश्चेति नलोपः । पञ्चमः ॥ सप्तानां पूरणः सप्तमः ॥ अष्टानां पूरणः अष्टमः ॥ नवानां पूरणः नवमः ॥ दशानां पूरणः दशमः । टित्वात् स्त्रियामीप् । दशमी ॥ १८७ ॥

( एकादशादेर्डट् ) एकादशः ॥ १८८ ॥

( सु० ) एकादशादेर्डट् ॥ एकादशशब्दप्रभृतिभ्यो डट् स्यात् ॥ डित्वाट्टिलोपः । टित्वादीप् ॥ एकश्च दश चेति सहादेरत्वम् । एकादशानां पूरणः एकादशः ॥ द्वौ च दश चेति द्व्यधिका दशेति वा ॥ १८८ ॥

( त० ) एकादश इति ॥ एकादशादेरिति निर्देशादेकशब्दस्यात्वम् ॥ १८८ ॥

(द्व्यष्टनोरात्वं संख्यायामुत्तरपदे) द्वादशः ॥ अष्टादशः ।१८९।

( सु० ) द्व्यष्टनोरात्वं संख्यायामुत्तरपदे ॥ एतयोरात्वं स्यात् ॥ बहुव्रीहौ अशीतिपरे च न ॥ द्वादशः । बहुव्रीहौ तु द्विरावृत्ता दशेति सुप्रत्ययार्थे बहुव्रीहिः । द्विदशाः । डप्रत्ययः ॥ अशीतिपरे च द्व्यशीतिः ॥ प्राक् शताद्वक्तव्यम् । नेह । द्विशतम् । द्विसहस्रम् । द्वादशानां पूरणः द्वादशः ॥ अष्टादशानां पूरणः अष्टादशः ॥ १८९ ॥

---

( क ) षष्ठः, चतुर्थ इति । अत्र वासुदेवः । षण्णां चतुर्णां सङ्ख्यापूरण इति विग्रहे षस्य षत्वमास्यातादौ डत्वनिषेधार्थमत्यत्रापि वविधानसामर्थ्यात्'षोड' इति डत्वाप्रसङ्गः । सोर्विसर्ग इत्यत्र इ-स्वोवेति मण्डूकप्लुतिन्यायेन वानुवृत्त्यं व्यवस्थया विसर्गाप्रसङ्गः । इति ।

( ख ) सङ्ख्येयविशेषावधारणे इति सर्वत्रानुवर्तते । पञ्चादेर्दशपर्य्यन्तान्मट्प्रत्यय इत्यर्थः ।

( **त्रेस्त्रयस्** ) (क)त्रयोदशः। चतुर्दशः। पञ्चदशः। षोडशः। सप्तदशः॥ १९० ॥

**त्रेस्त्रयस्** ॥ त्रिशब्दस्य त्रयस् स्यात् ॥ बहुव्रीहौ अशीतिपरे च न ॥ त्रयश्च दश चेति त्रयोदशः। बहुव्रीहौ तु त्रिर्दशेति त्रिदशाः। सुप्रत्ययार्थे बहुव्रीहिः॥ अशीतौ तु त्र्यशीतिः॥ प्राक् शतादित्येव। त्रिशतम्। त्रिसहस्रम्॥ त्रयोदशानां पूरणः त्रयोदशः। चतुर्दशानां पूरणः चतुर्दशः॥ पञ्चदशानां पूरणः पञ्चदशः॥ षोडशानां पूरणः षोडशः॥ सप्तदशानां पूरणः सप्तदशः॥ १९० ॥

( **विंशत्यादेर्वा तमट्** ) विंशतितमः। एकेन ऊना विंशतिः एकोनविंशतिः। एकोनविंशतेः संख्यापूरक एकोनविंशतितमः॥ * ॥

( सु० ) **विंशत्यादेर्वा तमट्** ॥ विंशतिप्रभृतिभ्यो वा तमट् स्यात्। पक्षे एकादशादेरिति डट्। टित्वादीप्॥ डट्प्रत्यये तु एकोनविंशतेः पूरणः॥ * ॥

( **विंशतेस्तिलोपो डिति** ) एकोनविंशः। विंशः। त्रिंशत्तमः। त्रिंशः। द्वाभ्यामधिका अशीतिर्द्व्यशीतिः। द्व्यशीतेः संख्यापूरको द्व्यशीतितमः। द्विचत्वारिंशत्तमः। पञ्चाशत्तमः। षष्टेः सङ्ख्यापूरणः षष्टितमः। सप्ततितमः। नवतितमः॥ १९१ ॥

( सु० ) **विंशतेस्तिलोपो डिति** ॥ विंशतिशब्दस्य ति इत्यस्य लोपः स्यात् डिति प्रत्यये॥ एकोनविंशः। तमटि एकोनविंशतितमः॥ विंशतेः पूरणः विंशतितमः। डति तु विंशः॥ एकविंशतेः पूरणः एकविंशतितमः। एकविंशः॥ एवं द्वाविंशतितमः। द्वाविंशः॥ त्रयोविंशतितमः। त्रयोविंशः॥ चतुर्विंशतितमः॥ चतुर्विंशः॥ पञ्चविंशतितमः। पञ्चविंशः॥ षड्विंशतितमः। षड्विंशः॥ सप्तविंशतितमः। सप्तविंशः॥ अष्टाविंशतितमः। अष्टाविंशः॥ किञ्च षड्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतमेते निपातेन सिद्धाः॥ एकोनत्रिंशतः पूरणः एकोनत्रिंशत्तमः। एकोनत्रिंशः॥ त्रिंशतः पूरणस्त्रिंशत्तमः। त्रिंशः॥ एवम् एकत्रिंशत्तमः। एकत्रिंशः॥ द्वात्रिंशत्तमः॥ द्वात्रिंशः॥ त्रयस्त्रिंशत्तमः। त्रयस्त्रिंशः॥ चतुस्त्रिंशत्तमः। चतुस्त्रिंशः॥ पञ्चत्रिंशत्तमः॥ पञ्चत्रिंशः॥ षट्त्रिंशत्तमः। षट्त्रिंशः॥ सप्तत्रिंशत्तमः। सप्तत्रिंशः॥ अष्टात्रिंशत्तमः। अष्टात्रिंशः॥ एकोनचत्वारिंशत्तमः। एकोनचत्वारिंशः। चत्वारिंशत्तमः। चत्वारिंशः॥ एकचत्वारिंशत्तमः। एकचत्वारिंशः॥ एवं सर्वत्र डट्तमटौ॥ द्व्यष्टनोरात्वं त्रेस्त्रयश्च वा चत्वारिंशत् प्रभृतौ परे॥ द्विचत्वारिंशत्। द्वाचत्वारिंशत्। त्रिचत्वारिंशत्। त्रयश्चत्वारिंशत् चतुश्चत्वारिंशत्॥ पञ्चचत्वारिंशत्॥ षट्चत्वारिंशत्॥ सप्तचत्वारिंशत्॥ अष्टचत्वारिंशत्। अष्टाचत्वारिंशत्॥ एकोनपञ्चाशत्॥ पञ्चाशत्॥ एकपञ्चाशत्। द्विपञ्चाशत्। द्वापञ्चाशत्। त्रिपञ्चाशत्। त्रयःपञ्चाशत्॥ चतुष्पञ्चाशत्॥ पञ्च-

---

( क ) त्रयश्च दश चेति त्रयोदशः। बहुव्रीहौ तु त्रिदशेति त्रिदशाः। अशीति परे तु त्रिशब्दस्य न त्रयस्। त्र्यशीतिः।

पञ्चाशत् ॥ षट्पञ्चाशत् ॥ सप्तपञ्चाशत् । अष्टापञ्चाशत् ॥ अष्टपञ्चाशत् ॥ एकोनषष्टिः ॥ षष्टिः ॥ एकषष्टिः ॥ द्वाषष्टिः । द्विषष्टिः ॥ त्रिषष्टिः । त्रयःषष्टिः ॥ चतुःषष्टिः ॥ पञ्च-षष्टिः । षट्षष्टिः ॥ सप्तषष्टिः ॥ अष्टषष्टिः । अष्टाषष्टिः ॥ एकोनसप्ततिः ॥ सप्ततिः ॥ एकसप्ततिः ॥ द्विसप्ततिः ॥ द्वासप्ततिः ॥ त्रिसप्ततिः । त्रयःसप्ततिः ॥ चतुःसप्ततिः ॥ पञ्च-सप्ततिः ॥ षट्सप्ततिः । सप्तसप्ततिः ॥ अष्टसप्ततिः । अष्टासप्ततिः ॥ एकोननवतिः ॥ नव-तिः ॥ एकनवतिः ॥ द्विनवतिः । द्वानवतिः ॥ त्रिनवतिः ॥ त्रयोनवतिः ॥ चतुर्णवति ॥ पञ्चनवतिः ॥ षण्णवतिः ॥ सप्तनवतिः ॥ अष्टनवतिः । अष्टानवतिः ॥ एकोनशतम् ॥ शतम् ॥ शतस्य पूरणः शततमः ॥ १९१ ॥

**( शतादेर्नित्यम् )** शततमः ॥ १९२ ॥

**( सु० ) शतादेर्नित्यम्** ॥ शतप्रभृतिभ्यस्तमडेव स्यात् । न डट् । असंख्यादेः षष्टि-शब्दाच्च नित्यं तमट् । षष्टितमः । संख्यादेः षष्टेस्तु डट्तमटौ । एकषष्टः । एकषष्टितमः ॥ १९२ ॥

**(संख्यायाः प्रकारे धा)** द्विधा । त्रिधा । चतुर्धा । दशधा ॥१९३॥

**( सु० ) संख्यायाः प्रकारे धा** ॥ संख्यावाचिशब्दात्प्रकारेऽर्थे धाप्रत्ययः स्यात् ॥ द्वौ प्रकारौ द्विधा ॥ त्रयः प्रकारास्त्रिधा ॥ चत्वारः प्रकाराश्चतुर्धा ॥ दश प्रकाराः दशधा ॥ क्त्वाद्यन्तं चेत्यव्ययत्वाद्विभक्तेर्लुक् ॥ १९३ ॥

**(द्वित्रिभ्यामेधाधमुञौ वा)** (क)द्वेधा । त्रेधा । द्वैधम् । त्रैधम् ॥१९४॥

**( सु० )द्वित्रिभ्यामेधाधमुञौ वा** ॥ आभ्यामेतौ स्तः प्रकारेऽर्थे पक्षे धा ॥ द्वौ प्रकारौ यस्य लोप इतीकारलोपः । द्वेधा । धमुञ उकार उच्चारणार्थः । द्वैधम् । द्विधा ॥ त्रयः प्रकाराः त्रेधा । त्रैधम् । त्रिधा ॥ १९४ ॥

**( एकाद्ध्यमुञ्वा )** ऐकध्यम् । एकधा ॥ १९५ ॥

**( सु० ) एकाद्ध्यमुञ्वा** ॥ एकशब्दात् ध्यमुञ् वा स्यात् ॥ उकार उच्चारणार्थः । पक्षे धा ॥ एकः प्रकारः ऐकध्यम् । एकधा ॥ १९५ ॥

**( एकादाकिन्नसहाये )** (ख)एकाकी ॥ १९६ ॥

**( सु० ) एकादाकिन्नसहाये** ॥ असहायवाचिन एकशब्दादाकिन् स्यात् ॥ 'यस्य लोपः' इत्यलोपः' एकाकी । कप्रत्ययोऽपि । एककः ॥ १९६ ॥

**( क्रियाया आवृत्तौ कृत्वसु् )** पञ्चकृत्वः । सप्तकृत्वः ॥१९७॥

**( सु० ) क्रियाया आवृत्तौ कृत्वसु्** ॥ संख्यावाचिशब्दात् क्रियाया आवृत्तावर्थे कृत्वसु् प्रत्ययः स्यात् ॥ पौनः पुन्येन गणनमावृत्तिः । पञ्च वारान् पञ्चकृत्वः । सप्तवारान् सप्तकृत्वः । क्त्वाद्यन्तं चेत्यव्ययत्वाद्विभक्तेर्लुक् ॥ वारशब्दस्य क्रियोत्पत्त्याधारकालवाचि-त्वात्कालाध्वनोरिति द्वितीया । संख्यायाः किम् । भूरि वारान् भुङ्क्ते । भूरिशब्दस्य लौ-किकसंख्यावाचित्वेऽपि नेह ग्रहणम् ॥ १९७ ॥

---

( क ) द्वित्रिभ्यामेधा-धमुञौ वा स्तः प्रकारेऽर्थे । पक्षे धा । क्त्वाद्यन्तं चेत्यव्ययत्वाद्विभक्तेर्लुक् ।

( ख ) असहायवाचिन एकशब्दादाकिन् प्रत्ययः स्यादित्यर्थः । कप्रत्यये एककः ।

**( द्वित्रिचतुर्भ्यः सुः ) द्विः । त्रिः । चतुः ॥ १९८ ॥**

( सु० ) द्वित्रिचतुर्भ्यः सुः ॥ एभ्यः सुप्रत्ययः स्यात् क्रियाया आवृत्तौ गणने ॥ उकार उच्चारणार्थः । कृत्वसोऽपवादोऽयम् ॥ द्वौ वारौ द्विः ॥ त्रीन् वारान् त्रिः ॥ चतुरो वारानिति रात्सस्येति सलोपः । चतुः । क्त्वाद्यन्तं चेत्यव्ययत्वाद्विभक्तेर्लुक् ॥ बहोर्वा धाऽऽसन्नकाले । पक्षे कृत्वस् बहुधा बहुकृत्वो वा दिवसस्य भुङ्क्ते ॥ आसन्नकाले किम् । बहुकृत्वो मासस्य भुङ्क्ते ॥ दिवसस्येति सम्बन्धे षष्ठी ॥ १९८ ॥

**( एकस्य सकृदादेशश्च ) एकवारं सकृत् ॥ १९९ ॥**

( सु० ) एकस्य सकृदादेशश्च ॥ एकशब्दस्य स्थाने सकृदित्यादेशः स्याच्चात्सुप्रत्ययः संयोगान्तस्येति सुलोपः । गुरुत्वात्सर्वस्यादेशः । एकवारमिति सकृत् ॥ १९९ ॥

**( बह्वल्पार्थात्कारकाच्छस् ) (क)बहुशः । अल्पशः ॥२००॥**

( सु० ) बह्वल्पार्थात्कारकाच्छस् ॥ बहु चाल्पं च बह्वल्पे बह्वल्पे अर्थौ यस्य तद्बह्वल्पार्थं तस्माद्बह्वल्पार्थात् कारकात् शस् स्यात् ॥ बहुभ्य इति बहुशः । अल्पेभ्य इत्यल्पशः । दानपात्रे चतुर्थी । बह्वल्पार्थात्किम् । गां ददाति ॥ अर्थग्रहणात्पर्यायेभ्यो विशेषेभ्यश्च शस् । भूरिशो ददाति । त्रिशः ॥ कारकात्किम् । बहूनां स्वामी । अल्पानां स्वामी ॥ २०० ॥

( त० ) कारकादिति ॥ तेन बहूनां स्वामीत्यत्र न ॥ २०० ॥

**( संख्यापरिमाणाभ्यां वीप्सायाम् ) (ख) द्वौ द्वौ इति द्विशो ददाति । प्रस्थशः । माषशः ॥ २०१ ॥**

( सु० ) संख्यापरिमाणाभ्यां वीप्सायाम् ॥ संख्यापरिमाणवाचककारकाभ्यां वीप्सायामर्थे शस् स्यात् ॥ द्वौ द्वाविति द्विशः ॥ प्रस्थं प्रस्थमिति प्रस्थशः ॥ माषं माषमिति माषशः ॥ संख्यापरिमाणाभ्यां किम् । घटं घटं ददाति । वीप्सायां किम् द्वौ ददाति ॥ कारकात्किम् । द्वयोर्द्वयोः स्वामी ॥ २०१ ॥

( त० ) संख्यैकवचनाभ्यां ( परिमाणाभ्या ) मिति ॥ संख्या च एकवचनं च संख्यैकवचने ताभ्याम् । प्रस्थश इति ॥ प्रस्थं प्रस्थमित्यर्थः ॥ एकवचनग्रहणेन वृत्तावेकार्थता नियता । परिमाणशब्दा एव ग्राह्यास्तेनेह न । घटं घटमिति । घटादयो हि जातिशब्दा नैकार्था भवन्ति । जातियोगस्यैकानेकसाधारणत्वात् ॥ केचित्तु कुण्डशो ददातीति प्रयुञ्जाना जातिशब्देभ्योऽपि मन्यन्ते । एकैकश इत्यादिप्रयोगास्तु प्रामादिका एव । शस्प्रत्ययेनैव वीप्सावगतेः । स्वार्थिकशसा तु न क्षतिः । "अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् । सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥" इत्यत्र तु सहस्रं सहस्रं ये समवेतास्तेषामपि परिषत्त्वं नेत्यर्थः । इति समवायक्रियां प्रति सहस्रस्य कर्तृत्वं वीप्साऽस्त्येवेति ॥ २०१ ॥

---

( क ) कारकादिति कथनात् 'बहूनां स्वामी' इत्यत्र न शस् । षष्ठ्या अकारकत्वात् ।

( ख ) संख्यापरिमाणाभ्यामिति । प्रमाणैकवचनाभ्यामिति क्वचित् पाठः ।

(तयडयटौ संख्याया अवयवे) (ग) द्वाववयवौ यस्य द्वितयम् । त्रितयम् । चतुष्टयम् । चतुष्टयी ॥ २०२ ॥

( सु० ) तयडयटौ संख्याया अवयवे ॥ अवयवे वर्तमाना या संख्या तद्वाचिनः प्रथमान्तात् षष्ठ्यर्थे तयडयटौ स्तः ॥ टकारः ङीब्विध इतोवर्थः ॥ द्वितयम् ॥ यस्येतोलोपः ॥ द्वयम् ॥ त्रयोऽवयवा यस्य त्रितयम् । त्रयम् ॥ उभाववयवौ यस्य उभयम् ॥ नित्यमत्रायट् ॥ चत्वारोऽवयवा यस्याः सा रेफस्य विसर्गे सत्वे षत्वे च ष्टुत्वम् । चतुष्टयी ॥२०२॥

( त० ) तयडयटाविति ॥ तयट् च अयट् च तयडयटौ ॥ टित्वमीबर्थम् ॥ यत्तु प्राचा तयायटाविति पठितम् । यच्च तद्व्याख्यातृभिर्वासुदेवादिभिरुक्तं द्वितयीत्यत्र नदादित्वादीप् । द्वयीत्यत्र तु टित्वादिति तत्रेपो द्विहेतुकत्वेन गौरवादुपेक्षितम् ॥ चतुष्टयमिति ॥ चत्वारोऽवयवा अस्येति विग्रहः । रेफस्य विसर्गे तस्य सत्वे षत्वे ष्टुत्वाद्रूपसिद्धिः ॥२०२॥

( स्त्रीपुंसाभ्यां नञ्स्नञौ ) स्त्रियां भवः स्त्रैणः । पुंसि भवः पौंस्नः ॥ २०३ ॥

( सु० )स्त्रीपुंसाभ्यां नञ्स्नञौ ॥ आभ्यामेतौ स्तः भवाद्यर्थे ॥ स्त्रैणः । संयोगान्तस्येति सलोपः । पौंस्नः ॥

अथ विभक्तिनामकप्रत्यया उच्यन्ते । इह वक्ष्यमाणप्रत्ययानां विभक्तिसंज्ञा बोध्या॥ इदम इश् विभक्तौ । शित्वात्सर्वादेशः । इदम एतेतौ स्तो रथयोः । इशोऽपवादोऽयम् । एतदः अश् विभक्तौ । एतद् एतेतौ स्तो रथयोः । अशोऽपवादोऽयम् ।। सर्वस्य सो वा दे । किमः कुः तहयोः ॥ पञ्चम्यर्थे किंसर्वादिबहुभ्यस्तस् वाऽद्व्यादिभ्यः । अद्व्यादिपर्युदासात् किमः पृथग्ग्रहणम् । कस्मादिति तसि कुः । कुतः ॥ यस्मादिति तसि त्यदादेरित्यः । यतः ॥ तस्मादिति ततः ॥ अस्मादिति तसि इश् । इतः ॥ एतस्मादिति तसि अशादेशः । अतः ॥ अमुष्मादिति अदसस्तसित्यदाद्यत्वे मत्वे उत्वे च अमुतः ॥ बहोरिति बहुतः ॥ द्व्यादेस्तु द्वाभ्यामित्यादि ॥ सर्वोभयार्थाभ्यां पर्यभिभ्यां तस् । परितः सर्वत इत्यर्थः ॥ अभितः । उभयतः इत्यर्थः ॥ सप्तम्यर्थे किंसर्वादिबहुभ्यस्त्रोऽद्व्यादिभ्यः ॥ इदमः सप्तम्यर्थे हः ॥ त्रस्यापवादः । इशादेशः । अस्मिन्निति इह ॥ किमः सप्तम्यर्थे त्रः । कस्मिन्निति कुत्र ॥ किमः कश्च । यस्येत्यलोपः । क ॥ छन्दसि किमो हः सप्तम्यर्थे । कुह ॥ एतस्मिन्निति एतदोऽश । अत्र पञ्चमीसप्तमीतरविभक्त्यन्तादपि तसादयो दृश्यन्ते भवदादियोगे एव । सभवान् । ततोभवान् । तत्रभवान् । तम्भवन्तन् । ततोभवन्तम् । तत्रभवन्तम् । इत्यादि ॥ एवं दीर्घायुः । देवानांप्रियः । आयुष्मान् । एतैर्योगेऽपि ।। सर्वैकान्यकिंयत्तद्भ्यः कालार्थेभ्यः सप्तम्यर्थे दा । सर्वस्मिन् काले इति सादेशो वा । सदा सर्वदा । एकस्मिन्काले इति एकदा । अन्यस्मिन् काले इति अन्यदा । कस्मिन् काले इति । त्यदादेरित्यत्वम् । कदा ।

---

(ग)तयडयटाविति । सङ्ख्यायां तयायटाविति सारस्वते पाठः । इदं तत्र व्याख्यानम् । तयश्च अयट् च तौ संख्याया अवयवत्वविवक्षायां भवत इत्यर्थः । द्वितयी त्रितयीत्यत्र नदादित्वादीप् । द्वयी त्रयीत्यत्र यटष्टित्वात् 'ष्ट्रिन' इतीप् । केचित्तु तयायटो इति पठित्वा ङित्वाट्टिलोपे नदादित्वादेवेप् इत्याहुः । तदसत् । यस्य लोप इत्येव सिद्धे ङित्ववैयर्थ्यप्रसङ्गात् ।

यस्मिन् काले इति यदा । तस्मिन् काले इति तदा ।। कालार्थेभ्य इति किम् । सर्वत्र देशे । अस्मिन् काले इति कालवाचकादिदमः सप्तम्यर्थे र्हिप्रत्ययः । दाप्रत्ययस्यापवादोऽयम् । एतादेशः । एतर्हि ।। काले इति किम् । इह देशे ।। कालवाचकादिदमः सप्तम्यर्थेऽधुनादानींप्रत्ययौ च । इशादेशः । यस्य लोप इति लोपः । अधुना । इशादेशः । इदानीम् ॥ कालवाचकात्तदः सप्तम्यर्थे दानींप्रत्ययश्च । तस्मिन्काले त्यदादेरित्यत्वम् । तदानीम् ।। किंयत्तदेतद्भ्योऽनद्यतनकालवाचकेभ्यः सप्तम्यर्थे र्हिप्रत्ययो वा । कस्मिन् काले इति इति त्यदादेरित्यत्वम् । कर्हि । पक्षे दा । कदा । यस्मिन् काले यर्हि । यदा । तस्मिन् काले तर्हि । तदा । एतस्मिन्काले एतादेशः । एतर्हि ।। समानेऽह्नि इति सहादेरित्यनेन समानस्य सः । समानशब्दात् सप्तम्यन्तस्याहन् शब्दस्यार्थे द्यस निपात्यते । सद्यः ।। पूर्वस्मिन् वत्सरे इति पूर्वतरे वत्सरे इति च सहादेरित्यनेन पूर्वपूर्वतरयोः पर इत्यादेशो निपात्यते संवत्सरेऽर्थे । पूर्वपूर्वतरशब्दाभ्यां उत् आरि–प्रत्ययौ । यस्येत्यलोपः । परुत् । परारि ।। अस्मिन् संवत्सरे इति संवत्सरेऽर्थे इदम्शब्दात् समसण्प्रत्ययः । इशादेशः । आदिवृद्धिः । षत्वम् । ऐषमः ॥ परस्मिन्नहनीति परशब्दादहनि इत्यर्थ एद्यविप्रत्ययो निपातनात् । परेद्यवि ॥ अस्मिन्नहनीति इदम्शब्दात् द्यप्रत्ययो निपातनादशादेशश्च । अद्य ॥ पूर्वअन्यअन्यतरअपरअधरउभउत्तर इत्येभ्योऽहनीत्यर्थे एद्युस्प्रत्ययो निपातनात् । यस्येत्यलोपः । पूर्वस्मिन्नहनीति पूर्वेद्युः । अन्यस्मिन्नहनीति अन्येद्युः । अन्यतरस्मिन्नहनीति अन्यतरेद्युः । इतरस्मिन्नहनीति इतरेद्युः । अपरस्मिन्नहनीति अपरेद्युः । अधरस्मिन्नहनीति अधरेद्युः । उभयोरह्नोरिति उभयेद्युः । उभयाद् द्युः प्रत्ययः । उभयद्युः ॥ अद्व्यादिभ्यः सर्वादिबहुभ्यः प्रकारेऽर्थे वर्तमानेभ्यः स्वार्थे था प्रत्ययः । सामान्यस्य भेदको विशेषः प्रकारः यथा ॥ किमिदमेतद्भ्यः प्रकारेऽर्थे वर्तमानेभ्यः स्वार्थे थम्प्रत्ययः । थाप्रत्ययस्यापवादोयम् । केन प्रकारेण त्यदादेरित्यः । कथम् । अनेन प्रकारेण एतेन प्रकारेण वा इदमेतदोरित् इत्थम् । अव्ययत्वाद्विभक्तेर्लुक् सर्वत्र ।। इति विभक्तिनामकाः प्रत्ययाः ।।

दिग्देशकालवृत्तिभ्यो दिशि रूढेभ्यः शब्देभ्यः सप्तमीपञ्चमीप्रथमाविभक्त्यर्थेऽस्तात्प्रत्ययः । पूर्वाधरावरेभ्योऽसप्रत्ययोऽपि । पुरधावादेशाश्च । अस्तादसोः परयोः। पूर्वस्यां पूर्वस्याः पूर्वा वा दिक् पुरः । अस्प्रत्ययः । पुरस्तात् । अस्तात्प्रत्ययः । पूर्वशब्दादतस् प्रत्ययः पुरादेशश्च वा । पुरतः । 'स्यात्पुरः पुरतोऽग्रतः' इत्यमरः॥ 'पुरतः प्रथमे चाग्रे' इति विश्वश्च ॥ अधरस्याम् अधरस्या अधरा वा अधः । अस् । अधस्तात् । अस्तात् प्रत्ययः ॥ अवरस्याम् अवरस्याः अवरा वा अवः । अस् । अवस्तात् । अस्तात् । अवरस्यास्तात्परेऽव् वा । अवस्तात् । अवरस्तात् ।। एवं देशे काले च ।। दिशि रूढेभ्यः किम् । ऐन्द्र्यां वसति ।। सप्तम्याद्यर्थे किम् । पूर्वं ग्रामं गतः ।। दिगादिवृत्तिभ्यः किम् । पूर्वस्मिन् गुरौ वसति ।। दक्षिणोत्तराभ्यामतस् । अस्तात्प्रत्ययस्यापवादः । दक्षिणस्यां दक्षिणस्याः दक्षिणा वा दिक् दक्षिणतः । उत्तरस्याम् उत्तरस्याः उत्तरा वा उत्तरतः । अतस् ।। पराऽवराभ्यामतस् वा । पक्षेऽस्तात् । परस्यां परस्याः

परा वा परतः । अवरस्याम् अवरस्याः अवरा वा अवरतः । अतस् । पक्षेऽस्तात् । परस्तात् । अवरस्तात् ॥ **अञ्चत्यन्ताद् दिक्शब्दादस्तातप्रत्ययस्य लुक्** । तद्धितलुकि स्त्रीप्रत्ययस्य लुग् वाच्यः । प्राच्यां प्राच्याः प्राची वा दिक् प्राक् । उदक् ॥ पूर्वं देशे काले च ॥ **ऊर्ध्वशब्दाद् रिरिष्टात्प्रत्ययावस्तात्विषये** । ऊर्ध्वस्योपादेशश्च ॥ ऊर्ध्वम् ऊर्ध्वात् ऊर्ध्वो वेति । उपरि । उपरिष्टाद्वा ॥ **अपरशब्दादात्प्रत्ययोऽपरस्य पश्चादेशश्चास्तात्विषये** । अपरस्मिन् अपरस्मात् अपरो वेति पश्चात् ॥ **उत्तराधरदक्षिणादात्प्रत्ययोऽस्तात्विषये** । उत्तरात् । अधरात् । दक्षिणात् । **अदूरे वर्तमानेभ्यः उत्तराधरदक्षिणेभ्य एनप्रत्ययो वा सप्तमीप्रथमाविभक्त्यर्थे** । उत्तरस्मिन् उत्तरो वेति उत्तरेण । अधरस्मिन् अधरो वेति अधरेण । दक्षिणस्मिन् दक्षिणो वेति दक्षिणेन । पक्षे उत्तरात् । अधरात् । दक्षिणात् । आत् प्रत्ययः ॥ उत्तरतः । अधः । अधस्तात् । दक्षिणतः ॥ केचिद्दिक्शब्दमात्रादेनप्रत्ययमाहुः । पूर्वेण ग्रामम् । अपरेण ग्रामम् । **दक्षिणशब्दादाप्रत्ययः सप्तमीप्रथमाविभक्त्यर्थे** । दक्षिणस्यां दक्षिणा वेति दक्षिणा । दक्षिणोत्तराभ्यां दूरेऽर्थे आमाहिप्रत्ययौ । दक्षिणस्यां दिशि दूरे इति दक्षिणाहि । दक्षिणा । उत्तरस्यां दिशि दूरे इति उत्तराहि । उत्तरा । अव्ययत्वाद्विभक्तेर्लुक् सर्वत्र ॥ २०३ ॥ इति सुबोधिन्यां तद्धिताः ॥ १८ ॥

( त० ) पौस्न इति ॥ संयोगान्तस्येति सलोपः ॥ २०३ ॥

इति तद्धितप्रकरणम् ॥ १८ ॥

---

# अथ द्विरुक्तप्रक्रिया ॥ १९ ॥

**(वीप्सायां पदं द्विः)** वृक्षं वृक्षं सिञ्चति । ग्रामो ग्रामो रमणीयः ॥ १ ॥

( सु० ) अथ सर्वं पदं द्विरुच्चारयेदित्यधिकारोऽयम् ॥ वीप्सायां पदं द्विः ॥ व्याप्तुमिच्छा वीप्सा व्याप्तिप्रतिपिपादयिषेति यावत् (क) । व्याप्तिः कार्त्स्न्यं तच्चाधिकारकम् । सर्वे ब्राह्मणा आमन्त्रिता इत्यादौ यथा । न हि जगतीतले विद्यमाना ब्राह्मणाः सर्वेऽपि केनचिदामन्त्रयितुं शक्यन्ते इति स्वग्रामस्थस्वजातीयब्राह्मणानां सङ्कोचो यथाभ्युपेयते तथात्रापि सकलवृक्षसेचनसामर्थ्यं कस्यापि मनुष्यस्य नास्तीति यत्र वाटिकादौ वृक्षसेचनार्थमधिकारस्तद्वाटिकास्थवृक्षाणामेव कार्त्स्न्यं वृक्षं वृक्षं सिञ्चतीत्यादौ गम्यते इत्यभ्युपेयम् । यत्र तु सङ्कोचे कारणं नास्ति तत्रासङ्कोच इष्ट एव । यथा जातो जातो निधनमुपैतीति ॥ तस्यां वीप्सायां वाच्यायामेकस्य पदस्य स्थाने द्वे पदे समुदिते युगपदादेशत्वेन विधीयेते इत्यर्थः । वृक्षं वृक्षमित्यत्र प्रत्येकनिष्ठमेकत्वमेव हि प्रतिभासतेऽसौ न बहुवचनप्रसङ्गः(ख) ॥ १ ॥

---

( क ) व्याप्तिप्रतिपिपादयिषेति । सा च प्रयोक्तृधर्मः । आबाधवत् । गतगता इत्युक्ते प्रियस्य चिरगमनादिना पीडितो वाक्यं प्रयुङ्क्ते इति यथा प्रतीयते तथा वृक्षं वृक्षं सिञ्चतीत्यादावपि व्याप्तिं बुबोधयिषोरिदं वाक्यमित्यवगमात् ।

( ख ) अत्र मनोरमा । "बहूनां भानेऽपि बहुत्वसंख्यायास्तत्राभानात् वृक्षं वृक्षमित्यादौ न बहुवचनप्रसङ्गः । प्रत्येकनिष्ठमेकत्वमेव हि तत्र भासते" इति । केचित्तु—वृक्षं वृक्षमिति समुदायस्य तु प्रातिपदिकत्वाभावात् बहुवचनस्य प्रसङ्ग एव नास्ति । इति वदन्ति । विस्तरस्तु तत्त्वबोधिन्यादाववगन्तव्यः ।

( त० ) वीप्सायामिति ॥ व्याप्तुमिच्छा वीप्सा व्याप्तिप्रतिपिपादयिषेति यावत्। व्याप्तिश्च कार्त्स्न्यम् ॥ वृक्षं वृक्षं सिञ्चतीति ॥ सेकक्रियायाः सकलवृक्षे अन्वयः । बहुवचनप्रसङ्गस्तु बहूनां भानेऽपि बहुत्वसंख्याया अभानादेव न । प्रत्येकनिष्ठमेकत्वमेव हि तत्र भासते ॥ १ ॥

**( परेर्वर्जने वा द्वित्वम् )** परि परि वङ्गेभ्यो वृष्टो देवः । परि वङ्गेभ्यो वृष्टो देवः । वङ्गान्परिहृत्येत्यर्थः ॥ २ ॥

( सु० ) परेर्वर्जने वा द्वित्वम् ॥ वर्जनार्थवाचिनः परेर्वा द्वित्वं स्यात् ॥ परि परि वङ्गेभ्य इत्यत्र परियोगे पञ्चमी । वाग्रहणात्परि हरेः संसार इति ॥ २ ॥

( त० ) परेर्वर्जन इति ॥ अत्र वाशब्दस्य व्यवस्थितत्वात्समासे न । तेन परित्रिगर्तं वृष्टो देव इत्यादौ न ॥ २ ॥

**(उपर्यध्यधसः सामीप्ये द्विः)** उपर्युपरि ग्रामम् । ग्रामस्योपरिष्टात्समीपदेश इत्यर्थः । अध्यधि सुखम् । सुखस्योपरिष्टात्समीपदेश इत्यर्थः ॥३॥

( सु० ) उपर्यध्यधसां सामीप्ये द्विः ॥ सामीप्यार्थवाचिन एते द्विः स्युः ॥ सामीप्यं प्रत्यासत्तिस्तच्च कालकृतं देशकृतं वा । कालकृतस्य सामीप्यस्योदाहरणमध्यधि सुखमिति । अन्यद्द्वयं देशकृतस्य सामीप्यस्योदाहरणम् ॥ ३ ॥

( त० ) उपरीति ॥ उपरि शिरसो घटं धारयतीत्यत्र तु औत्तराधर्यमात्रविवक्षणेन सामीप्याभावान्न द्वित्वम् ॥ ३ ॥

**( वाक्यादेः सम्बोधनस्यासूयासम्मतिकोपकुत्सनभर्त्सनेषु )** असूयायामुदाहरणम् । सुन्दर सुन्दर वृथा ते सौन्दर्यम् ॥ संमतौ । देव देव वन्द्योऽसि ॥ कोपे । दुर्विनीत दुर्विनीत इदानीं ज्ञास्यसि ॥ कुत्सने । धानुष्क धानुष्क वृथा ते धनुः ॥ भर्त्सने । चोर चोर घातयिष्यामि त्वाम्(क)॥४

( सु० ) वाक्यादेः सम्बोधनस्याऽसूयासंमतिकोपकुत्सनभर्त्सनेषु ॥ एष्वर्थेषु विद्यमानस्य वाक्यादिस्थितस्य सम्बोधनस्य द्वित्वं स्यात् ॥ ननु कोपासूयाभ्यां पृथक् कुत्सनभर्त्सनग्रहणमपार्थकम् । नाऽसूयां विना कुत्सयते नाप्यकुपितो भर्त्सयति । इति चेदत्रा : । गुरवो हि हितैषित्वादकुपिता अपि भर्त्सनं कुर्वन्ति । विनाप्यसूयया कुत्सां वैन्स्यतः पृथक् तयोर्निर्देशः ॥ संमतिः पूजा ॥ ४ ॥

( त० ) वाक्यादेरिति ॥ वाक्यादेः सम्बोधनस्यासूयाद्यर्थेषु द्विरित्यर्थः । गुणेषु दोषारोपोऽसूया ॥ ४ ॥

**( द्विरुक्त एकशब्दो बहुव्रीहिवत् )** तेन विभक्तिलोपपुंवद्भा-

---

( क ) वाक्यादेरिति । द्वे स्त इति शेषः । यद्यपि कोपाद्भर्त्सनम् । असूयया कुत्सनम् । तथापि विनापिकोपासूये भर्त्सनकुत्सनयोः शिष्यादौ सम्भवात् पृथग् ग्रहणमिति भाष्ये स्पष्टम् । सुन्दरेति । सौन्दर्यमसहमानस्येदं वाक्यम् । देवेति । तव वन्दनं सम्मतमित्यर्थः । दुर्विनीतेति । क्रोधाविष्टस्य वाक्यम् । ज्ञास्यसीति । दुर्विनयस्य फलमिति शेषः । धानुष्केति । युद्धासमर्थं प्रति निन्देयम् । चोरेति । चोरं प्रति अवाच्यवादोऽयम् ।

वौ । एकैकमक्षरम् । एकैकयाऽऽहुत्या । इह पूर्वभागे पुंवद्भावादवग्रहे विशेषः। पदविभागोऽवग्रहः । एकैकया इत्यादौ विशेषः । एकैकस्मै देहि ॥ ५ ॥

( सु० ) द्विरुक्त एकशब्दो बहुव्रीहिवत् ॥ बहुव्रीहौ यत्कार्यमुक्तं तद् द्विरुक्ते एकशब्दे भवतीत्यर्थः ॥ बहुव्रीहिसमासवत्त्वात् समासप्रत्यययोरिति विभक्तिलोपः। पुंवदेति पुंवद्भावश्च । एकमेकमित्यत्र द्वयोरपि विभक्त्योर्लुकि कृते बहुव्रीहिसमासवद्भावादेव कृत-द्धितसमासाश्चेत्यनेन समुदायात्स्याद्युत्पत्तिः । अन्तरङ्गैकसंख्यावाचको द्विरुक्तार्थः संख्या-न्तरे निराकाङ्क्ष एव इत्युक्तत्वादेकवचनमेव । एकैकयेत्यत्र सर्वादेः समासादाविति पूर्वभागे पुंवद्भावः । एकस्मै एकस्म इत्येकैकस्मै ॥ ५ ॥

( त० ) अवग्रहे इति ॥ वैदिकानां पदपाठे इत्यर्थः ॥ ५ ॥

( पीडायां द्योत्यायां द्वे स्तो बहुव्रीहिवच्च ) गतगतः । विरहात्पीड्यमानस्येयमुक्तिः । गतगता ॥ ६ ॥

( सु० ) पीडायां द्योत्यायां द्वे स्तो बहुव्रीहिवच्च ॥ पीडार्थद्योतकं पदं द्विः स्यात् ॥ गतः गत इति बहुव्रीहिवद्भावाद्विभक्तेर्लुक् । गतगतः । गता गतेति पुंवदेति पुंवद्भावः । गतगता ॥ ६ ॥

( त० ) गतगतेति ॥ इह पुंवद्भावः पूर्वपदस्य बहुव्रीहिवद्भावाद्बोत्तरपदस्येति भावः॥६

( सादृश्ये द्योत्ये गुणवचनस्य द्वे स्तो बहुव्रीहिवच्च ) पटुपट्वी । पटुपटुः । पटुसदृशः । ईषत्पटुरिति यावत् ॥ गुणोपसर्जनद्रव्य-वाचिनः केवलगुणवाचिनश्चेह गृह्यन्ते । शुक्लशुक्लः पटः । शुक्लशुक्लं रूपम् ॥७॥

( सु० ) सादृश्ये द्योत्ये गुणवचनस्य द्वे स्तो बहुव्रीहिवच्च ॥ तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं सादृश्यम् । पट्वी पट्वीति पुंवदेति पुंवद्भावः । पटुः पटुरिति बहुव्रीहिवद्भावाद्विभक्तेर्लुक् । पटुपटुः । 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति' इत्युक्त-त्वात् । यत्र शुक्लादयः शब्दा द्रव्यवाचकास्तत्र गुणा उपसर्जनीभूता एव सन्ति । अतोऽत्र द्रव्यवाचकशुक्लादिपदस्य गुणवाचकशुक्लादिपदस्य च ग्रहणम् । शुक्लः शुक्ल इति बहुव्रीहि-त्वाद्विभक्तेर्लुक् । शुक्लशुक्लः पटः । गुणोपसर्जनद्रव्यवाचिन उदाहरणम् । शुक्लं शुक्लमिति समासवत्त्वाद्विभक्तेर्लुक् । शुक्लशुक्लं रूपम् । केवलगुणवाचि न उदाहरणम् ॥ ७ ॥

( त० ) पटुपट्वी ॥ इति ॥ बहुव्रीहिवद्भावात्पूर्वभागे सिलोप पुंवद्भावौ । 'नवं नवं प्रीतिरहो करोति' इत्यत्र वीप्सायां द्वित्वम् । अनेन द्वित्वे सिलुक् स्यात् । कथं 'भी-तभीत इव शीतमयूखः' इति भारविः ॥ इवशब्देन सादृश्यस्योक्ततया सादृश्ये द्वित्वायो-गात् । सत्यम् । भीतेभ्यो भीत इति व्याख्येयम् । तेनातिभीत इति फलितम् । "खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र क्षीणः क्षीणः परिलघु पयः स्रोतसां चोपभुज्य" इति मेघदूते एकस्यापि खेदस्यावस्थासु भेदं प्रकल्प्य वीप्सा बोध्या॥ 'मन्दं मन्दं नुदति' इत्यत्र तु मन्दं स्वतो मन्दगामिनं मन्दं नुदतीत्यन्वयो बोध्यः ॥ ७ ॥

( अनुक्रमे द्योत्ये द्वे ) मूले मूले स्थूलो वृक्षः(क) ॥ ८ ॥

( क ) मूले मूले इति । पूर्वपूर्वो मूलभागः उत्तरोत्तरमूलभागापेक्षया स्थूल इति यावत्।

( सु० ) अनुक्रमे द्योत्ये द्वे ॥ अनुक्रमद्योतकं पदं द्विः स्यात् ॥ वीप्सा भावाद्यमारम्भः । एकस्य वृक्षादेरेकमेव मुख्यं मूलमग्रं च भवति । इतरेषां भागानामापेक्षिकोऽग्रमूलव्यपदेशः स्थौल्यसौक्ष्म्ये अपि नैकरूपे । यथा मूलं स्थूलं यथाऽग्रं सूक्ष्मं तथा नेतरे भागा इति वीप्साया असम्भवः । मूले मूले स्थूलस्तथाऽग्रेऽग्रे सूक्ष्मः ॥ ८ ॥

**( सम्भ्रमेण प्रवृत्तावनेकधा प्रयोगः )** सर्पः सर्पः सर्पः बुध्यस्व बुध्यस्व बुध्यस्व (क) ॥ ९ ॥

( सु० ) संभ्रमेण प्रवृत्तावनेकधा प्रयोगः ॥ सम्बोध्यो हि यावद्भिः शब्दः प्रयोजनमेति तावन्तः प्रयोगा वाच्या इत्यर्थः ॥ ९ ॥

**(क्रियासमभिहारे द्वे)** लुनीहि लुनीहि इत्येवायं लुनाति(ख) ॥१०॥

( सु० ) क्रियासमभिहारे द्वे ॥ पौनः पुन्यं भृशार्थश्च क्रियासमभिहारस्तत्र पदं द्विः स्यात् ॥ पौनःपुन्यम् । आख्यातकृदन्तयोरेव यथा । पचति पचति । भुक्त्वा भुक्त्वा ॥ भृशाऽर्थे यथा लुनीहि लुनीहीति ॥ १० ॥

( त० ) क्रियासमभिहारे इति ॥ पौनःपुन्ये भृशार्थे चेत्यर्थः ॥ १० ॥

**(कर्मव्यतिहारे सर्वादेर्द्वित्वं समासवच्च बहुलम्)** बहुलग्रहणादन्यपरयोर्न समासवत् । इतरशब्दस्य नित्यं समासवत्(ग) ॥११॥

( सु० ) कर्मव्यतिहारे सर्वादेर्द्वित्वं समासवच्च बहुलम् ॥ क्रियाविनिमयेऽर्थे सर्वादिगणस्य द्वित्वं स्यात् । नित्यमेवेदं द्वित्वम् । बाहुलकं तु समासवद्भावस्यैव । तेनान्यपरशब्दयोः समासवद्भावो न । इतरशब्दस्य च नित्यमेव समासवद्भावो भवतीत्यर्थः॥

( त० ) कर्मव्यतिहारे इति ॥ क्रियाविनिमये इत्यर्थः ॥ ११ ॥

**( असमासवद्भावे पूर्वपदस्थाया विभक्तेः सिरादेशो वाच्यः )** अन्योऽन्यौ । अन्योऽन्यान् । अन्योऽन्येन कृतम् । अन्योऽन्यस्मै दत्तमित्यादि । 'अन्योऽन्येषां पुष्करैरामृशन्तः' इति माघः । एवं परस्परम् । वाचस्पत्यादित्वात्सः ॥ इतरेतरम् । इतरेतरेणेत्यादि ॥ १२ ॥

( सु० ) असमासवद्भावे पूर्वपदस्थाया विभक्तेः सिरादेशो वाच्यः ॥ पूर्वपदस्य प्रथमादिविभक्तीनां स्थाने सिरेव भवत्यसमासवद्भावे ॥ अन्यः अन्य इति अन्योन्यः । अन्यौ अन्याविति अन्योऽन्यौ । अन्ये अन्ये इति अन्योऽन्ये । अन्यमन्यमिति अन्योऽन्यमित्यादिषु सर्वत्र पूर्वपदस्थविभक्तेः सौ कृते ततो विसर्गः । अतोऽस्युरित्युत्वे 'उ ओ' इत्योत्वे एदोतोऽत इत्यलोपे च रूपसिद्धिः । एवं परः पर इति परस्परः । परौ पराविति परस्परौ । परे परे इति परस्परे । परं परमिति परस्परमित्यादि । इतरशब्दस्य तु समासवद्भावात् समासप्रत्यययोरिति विभक्तेर्लुक् । इतर इतर इति इतरेतरः । इतरौ

( क ) सम्भ्रमेणेति । सम्भ्रमो भयादिकृता त्वरा । तेन प्रवृत्तौ गम्यमानायां यथेष्टमिच्छानुसारेण अनेकधा शब्दः प्रयोक्तव्यः । इति वक्तव्यमित्यर्थः ।

( ख ) पौनः पुन्यं भृशत्वं च क्रियासमभिहारः । लुनीहि । अतिशयितलवनमिति फलितोऽर्थः ।

( ग ) कर्मव्यतिहारः क्रियाविनिमय इत्यर्थः । तस्मिन् गम्ये सर्वादेर्द्वे स्तः ।

इतराविति इतरेतरौ । इतरे इतरे इति इतरेतरे । इतरमितरमिति इतरेतरमित्यादि॥ १२॥

( स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वा )

अन्योऽन्याम् अन्योऽन्यम् परस्पराम् परस्परम् इतरेतरामितरेतरं वा इमे ब्राह्मण्यौ कुले वा भोजयतः ।

"दलद्वयेऽप्याबभावः क्लीबे ह्रस्वविरहः स्यमोः ।
समासे सेरलुक् चेति सिद्धं बाहुलकाश्रयम् ॥"

समासे सेरलुक् चेत्यस्योदाहरणं तु अन्योऽन्याश्रयः परस्पराक्षिसादृश्यमित्यादिकं बोध्यम्(क) ॥ १३ ॥

( सु० ) स्त्रीनपुंसकयोरुत्तरपदस्थायां विभक्तेराम्भावो वा ॥ स्त्रियां क्लीबे चोत्तरपदस्थविभक्तीनामामादेशो वा भवति ॥ स्त्रियां यथा । अन्या अन्येति पूर्वपदस्थ विभक्तेः सिः परपदस्थविभक्तेश्चाम् । अन्योऽन्याम् । आमभावपक्षे अन्योऽन्यम् । बहुलग्रहणात् स्त्रियामित्याप्प्रत्ययाभावो दलद्वये । अन्ये अन्ये इति अन्योन्याम् अन्योन्यौ । अन्या अन्या इति अन्योन्याम् अन्योन्याः । अन्यामन्यामिति अन्योन्याम् अन्योन्यमित्यादि ॥ एवं परस्परां परस्परः । परस्परां परस्परौ । परस्परां परस्परे । परस्परां परस्परमित्यादि ॥ एवमितरेतराम् इतरेतरः । इतरेतराम् इतरेतरौ । इतरेतराम् इतरेतरे । इतरेतराम् इतरेतरमित्यादि । क्लीबे तु अन्यत् अन्यदिति अन्योन्याम् । अन्योन्यम् । स्यमोः प्रत्ययोः स्थाने ह्रस्वन्यादेरिति ह्रस्वादेशाभावो बाहुलकादेव । इमे कर्त्र्यौ इमे कर्तृणी वा अन्यामन्यामन्यदन्यद्वा भोजनं कारयतः ॥ ननु अन्योन्यं परस्परमित्यादौ केवलपूर्वपदविभक्तीनां स्यादेशविधानस्य चरितार्थत्वमस्ति । 'अन्योऽन्यसंसक्तमहस्त्रियामम्' इति । अन्योन्याश्रय इति । परस्पराक्षिसादृश्यमिति । अदृष्टपरस्परैरित्यादौ समासप्रत्ययोरित्यनेन पूर्वपदविभक्तीनां स्यादेशस्य कथं लुग् न स्यादिति चेदत्राहुः । बाहुलकात्समासविषये पूर्वपदविभक्तीनां स्यादेशस्य लुग् न भवतीत्यर्थः ॥ १३ ॥

( त० ) दलद्वये इत्यादि ॥ दलद्वये आबभावः आपः अभावः अन्योऽन्यं परस्परमित्यत्र दलद्वयेऽपि आप् प्राप्तः स नेत्यर्थः । अन्योऽन्यमित्यत्र ह्रस्वन्यादेरिति ह्रः प्राप्तः स नेत्यर्थः । अन्योन्याश्रय इत्यत्र समासे सेर्लुक् नेत्यर्थः ॥ १३ ॥

(अकृच्छ्रे प्रियसुखयोर्वा द्वित्वम्) प्रियप्रियेण ददाति प्रियेण वा । सुखसुखेन ददाति सुखेन वा । अतिप्रियमपि वस्त्वनायासेन ददातीत्यर्थः(ख) १४

( सु० ) अकृच्छ्रे प्रियसुखयोर्वा द्वित्वम् ॥ अनयोर्द्वित्वं समासवच्च वा स्यात् ॥ द्विवचने समासवद्भावात् स्यादिलुकि कृते पुनः कृत्तद्धितसमासाश्चेत्यनेन स्यादिः ॥१४॥

---

( क ) दलद्वय इत्यादि । दलद्वये आब्भावः । आपः अभावः । अन्योन्यं परस्परमित्यत्र दलद्वयेऽपि आप् प्राप्तः स नेत्यर्थः । अन्योन्यमित्यत्र ह्रस्वन्यादेरिति ह्रः प्राप्तः स नेत्यर्थः । अन्योन्याश्रय इत्यत्र समासे सेर्लुक् नेत्यर्थः ।

( ख ) अकृच्छ्रे इति । कृच्छ्रं कष्टम् । अकृच्छ्रमनायासः । तस्मिन् वर्तमानयोः प्रियसुख इत्यनयोर्द्वे वा स्तः ।

( यथास्वे यथायथम् ) यथाशब्दस्य द्वित्वं क्लीबत्वं च भवति ॥ यथास्वमिति वीप्सायामव्ययीभावः । यो य आत्मा यच्चात्मीयं तद्यथास्वम् । यथायथं ज्ञाता । यथास्वभावमित्यर्थः । यथात्मीयमिति वा(क) ॥ १५ ॥

( सु० ) यथास्वे यथायथम् ॥ यथास्वे इति स्वं स्वमिति यथास्वम् । वीप्सार्थेऽव्ययीभावः । यो य आत्मेत्यादि । "स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने" इत्युक्तत्वादात्मीययोरपि स्वशब्दवाच्यत्वमस्ति । आत्मात्मीययोरर्थयोर्विषयानस्य यथाशब्दस्य द्वित्वं नपुंसकत्वं च भवति । नपुंसकत्वान्नपुंसकस्येति ह्रस्वः । यथायथं ज्ञातेत्यत्र कर्तृकार्ययोरक्तादाविस्यनेन कर्मणि षष्ठी न । तृन्प्रत्ययस्य क्तादिषु गणनात् । "आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च" इत्यमरोक्तत्वात् यथायथम् यथास्वभावमर्थः ॥ १९ ॥

( द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु ) एष्वर्थेषु द्विशब्दस्य द्विर्वचनं पूर्वपदस्याम्भावोऽत्वं चोत्तरपदस्य नपुंसकत्वं च निपात्यते(ख)॥ तत्र रहस्यं द्वन्द्वशब्दस्य वाच्यम् । इतरे तु विषयभूताः ॥ द्वन्द्वं मन्त्रयते रहस्यमित्यर्थः ॥ मर्यादा स्थित्यनतिक्रमः । आचतुरं हीमे पशवो द्वन्द्वं मिथुनायन्ते । माता पुत्रेण मिथुनं गच्छति । पौत्रेण प्रपौत्रेणापीति मर्यादार्थः ॥ व्युत्क्रमणं पृथगवस्थानम् ॥ द्वन्द्वं व्युत्क्रान्तः । द्विवर्गसम्बन्धेन पृथगवस्थितः ॥ द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति ॥ द्वन्द्वं संकर्षणवासुदेवौ ॥ अभिव्यक्तौ साहचर्येणेत्यर्थः ॥ चार्थे द्वन्द्व इति निपातनात्पुंस्त्वमपि ॥ १६ ॥

( सु० ) द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु ॥ एष्वर्थेषु द्विशब्दस्य द्वित्वं समासत्वमेकवद्भावश्च भवति ॥ तथाहि । द्वि औ द्वि औ इति स्थिते समासवद्भावात् विभक्तिलुकि कृते पूर्वपदावयवेकारस्याम्भावः उत्तरपदावयवेकारस्यात्वं क्लीबत्वैकवद्भावौ च निपातनात् । एकवद्भावादतोऽमित्यमादेशे द्वन्द्वमिति ॥ रहसि निर्वृत्तमिति रहस्यम् । द्वन्द्वं मन्त्रयते । द्वौ द्वौ भूत्वा मन्त्रयते इत्यर्थः ॥ एतदेव द्विरहस्यम् ॥ मार्यादायां यथा । चतुरो मर्यादीकृत्येति आचतुरम् । अव्ययीभावे टप्रत्ययः । चतुर्शब्दोऽत्र चतुर्णां पूरणेऽस्ति । आचतुर्थादित्यर्थः । 'स्त्रीपुंसौ मिथुनं द्वन्द्वं युग्मं तु युगलं युगम्' इत्यमरः ॥ मिथुनमिवाचरन्तीति मिथुनायन्ते ॥ यज्ञपात्रप्रयोगे यथा । पात्राणि द्वन्द्वं प्रयुनक्ति । आसादयतीत्यर्थः ॥ 'संकर्षणः सीरपाणिः' इति 'वासुदेवस्त्रिविक्रमः' इति चामरः ॥ अभिव्यक्तौ तु द्विशब्दस्य स्वार्थे द्वित्वमेकवद्भावादिकं तु पूर्ववदेव ॥ १६ ॥

(शेषा निपात्याः कत्यादयः)का संख्या येषां ते कति । दाविकः ।

---

( क ) वीप्सायामिति । कार्त्स्न्येन सम्बन्धो वीप्सा । स्वशब्दार्थगतकार्त्स्न्ये द्योत्ये यथाशब्दस्य स्वशब्देनाव्ययीभाव इत्यर्थः

( ख ) अत्वमिति । उत्तरपदस्य अकारोऽन्तादेश इत्यर्थः।

शांशपः । दात्यौहः । दार्घसत्रः । आयसः इति ॥१७॥ द्विरुक्तप्रक्रिया ॥१९॥

इति श्रीरामाश्रमाचार्यविरचितायां सिद्धान्तचन्द्रिकायां पूर्वार्द्धं सम्पूर्णम् ॥

( सु० ) शेषा निपात्याः कत्यादयः ॥ कत्यादयः शब्दा निपात्यन्ते संख्याप्रमाणे कर्तव्ये ॥ यः प्रश्नस्तत्र वर्तमानात् किम्शब्दाद्वा डतिप्रत्ययः । पक्षे वतुः । का संख्या येषां ते डतेरति जसो लुक् । कति । कियन्तः ॥ देविका शिंशपादित्यवाड्दीर्घसूत्रश्रेयसां पञ्चानां वृद्धौ प्राप्तायामादेः स्वरस्यात्वं निपात्यते ञिति णिति च ॥ देविकायां भवो दाविकः । 'देविकायां सरय्वां च भवेद् दाविकसारवौ' इत्यमरः ॥ अण् ॥ शिंशपाया विकारः शांशपश्चमसः । अण् ॥ दित्यौहोऽयं दात्यौहः । वाहो वौ इत्यौत्वम् । आत्वं निपातनात् । अण् ॥ दीर्घसत्रे भवः दार्घसत्रः। अण् ॥ श्रेयसि भवः आयसः अण् ॥१७॥

इति द्विरुक्तप्रक्रिया ॥ १९ ॥

श्रीमत्पावकवर्यभक्तिविनया विख्यातकीर्तिप्रभा
राजेन्द्रैः परिपूजिताः सुकृतिनः पुंभाववाग्देवताः ।
मन्तारो जगतां पति गुणगणैर्विभ्राजमानाः सनत्
संवेगादियुजो जयन्तु सततं षट्शास्त्रविद्याविदः ॥ १ ॥
तेषां शिष्यः सदानन्दस्तदनुग्रहभूषितः ।
सिद्धान्तचन्द्रिकावृत्तिं पूर्वार्द्धेऽकरोदिमाम् ॥ २ ॥

इति श्रीसिद्धान्तचन्द्रिकाव्याख्यायां सदानन्दकृतौ पूर्वार्द्धं समाप्तिमगात् ॥

( त० ) तद्धितप्रत्ययानामनन्तत्वात्कार्त्स्न्येनाभिधातुमशक्यत्वादनुक्तसिद्ध्यर्थमाह-शेषा इति ॥ उक्तेभ्योऽन्ये शेषाः । निपातनात्साधवो निपात्याः ॥ किमः संख्यापरिप्रश्ने डतिः ॥ दाविक इति ॥ देविकायां भव इति विग्रहः । कारकादित्यण् । एकारस्यात्वं निपात्यते ॥ शांशप इति ॥ शिंशपाया विकारः । अत्राप्यादेः स्वरस्यात्वं निपात्यते ॥ दात्यौह इति ॥ दित्यौहोऽयमिति विग्रहः । इदमर्थेऽण् । अत्राप्यादेरात्वं निपात्यते । प्रकृतिस्तु दित्यवाह इति । तत्र वाहो वौ इति वा इत्यस्यौत्वम् ॥ दीर्घसत्रे भवः दार्घसत्रः । अत्रापि कारकादित्यण् । आदिस्वरस्यात्वं निपात्यते ॥ आयस इति॥ श्रेयसि भव इति विग्रहः । अत्राप्यादिस्वरस्यात्वं निपात्यते ॥ १७ ॥

श्रीनायकरपौत्रेण लोकेशकरशर्मणा । कृतायामिह टीकायां द्विरुक्तव्याकृतिर्गता ॥ १ ॥
सिद्धान्तचन्द्रिकाव्याख्या या त्वियं तत्त्वदीपिका । तत्पूर्वार्धमभूत्पूर्णं तेन तुष्यतु पार्वती।२।

इति श्रीलोकेशकरविरचितायां तत्त्वदीपिकायां सिद्धान्तचन्द्रिकाव्याख्यायां पूर्वार्धं समाप्तम् ॥

---

## इति सिद्धान्तचन्द्रिकायाः पूर्वार्धं समाप्तम् ॥

---

नाना टीकां समालोच्य गुरूणां विमलां गिरम् ।
स्मृत्वा चक्रधरां नाम्ना विदधौ टिप्पणीमिमाम् ।
इति श्रीकवितार्किकवैयाकरण-श्रीनवकिशोरकरकृतौ चक्रधराख्यटिप्पण्यां तद्धितप्रकरणं समाप्तम्

श्रीगणेशाय नमः।

# अव्ययं चिद्घनं ध्यात्वा व्ययं नानाविभूतिभिः। ग्रथ्यतेऽव्ययमालेयं सुखार्थज्ञानदायिका ॥ १ ॥

| अव्ययानि, | अर्थाः |
|---|---|
| अ | अभावभेदाप्रधान्येषत्सादृश्यविरोधेषु। |
| अकस्मात् | अकारणं, हठात्। |
| अग्रतस् | प्रथमे, सम्मुखे। |
| अघोस् | भोः, सम्बोधने। |
| अङ्ग | भोः, सम्बोधने पुनरर्थे च। |
| अचिरात् | शीघ्रम्। |
| अञ्जसा | शीघ्रम्, तत्त्वं च। |
| अट्ट | उच्चशब्दे। |
| अतस् | अतएव। |
| अतीव | अतिशयः, अधिकम्। |
| अत्र | अस्मिन्। |
| अथ | मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येषु। |
| अथकिम् | स्वीकारे। |
| अथो | मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येषु अधिकारप्रतिज्ञासमुच्चयेषु च। |
| अद्धा | सत्यं, यथार्थम्। |
| अद्य | अस्मिन् दिने, इदानीम्। |
| अधरात् | नीचार्थे। |
| अधरेण | नीचार्थे। |
| अधस् | नीचार्थं, निम्नार्थे च। |
| अधस्तात् | ,, ,, |
| अधुना | इदानीम्। |
| अनुपदम् | तदनन्तरम्। |
| अन्ततस् | शेषार्थे, न्यूनकल्पे च। |
| अन्तर् | मध्ये शेषे, अन्तःकरणे च। |
| अन्तरा | व्यतिरेकेण, मध्ये। |
| अन्तरेण | विना। |
| अन्यत् | अन्यप्रकारम्। |
| अन्यतरेद्युस् | द्वयोर्म , एकदिने। |
| अन्यतस् | अन्यत्र, अन्यप्रकारेण |
| अन्यत्र | अन्यस्थाने, अन्यविषये। |
| अन्यथा | अन्येन प्रकारेण। |
| अन्यदा | अन्यस्मिन् समये। |
| अन्येद्युस् | अस्मिन्नूदिवसे। |
| अपरेद्युस् | अपरदिने। |
| अभितस् | सर्वस्यां दिशि समीपे। |

| अव्ययानि, | अर्थाः। |
|---|---|
| अमा | सहार्थे चन्द्रकलायाश्च। |
| अमुत्र | परलोके। |
| अयि | कोमलसम्बोधने प्रश्ने च। |
| अये | सम्बोधने स्मरणे च। |
| अरे | नीचसम्बोधने। |
| अरे रे | ,, ,, |
| अर्वाक् | पूर्वे, पश्चात्, वक्रार्थे च। |
| अलम् | व्यर्थसमर्थयोः, भूषणे च। |
| अवश्यम् | निश्चये। |
| असि | त्वमर्थे। |
| अस्तम् | अदर्शने, नाशे। |
| अस्ति | भवत्यर्थे, तिष्ठत्यर्थे च। |
| अस्तु | भवतु। |
| अस्मि | अहमर्थे। |
| अहह | खेदे, आश्चर्ये च। |
| अहहा | ,, ,, |
| अहो | आश्चर्य। |
| अहोवत | कारुण्ये। |
| अह्नाय | शीघ्रम्, तत्क्षणात्। |
| अति | निर्भर पूजने च। |
| अद्यत्वे | इदानीमित्यर्थे। |
| अनुकम् | वितर्के। |
| अधरेद्युः | अधरस्मिन् अहनि। |
| अन्यतरेद्युः | अन्यतरस्मिन्नहनि। |
| अन्यत् | अन्यार्थे। |
| अन्ततः | शेषतः। |
| अनेहा | विस्मयविषादशोकजुगुप्सार्तिषु। |
| अवदत्तम् | उपसर्गप्रतिरूपकोऽयम्। |
| अवस | बाह्ये। |
| अभीक्ष्णम् | पौनः पुन्ये। |
| अहम् | सुबन्तप्रतिरूपकमव्ययमहंकारे। |
| अम् | शीघ्रेऽल्पे च। |
| अह | पूजायाम्। |
| अहम् | अस्मदर्थे। |
| आ | स्मरणे, पर्वस्तार्थं च। |
| आम् | स्मरणे, स्वीकारे च। |

अव्ययानि, अर्थाः।
आः—विरक्तौ पीडायां च।
आरात्—दूरे समीपे च।
आविस्-प्रकाशे।
आहो—सन्देहे, प्रश्ने च।
आहोस्वित्-प्रश्ने, सन्देहे च
आकिम्—
आत—शंकायाम।
आतः—इतोऽपीत्यर्थे।
आदह—उपक्रमहिंसाकुत्सनेषु।
आय—प्रतिबन्धे।
आशु—शीघ्रे।
आसि—वाक्यालंकारयोः।
आस—बभूवेत्यर्थे।
आह—उवाचेत्यर्थे।
इ—खेदेकोपे च।
इतरेद्युस्—अन्यदिने।
इति—इदमर्थं, शेषे अतएव अतःकारणात्।
इतिह—परम्परायाम्।
इत्थम्—अनेनप्रकारेण।
इदानीं—अधुना।
इव-सहशार्थे, वाक्यालंकारे च।
इस्—खेदे, विस्मये च।
इतः—अस्मादिति।
इद्धा—प्राकाश्ये।
ई—भर्त्सने।
ईषत्—स्वल्पे।
उ—वितर्क, पादपूरणे च।
उच्चकैस् उच्चे, अधिके च।
उच्चैस्— „ „
उताे-संशये, समुच्चये च।
उताहो—प्रश्ने, विकल्पे च।
उताहोस्वित्—„ „
उत्तरतस्—उत्तरे।
उत्तरात्—„
उत्तरेण—„
उत्तरेद्युस्—परदिने।
उदक्—उत्तरस्यांदिशि।
उपजोषम्—, उपयोषम्— } आनन्दे सन्तोषे च।
उपांशु-निर्जने।
उभयतस्-उभयतः, उभयेन प्रकारेण।

अव्ययानि, अर्थाः
उभयेद्युस्-उभयदिने।
उम्—क्रोधे, प्रतिज्ञायाम्।
उररी-स्वीकारे।
उरी-„
उलरी-„
उ-कोपमोक्षौ।
उम् संतर्कसम्बोधनपूरणेषु।
उत्तराहि-उत्तरस्यां दिशि दूरे।
उत्तरा-उत्तरस्यां दिशे। दूरे
ऊर्ध्वात्-ऊर्ध्वमुर्ध्वो वा।
उपधा-भेदे।
उपांशु-अप्रकाशोच्चारणरहस्ययोः।
उपरिष्टात्—, उपरि— } ऊर्ध्वमिति।
उभयेद्यः-उभयस्मिन्नहनि।
उषा-रात्रेरवसाने।
उषा-रात्रौ।
ऊ-दुःखे प्रश्ने च।
ऊम्-गर्वे, क्रोधे च।
ऊररी-स्वीकारे।
ऊररी—„
ऊरी—„
ऊर्ध्वम्। उपरि।
ऋते-विना।
ॠ-गानसमूहे।
ऋ-गानसमूहे।
ऋधक्-सत्ये।
लृ-गानसमूहे।
लॄ-गानसमूहे।
ए-स्मरणे, सम्बोधने च।
एकदा-एकस्मिन् समये।
एतर्हि-इदानीं। अतःकारणात्।
एव-अवधारणे।
एवम्-अनेनप्रकारेण, सम्मता च।
एकपदे-अकस्मादित्यर्थे।
एततः-एतस्मादिति।
ऐषम-वर्त्तमानेऽब्दे।
ऐ-स्मरणे, सम्बोधने च।
ओ-स्मरणे, सम्बोने च।
ओम्—प्रणवे, स्वीकारे च।
औ—सम्बोधने।
कच्चित्-प्रश्ने, इच्छाप्रकाशे च।

| अव्ययानि | अर्थाः |
|---|---|
| कति | कियति । |
| कथम् | केनप्रकारेण । |
| कदा | कस्मिन् समये । |
| कदाचन | कस्मिंचित् समये । |
| कदाचित् | ,, |
| कम् | वारिमूर्द्धनिन्दासुखेषु । |
| किमु | वितर्के । |
| कर्हि | कदाचित् । |
| कर्हिचित् | कस्मिंश्चित्समये । |
| कामम् | यथेष्टं पर्याप्तम् । |
| किञ्च | अपि च । |
| किञ्चन | किञ्चित्, स्वल्पे, कियदंशे च । |
| किञ्चित् | स्वल्पे । |
| किन्तु | परन्तु । |
| किन्नु | संशये । |
| किम् | कुत्सितार्थे प्रश्ने, वितर्के च । |
| किम् | सम्भावनायां वितर्के च । |
| किमुत | ,, ,, |
| किस्वित् | ,, ,, |
| किम्वा | अथवा । |
| किल | निश्चितार्थे, अलीके सम्भावनायां वार्त्तायां च । |
| कु | कुत्सिते, पापे, मन्दे, अमङ्गले च । |
| कुतः | कस्मात्स्थानात् किंनिमित्तम् । |
| कुत्र | कस्मिन्स्थाने, कस्मिन्विषये |
| कुत्रचित् | कस्मिंश्चित्स्थाने । |
| कुवित् | भूयर्थे प्रशंसायां च । |
| कुह | कस्मिंश्चित्यर्थे । |
| कूपत् | प्रश्न प्रशंसायां च । |
| क्षमा | क्षान्ती |
| केशाकेशि | केशेषुकेशेषु गृहीत्वायद्युद्धम् । |
| क्व | कुत्र । |
| क्वचन | कुत्र, कस्मिंश्चित्समये । |
| खलु | निषेधवाक्यालङ्कारेषु निश्चये च । |
| च | समुच्चयान्वाचयेतरेतरयोगसमाहारेषु । |
| चटु | प्रियवाक्ये । |
| चन | साकल्ये । |
| चाटु | प्रियवाक्ये । |
| चतुर्धा | चतुः प्रकारेण । |
| चिरम्, चिरेण, चिराय, चिररात्राय, चिरात्, चिरस्य, चिरे | चिरकाले, बहुकालेऽर्थे च । |
| चेत् | यदि |
| चण् | यद्यर्थे । |
| चित् | साकल्ये । |
| ज्योक् | कालभूयस्त्वे प्रश्ने शीघ्रार्थे संप्रत्यर्थे च । |
| जातु | कदाचित् । |
| जोषम् | तूष्णीम्, सुखे च । |
| झटिति | शीघ्रम् |
| तत् | तस्मात्, तन्निमित्तम् । |
| ततस् | तस्माद्धेतोः, तदनन्तरम् । |
| तत्र | तस्मिन् स्थाने । |
| तथा | तेन प्रकारेण । |
| तदा | तस्मिन् समये । |
| तदानीम् | ,, |
| तावत् | साकल्ये, वाक्यालंकारे तत्परिमिते च |
| तिरस् | अप्रकाशार्थे, वक्रार्थे च । |
| तिर्यक् | वा—वक्रार्थे, पार्श्वे च |
| तु | किन्तु, पुनः । |
| तुष्णीम् | मौनिनि, स्थिरे च । |
| त्रेधा, त्रैधम् | त्रिप्रकारम् । |
| तर्हि | तस्मिन् काले । |
| तत्र भवान्, ततो भवान् | पूजार्थे । |
| तथाहि | निदर्शने । |
| तुम | तुंकारे । |
| तूर्णम् | शीघ्रे । |
| तूष्णीकम् | मौने । |
| त्वै | विशेषवितर्कयोः । |
| दक्षिणतस्, दक्षिणात्, दक्षिणेन | दक्षिणस्यां दिशि । |
| दण्डादण्डि | दण्डेन दण्डेन आक्रम्य यद् युद्धम् । |
| दिवा | दिने । |
| दिष्ट्या | भाग्येन । |
| द्राक् | शीघ्रम् । |
| द्विधा, द्वेधा | द्विवारं, द्विप्रकारम् । |

अव्ययानि, अर्थाः

दक्षिणाहि— }
दक्षिणा— } दक्षिणस्यां दिशि दूरे ।

दिष्टया-आनन्दे ।

दुःषमम्-निगर्ह्यें

दुष्टु-निन्दायाम् ।

दोषा-रात्रौ

द्वै-वितर्के ।

धिक्—निन्दायाम् ।

न— }
नञ्— } निषेधे ।

नक्तम्—रात्रौ ।

नमस्—नमस्कारे, प्रमाणे च ।

नवतिशस्—नवतिवारम् ।

नहि— }
ना— } निषेधे ।

नाना—बहुविधेषु ।

नाम—आख्यायां, सम्भावनायां, प्रकाशे ।

नास्ति—न भवतीत्यर्थे ।

निकषा—निकटे ।

नितराम्—अवश्यम् अत्यन्तम् ।

नित्यदा—सर्वदा ।

निचकैस्— }
निचैस्— } क्षुद्रे, स्वल्पे, निम्ने च ।

नूनम्—निश्चये वितर्के च ।

नो—निषेधे ।

न्यक्—नीचे घृण्ये च ।

नकिः-वर्जने ।

ननु-विरोधोक्तौ प्रश्ने च ।

निःषमम्-गर्ह्ये ।

नह-प्रत्यारम्भे ।

नेत-शङ्कायां प्रतिषेधविचारसमुच्चयेषु च ।

न्वौ—विशेषवितर्कयोः ।

पञ्चधा—पञ्चभिः प्रकारैः ।

परम्—केवलम् , अनन्तरम् ।

परश्वस्- }
परःश्वस्- } आगामिनि दिने ।

पराक्—वक्रे कुटिले च ।

परितस् । चतुर्दिशि ।

परत्-

परेद्यवि- }
परेद्युस्- } परदिने

अव्ययानि, अर्थाः

पश्चात्-परे, पश्चिमे च ।

पुनःपुनर्-वारंवारम् ।

पुनर्-अप्रथमे ।

पुरतस्-सम्मुखे ।

पुरस्— }
पुरस्तात— } पूर्वस्यां दिशि, प्रथमे, सम्मुखे च ।

पुरा-पूर्वास्मन् ।काले, निकटे च ।

पूर्वेण-पूर्वस्यां दिशि, पूर्वकाले च ।

पूर्वेद्युस्-पूर्वदिने ।

पृथक्-भिन्ने ।

पृष्ठतस्-पश्चाद्भागे ।

प्रकामम्-यथेष्टं, यथेच्छम् ।

प्रगे-प्रत्यूषे ।

प्रत्यक्-पश्चात् , पूर्वे,पश्चिमे च ।

प्रत्यहम्-प्रतिदिनम् ।

प्रत्यूत वैपरीत्ये ।

प्रसह्य—हाठत् , बलपूर्वकम् ।

प्राक्—पूर्वम् ।

प्रातर्—प्रभाते ।

प्रादुस्—व्यक्तार्थे ।

प्राध्वम्—आनुकूल्ये ।

प्रायशस्—बाहुल्यरूपेण ।

प्रायस्—बाहुल्येन ।

प्राह्णे—प्रभात ।

प्रेत्य—परलोके, परकाले च ।

परमम्—मते ।

परारी—पूर्वतरे वर्षे ( गतवर्षात्पूर्ववर्षे )

परुत्—पूर्वाब्दे ( गतेवर्षे ) ।

पशु—सम्यगर्थे ।

प्रवाहुकम्—समानकाले । ऊर्ध्वार्थे च । प्रवाहिकेति पाठान्तरम् ।

प्रताम्--ग्लानौ ।

प्रशान्—समानार्थे ।

प्रतान्--विस्तारे ।

पाट्--सम्बोधने ।

प्याट्—संबोधने ।

फट्--यन्त्रांशविशेषे, अस्त्रमन्त्रे, अनुकारशब्दे च ।

बहुशस्—बहुरूपेण, बाहुल्यरूपेण ।

ब्रूहि—प्रश्नानुज्ञावसरेषु ।

बलवत्—निर्भरे ।

बहुतः—बहोरित्यर्थे ।

अव्ययानि, अर्थाः ।

भगोस्—सम्बोधने, भगवन् ।
भूयस्—बाहुल्ये, वारंवारम् ।
भूरि—बहुशः, बहु ।
भूरिशस्—बहुवारं, बहुशः ।
भृशम्—अतिशयः, बहुवारम् ।
भो— }
भोस्— } सम्बोधने ।
भुवः—अन्तरिक्षे ।
भूः—पृथिव्याम् ।
मङ्क्षु—शीघ्रमतिशयश्च ।
मत्—मदीयार्थे ।
मनाक्—ईषत् ।
मम—ममतायाम् ।
मा—निषेधे, निन्दायाञ्च ।
मिथस्—परस्परं, रहसि च ।
मिथ्या—निष्फले, असत्ये च ।
मुधा—वृथा, निष्फले ।
मुहुस्—वारं वारम् ।
मृषा—मिथ्या ।
माङ्—निषेधाकाङ्क्षयोः ।
मध्यतः—मध्ये ।
माकिः—वर्जने ।
माकीम्—वर्जने ।
मास्म—वारणे ।
मिथु—द्वावित्यर्थे ।
मिथो—रहसहार्थयोः ।
यत्—यस्माद्धेतोः, यथाविधे च ।
यतः— ,, ,,
यत्र—यस्मिन् स्थाने ।
यथा—येन प्रकारेण ।
यथातथम्— }
यथायथम्— }
यथार्हम्— } यथायोग्ये यथार्थे च ।
यथावत्— }
यथास्वम्— }
यदा—यस्मिन् समये ।
यदि—सम्भावनायां
यावत्—साकल्ये, परिमाणे, पर्यन्ते च ।
युगपद्—एककालीनम् ।
यथाकथा च—अनादरे ।
यथार्थम्—सत्ये ।
यर्हि—यस्मिन् काले ।

अव्ययानि, अर्थाः

युत्र—कुत्सायाम् ।
रहस्—निर्जने ।
रहसि—एकान्ते ।
रे—नीचामन्त्रणे ।
रै करोति—ददातीत्यर्थः ।
रात्रौ—निशि ।
बत—खेदे, विस्मये, हर्षे च ।
वरम्—उत्कृष्टे ।
वषट्— }
वौषट्— } आहुतिमन्त्रे ।
बहिस्—बहिर्भागे ।
वा—विकल्पे, वितर्के, उपमायां, वाक्यपूरणे च ।
विधिवत्—यथाविधि ।
विना—व्यतिरेकेण ।
विषक— }
विष्वक— } सर्वत्र, सर्वव्यापिनी ।
व—इवार्थे—पादपूरणे च ।
वत्—तुल्ये ।
वदि—कृष्णपक्षे ।
वरम्—ईषत् ।
वा—निश्चये ।
वाम्—युवामित्यर्थे ।
विहायसा—वियदर्थे ।
विषु—ननार्थे ।
वृथा—व्यर्थके ।
वै—श्लोकचरणपूर्णतायाम् ।
पादपूरणे, विशेषे निश्चये च ।
शनैः—क्रमशः ।
शश्वत्—निरन्तरं, वारंवारम् ।
शान्तं—निवृत्तं, वारितम् ।
श्रत्—श्रद्धायाम् ।
श्वस्—आगामिनि दिने ।
शम्—सुखे ।
शंवट्—अन्तःकरणे, आभिमुख्ये च ।
शीघ्रम्—तूर्णम् ।
शुकम्—शीघ्रे ।
श्रौषट्—देवहविर्दाने ।
संवत्—वत्सरे ।
सकृत्—एकवारम् ।
सत्रा—सहितम् ।
सदा—सर्वदा ।

अव्ययानि, अर्थाः

समस—तत्क्षणे।
समन्ततम्—सर्वतः।
समन्तात्—चतुर्दिशि, सर्वतः।
समम्—सह, एकदा।
समया—समीपे।
समुपयोषम्—हर्षे, भाग्ये च।
सम्यक्—सत्यम्, सर्वतोभावेन, साकल्येन।
सर्वतस्—सर्वप्रकारेण, सर्वस्यां दिशि।
सर्वत्र—सर्वस्थाने।
सर्वदा—सर्वस्मिन् समये।
सर्वथा—सर्वप्रकारेण।
सहसा—हठात्, अतर्कितम्।
साकम्—सह।
साक्षात्—प्रत्यक्षम्
साचि—वक्रे, नते च।
सामि—क्रियदंशे।
साम्प्रतम्—उचितं, सम्प्रति।
सायं—सन्ध्याकाले।
सार्द्धम्—सह।
सुचिरं—बहुकालम्।
सुतराम्—अगत्या, अवश्यम्, अत्यन्तम्।
स्थाने—उचितम्।
स्म—अतीते।
स्वधा—मन्त्रविशेषे।
स्वयम्—निजे, आत्मावच्छेदे।
स्वर्—स्वर्गे।
स्वस्ति—शुभे, मङ्गले।
स्वाहा—मन्त्रविशेषे।
स्वित्—प्रश्ने, वितर्के संशये च।
सम्प्रति—अस्मिन्काले।
स्म—अतीते पादपूरणे च।
सह—सहार्थे।
सना—नित्ये।
सनत्—नित्ये।
सत्यम्—प्रश्नप्रतिषेधसत्येषु।
संप्रति—इदानीमित्यर्थे।
सपदि—द्रुते। तत्काले
सनुतर्—अन्तर्द्धाने।

अव्ययानि, अर्थाः।

सनात्—नित्ये।
साय—सायें।
सु—पूजायां भृशार्थानुमतिकृच्छ्रसमृद्धिषु। निभरच।
सुष्ठु—निर्भरे प्रशंसायां च।
सुदि—शुक्लपक्षे।
स्वधा—पितृदाने।
स्राक्—झटित्यर्थे।
ह—सम्बोधने, पादपूरणे च प्रसिद्धौ।
हंहो—सम्बोधने।
हंजे—नीचां प्रति सम्बोधने।
हंडे—चेटिं प्रति सम्बोधने।
हन्त—खेदे, हर्षे च।
हला—सखिं प्रति सम्बोधने।
हा—विषादे, शोके, पीडायां च।
हिरुक्—भिन्ने मध्ये च।
हीहि—, ही—, हाहा— हास्ये हास्यशब्दे, आह्लादे च।
हुम्—, हूम्— स्वीकारे।
हे—, हहे—, हो— सम्बोधने।
है—सम्बोधने
ह्यस्—परदिने।
हिरुक्—सामीप्ये।
हि—पादपूरणे। यतः यस्मात्कारणादित्यर्थे।
हाहा—विस्मयहास्ययोः।
हुंम—भर्त्सने।
हो—विचारे।
हेतौ—निमित्ते।
हम्—विचारे।
हलम्—प्रतिषेधविवादयोः।
हन्त—हर्षे, विषादे, अनुकम्पायां, वाक्यारम्भे च।

प्रादय उपसर्गा अव्ययशब्दाः। एतदतिरिक्तान्यप्यव्ययानि सन्ति। इहातिप्रसिद्धानि प्रदर्शितानि।

इति श्रीनवकिशोरकरप्रथिताऽव्ययमाला।

॥ श्रीः ॥

# सिद्धान्तचन्द्रिकापूर्वार्धसूत्रसूची ।

इति सिद्धान्तचन्द्रिकापूर्वार्धगतसूत्राणां सूची समाप्ता ।